निषेधात् नान्तरालं प्राची किंतु प्रसिद्धैव । तिथितत्त्वे देवीपुराणे-
घट्टे प्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव विसर्जनमतः परम् ॥ हरो महे
पाणिः पिनाकधृक् । शिवः पशुपतिश्चैव महादेव इति क्रमः ॥' स्क
ण्यपि च पत्राणि श्रीवृक्षस्य निवेदयेत् ॥' तत्रैव भविष्ये–'धत्तूरकैश्च
पूजयते नरः । स गोलक्षफलं प्राप्य शिवलोके महीयते ॥' योगिनीतं
मल्लकं च सूर्यागारे च शंखकम् । दुर्गागारे वंशवाद्यं मधूरीं न च वादयेत् ॥'
स्कान्दे–'स्पृष्ट्वा रुद्रस्य निर्माल्यं वाससा आप्लुतः शुचिः ॥' प्रयो
क्रियासारे–'मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् । अंगु
निर्माल्यमपनोदयेत् ॥ अपनीतं च निर्माल्यं चण्डेशाय निवेदयेत् ।
लिंगं सदा कुर्वीत पूजकः" ॥ शूलपाणौ लैङ्गे–'वरं प्राणपरित्यागः
कर्तनम् । न चैवापूज्य भुञ्जीत शिवलिंगे महेश्वरम् ॥ सूतके मृतके चै
शिवपूजनम्' तिथितत्त्वे लैङ्गे–'विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमा
तोपि महादेवो न स्यात्तस्य फलप्रदः ॥ तस्मान्मृदापि कर्तव्यं ललाटे वै

रुद्राक्षधारणे विशेषः शिवरहस्ये–'एकवक्त्रः शिवः साक्षाद्ब्रह्महत
अवध्यत्वं प्रतिस्रोतो बह्निस्तम्भं करोति च ॥ द्विवक्त्रो हरगौरी स्याद्गोवधा
त्रिवक्त्रो ह्यग्निजन्माथ पापराशिं प्रणाशयेत् ॥ चतुर्वक्त्रः स्वयं ब्रह्मा नरहत
पञ्चवक्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥ षड्वक्त्रस्तु गुहो ज्ञेयो भ्रूणहत्
सप्तवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः ॥ एकादशमुखो रुद्रो नानायज्ञप
शास्यस्तथादित्यः सर्वरोगनिबर्हणः ॥ त्रयोदशमुखः कामः सर्वकामफलप्र
स्यः श्रीकण्ठो वंशोद्धारकरः परः ॥ इति ॥

तथा 'विनामन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः । स याति नरका
दिन्द्राश्चतुर्दश ॥ पञ्चामृतं पञ्चगव्यं स्नानकाले प्रयोजयेत् । रुद्रा
मन्त्रं पञ्चाक्षरं तथा ॥ त्र्यम्बकादिकमन्त्रं च तथा तत्र प्रयोजयेत् ॥
ॐ हैं अघोरतर ॐ ह्रौं ह्रां नमस्ते रुद्ररूप हैंस्वाहा । अनेनाभिमंत्र्य धार
'अष्टोत्तरशतं कार्या चतुःपञ्चाशदेव वा । सप्तविंशतिमाना वा ततो हीनाध
प्रजापतिः–'मोक्षार्थी पञ्चविंशत्या धनार्थी त्रिंशता जपेत् । पुत्रार्थी प
दश्याभिचारके ॥ सप्तविंशतिरुद्राक्षमालया देहसंस्थया । यत्करोति
कोटिगुणं भवेत् ॥ यो ददाति द्विजेभ्यश्च रुद्राक्षं भुवि सन्मुखम् । तस्

कलाभिर्नयनयुगकृते एकमेकं शिखायां वक्षस्यष्टाधिकं यः कलयति शतकं स स्व
नीलकण्ठः ॥'

हेमाद्रौ शिवधर्मे-'स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः । पलानां द्वे सह
तु महास्नानं प्रकीर्तितम् ॥ पञ्चविंशत्पलं लिङ्गे अभ्यङ्गं कारयेदथ । शिवस्य सर्पि
स्नानं प्रोक्तं पलशतेन च ॥ तावता मधुना चैव दध्ना चैव ततः पुनः । तावतैव च क्षीरे
गव्येनैव भवेत्ततः ॥ भूयः सार्द्धसहस्रेण पलानामैक्षवेण च । रसेन कारयेत्स्नानं भक्त्य
चोष्णांबुना ततः ॥' त्रिष्ण्वादौ तु स्कान्दे-'क्षीराद्दशगुणं दध्ना घृतेनैव दशोत्तरम्
घृताद्दशगुणं क्षौद्रं क्षौद्राच्चैक्षवजं तथा ॥' ब्राह्मे-'देवानां प्रतिमा यत्र घृताभ्यङ्गक्षम
भवेत् । पलानि तत्र देयानि श्रद्धया पञ्चविंशतिः ॥' इदं क्रोडीकृताभिप्रायेण । तत्रै
संग्रहे-'विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम् ॥ पादोदकं प्रसादं च लिङ्गे चण्डे
श्वराय तु' ॥

पञ्चायतनसंनिवेशमाह बोपदेवः पदार्थादर्शश्च-'शंभौ[1] मध्यगते हरीनहरभूदेव्यो
हरौ शंकरेभास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः । देव्यां विष्णुहरेभवक्त्र
रवयो लम्बोदरेऽजेश्वरेनाम्बाः शंकरभागतोऽतिसुखदा व्यस्तास्तु हानिप्रदाः ॥' शंकर
भागत ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः । अत्र दिक्स्वरूपमुक्तं प्रयोगपारि
जाते मन्त्रशास्त्रे-'देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् । तदादि परिवाराणा
मङ्गाद्यावरणस्थितिः ॥' तत्र क्रमः पाद्मे-'रविर्विनायकश्चण्डी ईशो विष्णुस्तु पञ्चमः
अनुक्रमेण पूज्यन्ते व्युत्क्रमे तु महद्भयम् ॥' तथा-'पूज्यपूजकयोर्मध्ये प्राची प्रोक्त
विचक्षणैः ॥'

अथ केशवादिमूर्तयः बोपदेवः-'केविंगोवादापुहपेप्रजाच्युकृमप्रात्रिना । वाधो
नृहसानिश्रीपाशाञ्चगे विगपे चपे' ॥ अत्र केविगावित्याद्यैः केशव-
विष्ण्वादिचतुर्विंशतिमूर्तयोऽभिधीयन्ते । शात् शंखात् चगे चक्रगदे
ज्ञेये इत्यर्थः । शिष्टे भुजे पद्मं त्वर्थतः सिद्धम् । अत्र दक्षिणोर्ध्वऽकरक्रमेण ज्ञेयम् ।
'दक्षिणोऽधःकरक्रमात' इति हेमाद्रौ वचनात् । तेन हेमाद्रिणा संवादः । विश-
ब्देन विपरीतं गचे इत्यर्थः । अत्रापिशादित्यनुवृत्तिः । शंखाद्गदाचक्रे इत्यर्थः । गपे
इत्यत्रापि शादनुवर्तते । शंखाद्गदापद्मे इत्यर्थः । विपरीते पद्मगदे इत्यत्रापि शंखाज्ज्ञेये ।

(margin: केशवादिमूर्तयः ।)

[1]-शंभौ मध्यगते सति विष्णुसूर्यगणेशदेव्यः, विष्णौ मध्यगे शिवगणेशसूर्यदेव्यः सूर्ये ...

चपे चक्रपद्मे । शंखाब्जक्रपद्मे इत्यर्थः । वि इत्यत्रापि पद्मचक्रे इति । तेन चक्रगदे इत
मूर्तयः । गपे इत्यष्टौ मूर्तयः । चपे इत्यत्र च अत्र मूलं हेमाद्रौ ज्ञेयम् ॥

**अथ बौधायनसूत्रम् । त्रैविक्रमीं चानुस्मृत्य लिंगार्चाप्रतिष्ठोच्यते**

लिङ्गार्चाप्रतिष्ठा।

'यजमानः पूर्वोक्तकाले पूर्वेद्युः दशद्वादशषोडशान्यतर हस्तं म कृत्वाग्नेये हस्तमात्रं चतुरस्रं कुण्डस्थण्डिलं वा पूर्वतोः हस्तम वेदीं नैर्ऋते वास्तुमण्डलमध्ये वेदीं तदुपरि सर्वतोभद्रं कृत्वा प्राणानायम्यास्यां देवस्य सान्निध्यसिद्धयर्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षय्यसुखकामोऽमुकमूर्तिप्र करिष्ये इति संकल्प्य । गणेशपूजापुण्याहवाचनमातृकापूजननान्दीश्राद्धानि कृ चार्यं चतुर ऋत्विजश्च वृत्वा वस्त्राद्यैः पूजयेत् । **अथाचार्यः** । यदत्र संस्थि मिति सर्षपान् विकीर्यापोहिष्ठेति कुशोदकेन भूमिं प्रोक्ष्य । देवा आयांतु, यातुध अपयान्तु । विष्णो देवयजनं रक्षस्वेति भूमौ प्रादेशं कृत्वाऽस्मत्कृततुलापद्धतिमा मण्डपप्रतिष्ठां कृत्वाऽकृत्वा वा पूर्वरात्रौ हिरण्योपधानं देवं पञ्चगव्यहिरण्ययवदूर्वा त्थपलाशपर्णान्युदकुम्भे प्रक्षिप्य ताभिरद्भिरापोहिष्ठेति तिसृभिर्हिरण्यवर्णा इति चतस पवमानः सुवर्चन इत्यनुवाकेनाभिषिच्य व्याहृतिभिरिदंविष्णुरिति फलयवदूर्वाः स रक्षोहणमितिहस्ते कंकणं बद्ध्वा वाससाच्छाद्य । अवतेहेड उदुत्तममिति जलेधि येत्' । इदं **बौधायनोक्तम्** ॥

ततश्चलंलिंगार्चायां वा अत्राग्निं प्रतिष्ठाप्य गोक्षीरनीवारचरुं कृत्वा विष्णुश्चेत् रमपि श्रपयित्वाज्यभागान्ते पलाशोदुम्बराश्वत्थशम्यपामार्गसमिद्भिः आज्येन च तिलैर्वा प्रत्येकमष्टाविंशतिमष्टौ वाहुतीर्लोकपालमूर्तिपतिभ्यो हुत्वा स्थाप्य देवमन पूर्वोक्तसामित्तिलनैवारचर्वाज्यैरष्टसहस्रमष्टशतमष्टाविंशतिं वा हुत्वा अग्निर्यजुर्भिरित्य

---

१—'शंखचक्रगदेताब्जैः केशवः सूर्यसप्रभः । इतो युतः । कंजकम्बुचक्रगदायुतो विष्णू रविप्र गदाब्जशंखचक्रेतो गोविन्दो भास्करद्युतिः । वामनोऽरिगदापद्मशंखेतो रविसुप्रभः । दामोदरः शं दापद्मचक्री रविप्रभः ॥ पद्मशंखगदाचक्रसूर्याभः पुरुषोत्तमः । सारिपद्मशंखगदो हृषीकेशोऽर्कसुप्र उद्यदर्कनिभोपेंद्रो गदाचक्राब्जशंखयुक् । प्रद्युम्नो रविभः शंखगदाब्जारिधरो विभुः । जनार्दनश्च खगदाब्जेतो रविप्रभः । सूर्याभोऽच्युतनामाऽब्जचक्रशंखगदायुधः । उद्यदर्कनिभः कृष्णो गदाप शंखभृत् । सशंखाब्जगदाश्चक्रः सूर्याभो मधुसूदनः । माधवश्चक्रशंखाब्जगदेतो रविसुप्रभः । विक्रमो गदाचक्रशंखपद्मो रविप्रभः । नारायणः साब्जगदाशंखचक्रो रविप्रभः । शंखचक्रपद

न दशाहुतीर्जुहुयात् । प्रतिद्रव्यहोमान्ते देवं पादनाभिशिरःसु स्पृशेत् । आ
होमे चोत्तरतः सजलकुम्भे संपातान्नयेत् । तेषां मन्त्राः । इन्द्रायेन्दो इतीन्द्रस
स्योनेति पृथिवीमूर्तेः । अघोरेभ्य इति तत्पतेः शर्वस्य । अग्न आयाहीत्यग्नेः । अ
दूतमित्यग्निमूर्तेः । नमः शर्वाय च पशुपतये चेति पशुपतेः । यमाय सोमं यमस
असिहिवीरिति यजमानमूर्तेः । स्तुहि श्रुतं तत्पतेः उग्रस्य । असुन्वन्तन्निर्ऋतेः । अ
ष्णेन सूर्यमूर्तेः ॥ यो रुद्रो अग्नौ इति तत्पते रुद्रस्य । इमं मे वरुणस्य । शंनो
जलमूर्तेः । नमो भवायेति भवस्य । आनो नियुद्भिरिति वायोः । वात आवातु वायुम
तमीशानं तत्पतेरीशानस्य । आप्यायस्वेति कुबेरस्य । वयं सोमेति सोममूर्तेः । त
रुषाय महादेवस्य । अभित्वा ईशानस्य । आदित्प्रत्नस्येत्याकाशस्य । नम उग्राय
तत्पतेर्भीमस्य । ततो देवस्य पादौ स्पृशेत् । एवं द्वितीये हुत्वा नाभिं तृतीये मध्यं च
उरः पञ्चमे शिरः स्पृष्ट्वा प्रतिपर्यायं संपातजलेन देवम् अभिषिञ्चेत् । ततः स्वि
दादिहोमशेषं समाप्यार्चां शोधयेत् । स्थिरलिंगार्चादौ तु नेदानीमग्निस्थाप
मादि कार्यम् ॥

ततो देवं नत्वा-'स्वागतं देवदेवेश विश्वरूप नमोस्तु ते । शुद्धेपि त्वदधिष्ठाने
कुर्मः सहस्व ताम्' ॥ इति संप्रार्थ्य । उत्तिष्ठ ब्रह्मणस्पते इति सऋत्विगुत्थाप्य
कृतेग्न्युत्तारणे । अधुना वा कार्यम् । 'अग्निः सप्तिम्' इति सूक्तमग्निपदहीनं प
तत्सहितं पुनः पठेत् । एवमष्टसहस्रमष्टशतमष्टाविंशतिं वा पठन् जलं पातयेत् । त
द्वादशवारं मृदा जलेन च प्रक्षाल्य मन्त्रवत् पञ्चगव्यं कृत्वा 'पयः पृथिव्याम
राजानम्' इति च । 'संस्नाप्य' य आप्यायस्व, दधिक्राव्णः, तेजोसि, मधुवाता,
गौरिति पञ्चामृतैः संस्नाप्य । लिङ्गं चेत् 'नमस्ते रुद्र मन्यवे' इत्यष्टाभिः संस्ना
घृतेनाभ्यज्योद्वर्तनेनोद्वर्त्योष्णोदकेन प्रक्षाल्य गन्धं दत्त्वा संपातोदकेनाभिषिच्य स
श्चतुर्भिः कुम्भैरापोहिष्ठेति त्रिभिः 'आकलशेषु' इति च प्रत्येकम् 'समुद्रज्येष्ठा'
चतुर्भिः 'आकलशेषु' इति च मिलितैः संस्नाप्यौदुम्बरादिपीठेर्चामुपवेश्य परितो
सजलकुम्भान् संस्थाप्य तेषु गंधपुष्पदूर्वाः क्षिप्त्वाद्ये सप्तमृदः द्वितीये पुष्करपर्ण
विकंकताश्मन्तकत्वचः पल्लवांश्च, तृतीयादिषु सप्तधान्यं पञ्चरत्नफलपुष्पाणि कु
गोरोचनसम्पातोदकगन्धफलसर्वौषधीः क्षिप्त्वा । क्रमेण 'आपोहिष्ठा' इति ति
'हिरण्यवर्णा' इति चतुर्भिः । पवमानानुकेन चाभिषिच्यैककुम्भे शमीपलाशवट
बिल्वाश्वत्थविकंकतपनसाम्रशिरीषोदुम्बराणां पल्लवान् कषायांश्च क्षिप्त्वा । 'अश्व

भगवते तुभ्यं शिवाय हरये नमः । हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः' ॥ इति च
दक्षिणसव्ये देवनेत्रे मन्त्रावृत्त्या लिखेत् । 'अञ्जन्ति त्वा' इत्यञ्जनेन मधुना वाङ्क्त
तु 'देवस्य त्वा' इति मध्वाज्यशर्कराभिरङ्क्त्वा तेनैवाञ्जनेन पुनरञ्जयेत् । अत्रानज्मीति
शेषः । स्थिरलिङ्गे तु स्वर्णसूच्या गन्धेन । 'ॐ नमो भगवते रुद्राय हिरण्यरेतसे परा
परमात्मने विश्वरूपायोमाप्रियाय नमः' । इत्यङ्क्त्वाञ्जनादिनाञ्जयेत् । तत आदर्शभ
क्ष्यादि दर्शयेत् । ततः कर्ता आचार्याय गामृत्विग्भ्यश्च दक्षिणां दद्यात् । अथाचार्य
प्रत्यृचमादौ प्रणवं वदन् पुरुषसूक्तेन स्तुत्वा वंशपात्रे पञ्चवर्णौदनेन देवस्य नीराज
कारयित्वा रुद्राय चतुष्पथादौ दद्यात् । मन्त्रस्तु 'ॐ नमो रुद्राय सर्वभूताधिपत
दीप्तशूलधरायोमादयिताय विश्वाधिपतये रुद्राय वै नमोनमः ।' शिवमगर्हितं कर्मास
स्वाहेति । अश्वत्थपर्णे भूतेभ्यो नम इति । केचिदेतद्रात्रौ स्थिरप्रतिष्ठायामिच्छन्ति ।

अथाचार्यः सर्वतोभद्रे देवानावाहयेत् ॥ मध्ये ब्रह्माणम् । पूर्वादिदि
इन्द्रादिलोकपालान् ईशानेन्द्राद्यन्तरालेषु वसून् । रुद्रान् आदित्यान् । अश्विनौ । वि
श्वान् देवान् । पितॄन् । नागान् । स्कन्दवृषौ । ब्रह्मेशानाद्यन्तरालेषु दक्षविष्णुदुर्गास्वध
कारमृत्युरोगान् । समुद्रान् । सरितः । मरुतः । गणाधिपं चेति ॥ मध्ये एव पृथि
मेरुं संस्थाप्य देवं चावाह्य । प्रागादि वज्रं, शक्तिं, दण्डं, खड्गं, पाशं, अंकुशं, ग
शूलम् । तद्बाह्ये गौतमं, भरद्वाजं, विश्वामित्रं, कश्यपं, जमदग्निं, वसिष्ठम्, अत्रिम्, अरुंध
च । तद्बाह्ये । नवग्रहान् । तद्बाह्ये । ऐन्द्रीं, कौमारीं, ब्राह्मीं, वाराहीं, चामुण्डां वैष्णव
माहेश्वरीं, वैनायकीमिति । एता नामभिरावाह्य संपूज्य अर्चायां देवं तन्मन्त्रेणावा
मण्डलमध्येर्चा सुप्रतिष्ठो भवेति निवेश्य संपूज्य वह्नौ मण्डलदेवतानां नामभिस्तिल
ज्येन दशदशाहुतीर्हुत्वा पुष्पाञ्जलिं समर्प्य 'नमोमहत्०' इति देवं नत्वा मण्डला
त्तरतः स्वस्तिके मञ्चकं तदुपशय्यां कृत्वा 'उत्तिष्ठ' इति देवमुत्थाप्य मङ्गलघो
शय्यायां देवमारोप्य पुरुषसूक्तोत्तरनारायणाभ्यां स्तुत्वा देवे न्यासं कुर्यात्
तद्यथा–पुरुषात्मने नमः । प्राणात्मने न० प्रकृतितत्त्वाय० बुद्धितत्त्वाय० अ
कारतत्त्वाय० मनस्तत्त्वाय० इति सर्वांगे । प्रकृतितत्त्वाय० बुद्धितत्त्वाय० हृदि । श
तत्त्वाय० शिरसि । स्पर्शतत्त्वाय० त्वचि । रूपतत्त्वाय० हृदि । एवं हृद्येव रसगन्धश्र
त्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थपृथिव्यप्तेजोवाय्वाकाशसत्त्वरजस्तमोदेहतत्त्व
नि विन्यसेत् । ततः पुरुषसूक्तस्याद्यमृग्द्वयं करयोः । तदुत्तरं जान्वोः । तदुत्तरं कट्यो
'तं यज्ञम्' इति तिस्रः नाभिहृत्कण्ठेषु । 'तस्माद्श्वा' इतिद्वयं बाह्वोः । 'ब्राह्मणोऽ

मण्डलशय्ययोरन्तराले न गन्तव्यमिति प्रैषं दत्त्वा स्विष्टकृदादि होमशेषं
लदेवताभ्यो नामभिः पायसेन चरुणा वा बलिं दद्यात् । नीवारचरुशे
म् । नेदं स्थिरप्रतिष्ठायाम् ।

स्थिरलिङ्गार्चादौ त्वयं विशेषः–'अग्निस्थापनहोमवर्ज्यं सर्वं
इदानीमग्निस्थापनं कृत्वा पूर्वोक्तहोमं कुर्यात् । नात्र नैवारश्चरुः
क्तहोमं कृत्वा पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वा इदं विष्णुरिति पादौ स
एव हुत्वा विष्णोर्नुकम्' इति नाभिं स्पृष्ट्वा पुनस्ता एव हुत्वा । 'अतो
स्पृष्ट्वा पुनस्ता एव हुत्वा पुरुषसूक्तेन सर्वांगं स्पृशेत् । स्थिरलिंगं चेद
पूर्वोक्तसमिदाज्यतिलाहुतीर्हुत्वा । 'या त इषुः' इत्यनुवाकान्तं 'द्रापे'
इत्यनुवाकाभ्यां च प्रत्यृचमाज्यं हुत्वा 'सर्वो वै रुद्रः' इति
पुनस्ता एव हुत्वा 'कद्रुद्राय' इति मध्यम् । पुनस्ता एव हुत्वा । 'नमो
इत्यग्रम् । पुनस्ता एव हुत्वा सर्वरुद्रेण सर्वाङ्गं स्पृशेत् । ततो 'धामन्त' इ
जुहुयान्न वा । एवमधिवासनं कृत्वा परेद्युः सद्यो वा पीठिकां स्नापयित
इत्यावाह्य । 'अदितिर्द्यौः' इति स्तुत्वा । 'ह्रीं नमः' इति संपूज्य तेनैव पूण
'उत्तिष्ठ ब्रह्मणस्पते' इति देवमुत्थाप्य पुष्पाञ्जलिं दत्त्वा । पुरुषसूक्तेन स्तुत
इत्युत्थाप्य 'कनिक्रदत्' इति सूक्तेन विष्णुं 'सद्योजातम्' इति पञ्चानुवाकैर्लि
पीठिकायां इन्द्रादिनामभिरष्टरत्नानि क्षिप्त्वा सप्तधान्यरूप्यवृषभमनःशिल
पायसेन संलिप्य प्रणवेनाङ्गन्यासं कृत्वा सुवर्णशलाकामन्तरितां कृत्वा 'सु
तिष्ठ परमेश्वर' इत्युक्त्वा 'अतो देवा, इति विष्णुं रुद्रेण च लिङ्गं स्थाप
प्राणप्रतिष्ठा ।

चलार्चादौ त्वधिवासनान्ते परेद्युः 'उत्तिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य
रनारायणाभ्यां स्तुत्वा घृते व्रीहिचरुं कृत्वा तद्देवतामन्त्रेण दशाहुतीर्हुत्वा
हुयात् । अग्नये स्वाहा । सोमाय स्वाहा । धन्वन्तरये स्वाहा । कुह्वै स्वाह
स्वाहा । प्रजापतये स्वाहा । परमेष्ठिने स्वाहा । ब्रह्मणे स्वाहा । अग्नये स्वा
स्वाहा । अग्नयेन्नादाय स्वाहा । अग्नयेन्नपतये स्वाहा । प्रजापतये स्वाहा
देवेभ्यः स्वाहा । सर्वेभ्यो देवेभ्यः स्वाहा । भूर्भुवः स्वाहा । अग्नये स्विष्टकृते
'सप्त ते' पुनस्त्वेत्याभ्यां पूर्णाहुतिः । ततः आचार्यो 'या ओषधीः' इति
समर्प्य । संपातोदकं देवमन्त्रेण शतवारमभिमन्त्र्य तेनैवाभिषिञ्चेत् । त
देवमुत्थाप्य । 'विश्वतश्चक्षुः' [illegible]

'प्रतितिष्ठ परमेश्वर' इति पुष्पाञ्जलिं निवेद्य सच्चिदानन्दं ब्रह्मैव भक्तानुग्रहाय
विग्रहं करचरणाद्यवयविनं शंखचक्राद्यायुधवन्तं निजवाहनाद्युपेतं निजहृत्कमले
सर्वलोकसाक्षिणमणीयांसं 'परमेष्ठ्यसि परमां श्रियं गमय' इति मन्त्रेण पुष्पा
गतं विभाव्याऽर्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात् ।

**यथा**–प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः । ऋग्यजुःसामानि च्छन्
क्रियामयवपुः । प्राणाख्या देवता । आं बीजम् । क्रों शक्तिः । प्राणप्रतिष्ठाय
योगः । ततः ऋष्यादीन् क्रमेण शिरोमुखहृदयगुह्यपादेषु विन्यस्य । ॐ कं खं
अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः । ॐ चं छं जं झं ञं इं शब्
रूपरसगन्धात्मने ईं शिरसे स्वाहा । ॐ टं ठं डं ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्व
त्मने ऊं शिखायै वषट् । ॐ तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं
हुम् । ॐ पं फं बं भं मं ॐ वचनादानविहरणोत्सर्गानन्दात्मने ॐ नेत्रत्रयाय
ॐ यं रं लं वं शं षं सं हं ळं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फ
आत्मनि देवे च कृत्वा देवं स्पृष्ट्वा जपेत् । ओं आं ह्रीं क्रों अं यं रं लं वं शं
देवस्य प्राणा इह प्राणाः । ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः देवस्य ज
स्थितः।ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः देवस्य सर्वेन्द्रियाणि। ॐ आं ह्रीं क्रों अ
वं शं षं सं हं सः।देवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य स्वस्तये सुखेन
तिष्ठन्तु स्वाहेति । ततोऽर्चाहृद्यङ्गुष्ठं दत्त्वा जपेत् । 'अस्यै प्राणाः प्रतिष्ठन्तु अस्यै
क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन' ॥ इति । ततः प्रणवेन
सजीवं ध्यात्वा 'ध्रुवा द्यौः' इति त्र्यृचं जप्त्वा कर्णे गायत्रीं देवमन्त्रं च जप्त्वा पु
नोपस्थाय पादनाभिशिरस्सु स्पृष्ट्वा । 'इहैवैधि' इति त्रिर्जपेत् । ततः कर्ता
देवदेवेश मद्भाग्यात्त्वमिहागतः । प्राकृतं त्वमदृष्ट्वा मां बालवत् परिपालय ॥
कामसिद्ध्यर्थं स्थिरो भव शुभाय नः । सांनिध्यं तु सदा देव स्वार्चायां परिकल्
यावच्चन्द्रावनीसूर्यास्तिष्ठन्त्यप्रतिघातिनः । तावत्त्वयात्र देवेश स्थेयं भक्तानुकम्
भगवन् देवदेवेश त्वं पिता सर्व देहिनाम् । येन रूपेण भगवंस्त्वया व्याप्तं चरा
तेन रूपेण देवेश स्वार्चायां सन्निधौ भव ॥' इति नमेत् । एतदन्तं सर्वदेवानां
देवमन्त्रश्च मूलमन्त्रो वैदिको वा ग्राह्यः ।

**अथाचार्यः कर्ता वा लिङ्गमर्चां वा** ॐ भूः पुरुषमावाहयामि । ॐभुव
मावाहयामि । ॐसुवः पुरुषमावाहयामि । ॐभूर्भुवः सुवः पुरुषमावाहयामीत्य

्।अर्घ्या इत्यर्घ्यम्। ततो वेदमन्त्रैः संस्नाप्य 'इदं विष्णुः' इति विष्णौ । 'नमो नीलग्रीवाय' इति लिङ्गे प्रतिसरं विसृस्य वस्त्रं यज्ञोपवीतं च दत्त्वा। 'इमे गन्धाः दिव्याः सर्वगन्धैरलंकृताः । पूता ब्रह्मपवित्रेण पूताः सूर्यस्य रश्मिभिः ॥' इति ्। 'इमे माल्याः शुभा दिव्याः सर्वमाल्यैरलंकृताः ॥' पूता इत्यादिमाल्यम्। ुष्पाः शुभा' इत्यादि पुष्पम्। 'वनस्पतिरसोद्भूतो गन्धाढ्यो धूप उत्तमः। आघ्रे- र्वदेवानां धूपोयं प्रतिगृह्यताम् ॥' प्रतिगृह्णात्वित्यादि धूपम् । 'ज्योतिः शुक्रं च ।देवानां सततं प्रियः। प्रज्योतिः सर्वभूतानां दीपोयं प्रतिगृह्यताम् ॥' इति दीपं । 'विष्णो संकर्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्द- हरिश्रीकृष्णेति द्वादशनामभिः केशवादिद्वादशनामभिर्वा पुष्पाणि समर्प्य । तैरेव कृत्वा। पायसगुडौदनचित्रौदनानि । 'पवित्रं ते विततम्' इति नैवेद्यकृसरं पूर्वोक्त- भिर्हुत्वा तेनैव शार्ङ्गिणे श्रियै सरस्वत्यै विष्णवे इति हुत्वा । 'विष्णोर्नुकं वीर्याणि' य प्रियमभिपाथो' 'प्रतद्विष्णुस्तवते वीर्येण'। परो मात्रया तन्वावृधानः' । 'विचक्रमे ीमिषएतां०'। 'त्रिर्देवः पृथिवीमेष एतां०' । इति जुहुयात्। पुनः द्वादशनामभिश्चा- स्वाहेति जुहुयात्।

लिङ्गे तु दीपान्तं कृत्वा। भवाय० देवाय० शर्वाय० ईशानाय० पशुपतये०रुद्राय० य० भीमाय० महते देवाय नम इति पुष्पाणि दत्त्वा। तैरेव तर्पणं कृत्वा। 'पवित्रं' ति पायसं गुडौदनं च निवेद्य पूर्वोक्तनामभिः कृसरं हुत्वा। 'भवस्य देवस्य पत्न्यै ा' इत्याद्यष्टभिर्गुडौदनं हुत्वा। 'भवस्य देवस्य सुताय स्वाहेत्याद्यैर्हारिद्रौदनं हुत्वा'। बकं यजामहे०'। 'मानो महान्तमुत मानो०'। 'मानस्तोके तनये०' । 'आरात्ते मुतपुरुषघ्ने०' । 'विकिरिदविलोहित०'। 'सहस्राणि सहस्रशो' इति द्वादश एतैर्हुत्वा। ाय शंकराय सहमानाय शितिकण्ठाय कपर्दिने ताम्राय अरुणाय अपगुरमाणाय यवाहवे सस्पिंजराय बभ्लुशाय हिरण्याय' इति च जुहुयात् । ततः स्विष्टकृदादि- शेषं समाप्य। पूर्वोक्तसर्वहविर्भिर्विष्णवे लिङ्गाय वा बलिं दद्यात्।

न्त्रस्तु–'त्वामेकमाद्यं पुरुषं पुरातनं नारायणं विश्वसृजं यजामहे । त्वमेव यज्ञो तो विधेयस्त्वमात्मनात्मन् प्रतिगृह्णीष्व हव्यम्' ॥ इति। लिङ्गे तु नारायणपदे रुद्रं मिति वदेत्। ततोऽश्वत्थपर्णे भूर्भुवःस्वरोमिति हुतशेषं निधाय प्रदक्षिणीकृत्य विश्वभुजे मने परमात्मने नमः इति नत्वा आचार्याय शतं तदर्धं तदर्धं द्वादश तिस्र एकां

**अथ पुनःप्रतिष्ठा** । तामधिकृत्य **हयशीर्षपञ्चरात्रे**–'चाण्डालमद्यसंस्पर्शदूषि वह्निनाथवा ॥ अपुण्यजनसंस्पृष्टा विप्रक्षतजदूषिता ॥' संस्कार्येति शेष

पुनः प्रतिष्ठा ।

**पदार्थादर्शे ब्राह्मे**–'खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते । या हीने पशुस्पृष्टे पतिते दुष्टभूमिषु ॥ अन्यमन्त्रार्चिते चैव पतिते स्पर्शदूषिते । दशस्वे नो चक्रुः सन्निधानं दिवौकसः ॥' यागः पूजा । पशुर्गर्दभादिः । **पञ्चरात्रे**–'खंडि स्फुटिता दग्धा यस्मादर्चा भयावहा । तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नरः अर्चाभङ्गादावुपवासः कार्यः । 'न राज्ञो विप्लवेश्नीयात्सुरार्चाविप्लवे तथा ।' तथा विष् धर्मोक्तेः । **सिद्धान्तशेखरे**–'चौरचण्डालपतितश्वोदक्यास्पर्शने ... ' शवाद्युप चैव प्रतिष्ठां पुनराचरेत् ॥' **पञ्चरात्रे**–'अङ्गादङ्गादिसन्धाने प्रतिष्ठां पुनराचरेत् जलाधिवासविहितनेत्रोन्मीलनवर्जिताम् ॥' **शुद्धिविवेके विष्णुः**–'द्रव्यवत् कृत चानां देवतार्चानां भूयः प्रतिष्ठापनेन शुद्धिः' इति । अर्चाः प्रतिमाः । तद्द्रव्यस्य ताम्र देरुक्तशौचं कृत्वा पुनः प्रतिष्ठां कुर्यादित्यर्थः । **स्मृत्यर्थसारेप्येवम्** ।

**तद्विधिर्बौधायनसूत्रे**–'पूर्वप्रतिष्ठितस्याबुद्धिपूर्वमेकरात्रं द्विरात्रमेकमासं द्विम वार्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शने पूर्वोक्तकाले पुण्याहं वाचयित्वा युग्मान् ब्रा णान् भोजयित्वा निशायां जलाधिवासं कृत्वा श्वोभूते कलशपूर्णेन पञ्चगव्येन तत्तन्म स्नापयित्वाऽन्यं कलशं शुद्धोदकेनापूर्य तस्मिन्नवरत्नानि प्रक्षिप्य तं कलशं तत्तद्गा त्र्याष्टसहस्रमष्टशतमष्टाविंशतिवारं वाभिमन्त्र्य तेनोदकेन देवं स्नापयेत्ततः शुद्धोदकेन स्ना दष्टसहस्रमष्टशतमष्टाविंशतिं वा पुरुषसूक्तेन मूलमन्त्रेण च ततः पुष्पाणि दत्त्वा यथासंभ मर्चयित्वा गुडौदनं निवेदयेत्' इति । बुद्धिपूर्वं तु विच्छेदे पूर्वोक्तां प्रतिष्ठां पुनः कुर्या पूर्वोक्तविष्णुवचनात् । इदं मलमासशुक्रास्तादावपि कार्यमिति **मदनरत्ने हेमा** च देवार्चा प्रासादभेदने तु **शूलपाणौ काश्यपः**–'वापीकूपाराम तुसभातडागवप्रदेवतायतनभेदेन प्रायश्चित्तं चतस्र आज्याहुतीर्जुहुया

पुनः प्रतिष्ठाविधिः ।

इदं विष्णुर्मानस्तोके विष्णोः कर्माणि पादोस्येति यां देवतामुत्सादयति तस्यै देव **ब्राह्मणान् भोजयेत्**' इति । **शंखलिखितौ**–'प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभ तत्समुत्थानं प्रतिसंस्कारोऽष्टशतं च निपातितानाम्' इति । समुत्थानं प्रतिक्रिया प्र संस्कारः पुनः प्रतिष्ठा । अष्टशतं पणा दंडश्चेत्यर्थः ।

**अथ जीर्णोद्धारः**–स च लिङ्गादौ दग्धे भग्ने चलिते वा कार्यः । अयं चान

प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वा इन्द्रादिभ्यो नाम्ना बलिं दत्त्वा जीर्णदेवं प्र
संपूज्य ब्रह्मादिमण्डलदेवतानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत्। 'जीर्णभग्नमिदं चैव
दोषावहं नृणाम्। अस्योद्धारे कृते शांतिः शास्त्रेऽस्मिन् कथिता त्वया ॥ जीर्णोद्धारवि
च नृपराष्ट्रहितावहम् । तदधस्तिष्ठतां देव प्रहरामि तवाज्ञया ॥' इति ततः क्षीराज्य
दूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रं शतं वा देवमन्त्रेण हुत्वाऽङ्गानां दशांशेन लिङ्गचाल
सहस्रं शतं वा पायसेन हुत्वा लिङ्गं प्रार्थयेत् । 'लिङ्गरूपं समागत्य येनेदं समधिष्ठि
यायास्त्वं संमितं स्थानं संत्यज्यैव शिवाज्ञया ॥ अत्र स्थाने च या विद्या सर्वविद्ये
र्युता । शिवेन सह संतिष्ठ' इति मंत्रितजलेनाभिषिच्य विसर्जयेत् । ततोऽस्त्रमनि
खनित्रेण खात्वा लिङ्गमादाय नद्यादौ वामदेवेन लिङ्गं प्रणवेन मूर्तिं क्षिपेत्। दारुजं तु
ऽभ्यज्याघोरेण दहेत्। हेमरत्नादिमयं तु दग्धं चलितं वा पुनस्तत्रैव स्थापयेत्। ततः श
अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत्। 'भगवन् भूतभव्येश लोकनाथ जगत्पते। जीर्ण
समुद्धारः कृतस्तवाज्ञया मया ॥ अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले ।
श्चित्ताय देवेश अघोरास्त्रेण तर्पितम् ॥ ज्ञानतोऽज्ञानतो वापि यथोक्तं न
यदि । तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादान्महेश्वर' ॥ इति ततो यजमानः प्रार्थये
'गोविप्रशिल्पिभूतानामाचार्यस्य च यज्वनः । शान्तिर्भवतु देवेश अच्छिद्रं जाय
दम् ॥' मूर्तौ तु विशेषः—'त्वत्प्रसादेन निर्विघ्नं देहं निर्मापयत्यसौ । वासं
सुरश्रेष्ठ तावत्त्वं चालपके गृहे ॥ वसन् क्लेशं सहित्वेह मूर्तिं वै तव पूर्ववत् । याव
यते भक्तः कुरु तस्य च वाञ्छितम्' ॥ इति । ततो नवां मूर्तिं लिङ्गं वा कृत्वोक्तवि
स्थापयेत् । मूलं त्वग्निपुराणे स्पष्टम् । इति जीर्णोद्धारः ॥

अथ तुलसीग्रहणम् । देवयाज्ञिककृते स्मृतिसारे—'वैधृतौ च व्यतीपाते
भार्गवभानुषु । पर्वद्वये च संक्रान्तौ द्वादश्यां सूतकद्वये । तुल
विचिन्वंति ते छिन्दन्ति हरेः शिरः ॥' विष्णुधर्मोत्तरे—'

तुलसीग्रहणम् ।

[illegible]ना दूर्वां तुलसीं द्वादशीं विना । जीवितस्य विनाशाय प्रविचिन्वीत धर्मवि
तथा—'संक्रान्तावर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः । यैश्छिन्नं तुलसीपत्रं तै
हरिमस्तकम् ॥' पाद्मे—'द्वादश्यां तुलसीपत्रं धात्रीपत्रं च कार्त्तिके । लुनाति
गच्छेन्निरयानतिगर्हितान् ॥' रुद्रयामले—'द्वादश्यां च दिवास्वापस्तुलस्यवचयस्
विष्णोश्चैव दिवास्नानं वर्जनीयं सदा बुधैः ॥' विष्णुधर्मे—'न छिन्द्यात्तुलसीं

अथ पुष्पादेः पर्युषितत्वम् । भार्गवार्चने भविष्ये–'प्रहरं तिष्ठते जाती वीरमहर्निशम् । तुलस्यां विल्वपत्रेषु सर्वेषु जलजेषु च । न [पर्यु]षितदोषोस्ति मालाकारगृहेपि च ॥' बृहन्नारदीये–'वर्ज्यं पर्यु[षितं] पुष्पं वर्ज्यं पर्युषितं जलम् । न वर्ज्यं तुलसीपत्रं न वर्ज्यं जाह्नवीजलम् ॥' तत्रैव पा[द्मे] 'तुलसी पर्युषिता नैव विल्वं तु त्रिदिनावधि । पद्मं पञ्चदिनात्त्याज्यं शेषं पर्यु[षितं] विदुः ॥' स्कान्दे–'पालाशं दिनमेकं तु पंकजं च दिनत्रयम् । पञ्चाहं विल्वपत्रं दशाहं तुलसीदलम् ॥' पदार्थादर्शे बोपदेवस्त्वन्यथाह–'विल्वापामार्गजातीतुल[सी]शमिशताकेतकीभृङ्गदूर्वामन्दाम्भोजाहिदर्भामुनितिलतगरब्रह्मकह्लारमल्ल्यः । च[...] श्वारातिकुम्भीदमनमरुवकाविल्वतोहानि शस्तास्त्रिंश ३० त्र्ये ३ का १ र्य ६ री[...] शो ११ दधि ४ निधि ९ वसु ८ भू १ भू १ यमा २ भूय एवम् ॥' अस्यार्थ[ः ...] शता शतावरी । मन्दः मन्दारः । अहिर्नागकेशरः । मुनिरगस्त्यः । अश्वार[िः] करवीरः । कुम्भी पाटलेति कैदेवनिघण्टुः । अरयः षट् । ईशा एकादश । [...] धयश्चत्वारः । निधयो नव । वसवोऽष्टौ । भूः एकः । यमो द्वौ । विल्वमारभ्या[...] पर्यन्तं गणयित्वा दर्शमारभ्य पुनस्त्रिंशदादिगणयेदित्यर्थः । एतद्दिनोत्तरं पर्युषि[...] नीत्यर्थः । टोडरानन्दे स्कान्दे दमनमुपक्रम्य–'तस्य माला भगवतः परमप्री[ति]कारिणी । शुष्का पर्युषिता वापि न दुष्टा भवति क्वचित् ॥' तिथितत्त्वे मात्स[्ये] 'विल्वपत्रं च माघ्यं च तमालामलकीदले । कह्लारं तुलसीं चैव पद्मं च मुनिपु[ष्प]कम् ॥ एतत् पर्युषितं न स्यात् कुशाश्च कलिकास्तथा ॥' स्मृतिसारावल्या[म्] 'जलजानां च सर्वेषां पत्राणामहतस्य च । कुशपुष्पस्य रजतसुवर्णकृतयोरपि ॥ [न] पर्युषितदोषोस्ति तीर्थतोयस्य चैव हि । मुकुलैर्नार्चयेद्देवं पंकजैर्जलजैर्विना' ॥

पुष्पादेः पर्युषितत्वम् ।

अथ शिवनिर्माल्यनिर्णयः । सिद्धान्तशेखरे–'धराहिरण्यगोरत्नताम्[्र...] प्यांशुकादिकान् । विहाय शेषं निर्माल्यं चण्डेशाय निवेदयेत्[...] अन्यदन्नादि पानीयं ताम्बूलं गन्धपुष्पकम् । दद्याच्चण्डाय निम[ाल्यं] शिवभक्तं तु सर्वशः ॥ आचार्यशिवचण्डानामाज्ञाभङ्गे तु लक्षकम् । धनस्य भक्षणे [...] पादोनं लक्षमीरितम् ॥ निर्माल्ये भक्षिते लक्षपादतः शुद्धिरीरिता । दानं [...] भक्षणसमं तदर्धं तदुपेक्षणे ॥ अकामाद्भक्षणे यद्वा निर्माल्यस्य जपेत्सुधीः । [...] पञ्चकसाहस्रं धर्मेण सहितं ततः ॥ कामतो भक्षणे दीक्षा प्रायश्चित्तं न चान्यतः [...]

शिवनिर्माल्यनिर्णयः ।

यति सत्तमः। तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकम् ॥ शालग्रामोद्भवे लिङ्गे
लिङ्गे स्वयंभुवि। रसलिङ्गे तथार्षे च सुप्रसिद्धप्रतिष्ठिते॥ हृदये चन्द्रकान्ते च स्व
ष्यादिनिर्मिते। शिवदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते॥' तथा–'बाणलिङ्गे स्व
चन्द्रकान्ते हृदि स्थिते। चान्द्रायणसमं ज्ञेयं शंभोर्नैवेद्यभक्षणम्॥ लिङ्गे स्व
बाणे रत्नजे रसनिर्मिते। सिद्धप्रतिष्ठिते चैव न चंडाधिकृतिर्भवेत्॥ यत्र चण्डाधि
स्ति तद्भोक्तव्यं न मानवैः। चण्डाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः'॥
क्रम्याम्–'बाणलिंगे च लोहे च सिद्धलिङ्गे स्वयंभुवि। प्रतिमासु च सर्वासु न
धिकृतो भवेत्' ॥ अत्र 'ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। तस्य
महच्छीघ्रं नाशयिष्ये महाव्रते॥' इति स्कान्दादशुचिना न ग्राह्यं शिवनिर्मा
किंतु स्नात्वेति स्मार्ताः। अनुपनीतेन ग्राह्यमिति श्रीदत्तः। शिवदीक्षाहीनैर्न ग्राह्य
शैवाः। तिथितत्त्वे हेमाद्रौ परिशिष्टे–'अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं
शालग्रामशिलासङ्गात्सर्वं याति पवित्रताम्॥' पञ्चायतनपूजायां तन्त्रेण च निवे
त्यर्थः। शिवपुराणे–'ये वीरभद्रशमिताः शिवभक्तिपराङ्मुखाः। शंभोरन्यत्र दे
भक्ता ये न दीक्षिताः॥ तेषामनर्हमीशस्य तत् प्रसादचतुष्टयम्॥' काशीखण्डे–
स्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः॥ एष जालंधरो वन्धः समस्तसुखवल्
तथा–'स्नापयित्वा विधानेन यो लिङ्गस्नपनोदकम्॥ त्रिः पिबेत्रिविधं पापं त
विनश्यति॥ लिङ्गस्नपनवार्भिर्यः कुर्यान्मूर्ध्न्यभिषेचनम्। गङ्गास्नानफलं तस्य ज
त्र विपाप्मनः'॥ इदं पूर्ववाक्यवशाद्विश्वेश्वरविषयमिति केचित्। काशीस्थपुराण
सर्वलिङ्गविषयम्। काशीखण्डे रत्नेश्वराख्याने तथैव दर्शनादित्यन्ये॥

अथ कृषिः। राजमार्तण्डः–'ऋक्षेषूत्तरपौष्णवैष्णवमघामूलानुराधाश्विनी
पत्यकराद्विदैवतगुरुप्रालेयपादेषु च। निर्दोषैर्वृषभैर्हलैश्च सुमन
भिरभ्यर्चितैर्दत्त्वा क्षेत्रपतेर्बलिं हलधरः क्षेत्रं ततः कर्षयेत्। प्राजे

षिनिर्णयः।

णोत्तरादितिमघामार्तण्डातिथ्याश्विनी पौष्णानुष्णमरीचयः शतभिषक्स्वाती
तथा। जीवार्केन्दुसितेन्दुनन्दनदिने लग्ने च सौम्योदये सस्यानां वपने तथैव लवने
स्तथा रोपणे॥' चण्डेश्वरः–हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये। स्थिरलग्ने
बीजं धार्यं ज्ञशुक्रयोः॥' 'ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ लेख
इमं मन्त्रं धान्यागारे निधापयेत्। सस्यवृद्धिं परां कुर्यात् पूजितं प्रतिपूजयेत्॥
दिङ्मुखगमनं गमनमभिनवासु नारीषु। व्ययमपि सस्यधनानां न बुधा बु
कुर्युः॥ शनिवारे च नो कार्यो धनधान्यव्ययो बुधैः॥'

मन्त्रिणि भृगौ प्रियसंगमाय मन्दे मलाय च नवाम्बरधारणं स्यात् ॥ रोहिणीगुरु
सूत्तरे या बिभर्ति नववस्त्रभूषणे। सा न योषिदवलंबते पतिं स्नानमाचरति वारुणेपि

**अथालंकारवलयादि।** **दैवज्ञवल्लभः**—'नासत्यपूषवसुभिः करपञ्चकेन मा
भौमगुरुदानवमन्त्रिवारे ॥ मुक्तासुवर्णमणिविद्रुमशंखदन्तरक्ता
णि विधृतानि भवन्ति सिद्धयै ॥' **ज्योतिर्निबन्धे**—'हस्ता
मृगपूषधनिष्ठयुक्ताचित्रोत्तरासु च पुनर्वसुरोहिणीषु । लग्ने स्थिरे रविसुतेन्दुजज
हेमादिधारणविधिः कथितो नराणाम् ॥' **तत्रैव श्रीपतिः**—'पौष्णाश्विनीवसुक
पञ्चकेषु कौसुम्भहेममणिविद्रुमकाचशंखाः । नार्या धृता सुतसुखार्थकरा भवन्ति ब्र
रादितिगुरुष्वसुखाय भर्तुः ॥' **तत्रैव**—'शंखादिवररत्नानि पुष्यादित्युत्तरासु
रोहिण्यां नैव गृह्णीत भर्तुर्जीवितकांक्षिणी ॥'

अलंकारवलयादिनिर्णयः ।

**अथ सूचीकर्म** । 'वासवादितिभत्वाष्ट्रमैत्रचन्द्राश्विनीषु च ।
कर्मतनुत्राणमेभिर्ऋक्षैः प्रशस्यते ॥'

सूचीकर्म ।

**अथ शय्या** । 'हस्तादिति ब्रह्मगुरूत्तराणि पौष्णाश्विमूलेन
त्रभानि । वारेषु जीवेन्दुसितेन्दुजानां शय्यासनारम्भणमुत्तमं स्य

शय्या ।

**अथ शस्त्रधारणम्** । 'पुष्ये चादितिचित्रपद्मतनये शक्रोत्तर
स्वातीवाजिविशाखमित्रसहिते भानौ गुरौ भार्गवे । कुम्भे व
वृषे मृगपतौ चेन्दौ शुभैर्वीक्षिते सन्नाहः शरखड्गकुन्तछुरिका धार्या नृपाणां हि

शस्त्रधारणम् ।

**अथ स्वामिसेवा** । **चण्डेश्वरः**—'रोहिण्युत्तरपौष्णेषु वसु
योरपि । सेवेत स्वामिनं भृत्यः शुभवारोदये तथा ॥' ज्य
र्निबन्धे—'दासीदासादिभृत्यानां कुर्यात्संग्रहणं बुधे । स्थिरलग्ने शुभैर्दृष्टे म
विशेषतः ॥'

स्वामिसेवा ।

**अथ गजाश्वदोलाः** । स एव—'पौष्णप्रजेशादितिभद्वयानि हस्त
कश्रवणोत्तराणि । दोलादिमातङ्गतुरंगमाणामारोहणेभीष्टफलप्रदा

गजाश्वदोलाः ।

**अथ नृत्यम्**—'हस्तः पुष्यो वासवं रोहिणी च ज्येष्ठा
वारुणं चोत्तराश्च । पूर्वाचार्यैः कीर्तितश्चक्रवर्ती नृत्यारम्भे शो
भवर्गः ॥

नृत्यम् ।

**अथ राजदर्शनम्** । **श्रीपतिः**—'मृगाश्विपुष्यश्रवणश्रविष्ठ
वत्वाष्ट्रमपूषभानि । मैत्रेण युक्तानि नरेश्वराणां विलोकने भानि
प्रदानि ॥'

राजदर्शनम् ।

**अथ क्रयविक्रयौ** । भाद्वयत्रिदशमंत्रिदिवाकरेषु मूलानिलोत्तरतुरंगमरेव
सारङ्गपाणिरजनीकरमैत्रभेषु लाभः सदैव भवति क्रयविक्रयाभ्या
दस्रे तु 'चित्रा शतभिषा स्वाती रेवती चाश्विनी शुभा । श्रवणश्च
प्रोक्ता वस्त्राणां क्रयणे शुभाः ॥'

क्रयविक्रयनिर्णयः।

**अथ सेतुः**—'स्वातीयुक्ते मन्दवारे वृषलग्ने शुभे दिने ।
बन्धनं कार्यं ध्रुवभे चार्कजीवयोः ॥'

सेतुबंधः ।

**अथ पशुकृत्यम्** । **श्रीपतिः**—'चित्रोत्तरावैष्णवरोहिणीषु चतुर्दशीदर्शदिनाष्ट
स्थानप्रवेशो गमनं विदध्यात् पुमान् पशूनां न कदाचिदेव
**चण्डेश्वरः**—'हस्तमूलविशाखासु रेवत्यां श्रवणे तथा । मैत्रे च
श्रेष्ठं पशुक्रयणमुच्यते ॥ पूर्वात्रयामृतमयूखहुताशनेषु इन्द्राग्निवाजिवसुवारुणशंक
एतेषु गोमहिषदन्तितुरंगमादिनानाप्रकारपशुजातिगतिः प्रशस्ता ॥'

पशुकृत्यम् ।

**अथ गजदन्तच्छेदः** । **ज्योतिर्निबन्धे**—त्वाष्ट्रे वैष्णव अश्वि
मादित्ये वसुदैवते । दन्तिनां शुभदं कर्म पुष्ये हस्ते च कर्तनम्' ।

गजदन्तच्छेदः ।

**अथ निक्षेपः**—'भरणीत्रीणि पूर्वाणि आर्द्राश्लेषा मघा तथा । चित्रा
विशाखा च मूलं मृगपुनर्वसू । एभिर्दत्तं प्रयुक्तं च यद्यन्निक्षिप्यते ध
पृष्ठतो धावमानस्य निर्धनो नोपपद्यते ॥'

निक्षेपादि ।

**अथ ऋणमोक्षः**—**श्रीधरः**—'वागीशमन्ददिवसांशकल
रिक्तासुमन्ददिवसे कुलिकोदये च ॥ मैत्रद्वितीयपदमैत्रमुहूर्तयुक्ते
ङ्गमे च ऋणमोक्षमुशन्ति सन्तः ॥'

ऋणमोक्षः ।

**अथ राजमुद्रा**—'मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनि
वर्जम् । वारे तिथौ पूर्णजयाह्वये च मुद्राप्रतिष्ठा शुभदा हि राज्ञाम्

राजमुद्रानिर्णयः ।

**अथ नौः** । **चण्डेश्वरः**—'पौष्णाश्विनीतुरगवारुणमित्रचित्र
तोष्णरश्मिवसवोनलवंत्यमूनि । वारे च जीवभृगुनन्दनके प्रशस्ते
दिसंघटनवाहनमेषु कुर्यात् ॥'

नौकानिर्णयः ।

**अथ भोगः** । 'गुरुभरविभानुराधाविधातृपौष्णाश्विरोहिणीषु स्व
स्वात्युत्तरासु कुर्याच्छयनासनभोगभोगादि ॥'

भोगनिर्णयः ।

**अथ श्मश्रुकर्म** । **श्रीपतिः**—'पुष्ये पौष्णे चाश्विनीष्वैंदवे च शाक्रे हस्ताद्ये

वृद्धगार्ग्यः–'रव्यारसौरिवारेषु रात्रौ पाते व्रताहनि । श्राद्धाहःप्रतिपद्रिक्ताभद्राः क्षौरे वर्जयेत्' ॥ गार्ग्यः–'षष्ठ्यमापूर्णिमापातचतुर्दश्यष्टमी तथा । आसु सन्निहि पापं त्रिषु तैले भगे क्षुरे ॥' राजमार्तण्डः–'देवकार्ये पितुः श्राद्धे रवेरंशपा क्षये । क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे ॥' बृहस्पतिः–'राजकार्ये नि क्तानां नराणां भूपजीविनाम् । श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनम् ॥' तथा 'क्षौरं' नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् ॥ पित्रादिमृतिदीक्षासु प्रायश्चित्तं तीर्थके ॥' केचित्तूत्तरार्धमन्यथा पठन्ति । 'मुण्डनस्य निषेधेपि कर्तनं तु विधीयते' नारदः–'नृपविप्राज्ञया यज्ञे मरणे बन्धमोक्षणे । उद्वाहेखिलवारर्क्षे तिथिषु क्षौ मिष्टदम् ॥' भारते–'प्राङ्मुखः श्मश्रुकर्माणि कारयीत समाहितः । उदङ्मुख वाथ भूत्वा तथायुर्विन्दते महत् ॥' अपरार्के–'उदङ्मुखः प्राङ्मुखो वा वपनं का येत्सुधीः । केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥ दक्षिणं कर्णमारभ्य धर्मा पापसंक्षये । शिखाद्ये नवसंस्कारे शिखाद्यन्तं शिरो वपेत् ॥' यतीनां तु विशे निगमे–'कक्षोपस्थशिखावर्जमृतुसंधिषु वापयेत्' ॥ इति । अन्येपि विधिप्रनि षेधाः प्रागुक्ताः ॥

इन्धनसंग्रहः ।

अथेन्धनसंग्रहः–' ब्रह्मानिलार्कमघमूलत्रिपूर्वरौद्रपौष्णानुराधगुरुविष्णुविशाखभ क्ते । वारे कुजार्कभृगुनन्दनसोमजानां श्रेष्ठेन्धनस्य करणं भव प्रशस्तम् ॥ '

नवान्नम् ।

अथ नवान्नम् । श्रीपतिः–'रेवतीश्रुतिपुनर्वसुहस्तब्राह्मत पृथगाति द्वितये च । त्र्युत्तरेषु गदितं पृथुकानां प्राशनं नवनवान्न विधानम् ॥'

नवभोजनपात्रम् ।

अथ नवभोजनपात्रम् । ज्योतिर्निबन्धे–'भोज्यपात्रं सुध सिन्धौ घटयेद्वा समाहरेत् । तत्रान्नप्राशनप्रोक्ते काले भोजनमाचरेत्॥

नवपर्णदलादिभक्षणम् ।

अथ नवपर्णफलादिभक्षणम् । चण्डेश्वरः–'मूलाश्विमैत्रकरतिष्यहरीन्द्रभे पौष्णोत्तरैन्दवपुनर्वसुवासवेषु ॥ वारेषु भूमितनयार्कजवारवर्जं ताम्बू नूतनफलाद्यशनं हिताय' ॥

---

१–अत्र निषेधे सत्यपीत्युपादानात्प्रायश्चित्ततीर्थयो रात्रावपि क्षौरम् । निमित्तं तु दिने एव । श्व स्तनी वपनक्रिया' इत्युक्तः । इति टीका । २–निषिद्धादिने क्षौरे कृते पुनस्तद्दोषशान्त्यर्थं विहितका

अथ होमे आहुतिपातः । ज्योतिषे-तरणिविद्भृगुभास्कारिचन्द्रमःकुजगु ज्यविधुंतुदकेतवः । रविभतो दिनभं गणयेत्क्रमात् प्रतिखगं त्रित्रि त्रितयं न्यसेत् ॥ दिनकरार्कितमःकुजकेतवो हुतभुजेन शुभास्त्वि शुभाः । हवनचक्रमिदं प्रविलोक्यतां हवनकर्मणि सर्वसमृद्धये ॥' अत्र शान्तिरु विष्णुधर्मे-'क्रूरग्रहमुखे चैव संजाते हवने शुभे । शान्तिं विधाय गां दद्याद्ब्राह्मण कुटुम्बिने । आयसीं प्रतिमां कृत्वा निक्षिपेत्तामधोमुखीम् । गोमूत्रमधुगन्धाद्यैरर्चितां तिमां ततः ॥ स्वस्थां निधाय संपूज्य तत्र होमो विधीयते ॥' अत्रापवादः क्रियास रे-'नित्ये नैमित्तिके दुर्गाहोमादौ न विचारयेत्' ॥

होमाहुतिपातः ।

अथ ज्वरादौफलम् । श्रीपतिः-'स्वात्याश्लेषारौद्रपूर्वासु शाक्रे रोगोत्पत्तिजा यस्य पुंसः। तद्भैषज्यव्यापृतो निष्प्रयत्नः स्याद् दुग्धाब्धेर्लब्धजन्म वैद्यः । व्याध्युत्पत्तिर्यस्य पौष्णे समैत्रे प्राणत्राणं जायते तस्य च्छ्रात् । वैश्वे सौम्ये रोगमुक्तिस्तु मासाद्विंशत्या स्याद्वासराणां मघासु ॥ पक्षा वासवे सद्विदैवे मूलाश्विन्योरग्निधिष्ण्ये नवाहात् । याम्ये त्वाष्ट्रे वैष्णवे वारुणे नैरुज्यं स्यान्नूनमेकादशाहात् ॥ अहिर्बुन्ध्ये तिष्यसंज्ञे यमाख्ये प्राजापत्याद् योः सप्तरात्रात् । रोगान्मुक्तिर्जायते मानवानां निःसंदिग्धं जल्पितं गर्गमुख्यैः ॥' ज्यो तिषे-'एकाहो निधनं दशाहमनिलाद्बाणा वियत्पर्वताः सप्ताङ्का विलयश्च मासयु मासो मृतिः पक्षकः । द्वौ मासावथ विंशतिर्दश निशाः पक्षान्तपक्षा नखा मासौ प शान्तपक्षककुभः पीडादिनान्यश्विभात् ॥' दैवज्ञः-'उरगवरुणरौद्रा वासवेन्द्रत्रि यमदहनविशाखाः पापवारेण युक्ताः । तिथिषु नवमिषष्ठीद्वादशी वा चतुर्थी भवति म योगो रोगिणां कालहेतुः ॥' अत्र कुम्भे हैमीं नक्षत्रदेवताप्रतिमां संपूज्य द्वादश संकर्षणादिद्वादशमूर्तीर्द्वादशादित्यान् वा संपूज्य दूर्वासमित्तिलक्षीराज्यैर्गायत्र्या तद्देव अष्टोत्तरशतं हुत्वा दध्योदनं बलिं दत्त्वाचार्याय गां प्रतिमां च दत्त्वा विप्रान् भोजये ति संक्षेपः । विशेषस्तु व्रतहेमाद्रौ पदार्थादर्शे च ज्ञेयः ॥

ज्वरादौफलंपरिहारश्च ।

अथ भेषजम् । चण्डेश्वरः-'मूलानुराधमृगतिष्यपुनर्वसौ च पौष्णाश्विनीश्रव ऋकरत्रये च । वारेषु वाक्पतिदिनेषु सितेंदुशस्ते भैषज्यभक्षणम हितं नराणाम्' ॥

भेषजम् ।

अथारोग्यस्नानम् । श्रीपतिः-'इन्दोर्वारे भार्गवे च ध्रुवेषु सार्पादित्य

**अथ दन्तधावनम्** । **पृथ्वीचन्द्रोदये विष्णुः**–'प्रतिपद्दर्शषष्ठीषु चतुर्दश्
दंतधावनम्। च । नवम्यां भानुवारे च दन्तकाष्ठं विवर्जयेत् ॥' **नारदः**–
श्यष्टमीपौर्णमासीसंक्रमणेषु च। नन्दासु च नवम्यां च द
विवर्जयेत् ॥ श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका । व्यतीपाते च संक्रान्त्यां
भूताष्टपर्वसु॥ तैलं क्षौरं रतिं मांसं दन्तकाष्ठं च वर्जयेत् ॥' **वसिष्ठः**–'शन्यर्कगु
कुजाहे व्रतवासरे। जन्माहे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ॥' **हेमाद्रौस्कान्दे**–'
जलाधिस्नाने दन्तधावनमैथुने । जाते च निधने चैव तत्कालव्यापिनी तिथिः॥' **सं**
'रवौ विवाहआशौचे वर्जयेद्दन्तधावनम् ॥' **व्यासः**–'अलाभे दन्तकाष्ठानां नि
तथा तिथौ । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्' ॥

**अथामलकस्नानम्** । **व्यासः**–'श्रीकामः सर्वदा स्नानं कुर्वीतामलकै
सप्तमीं नवमीं चैव पर्वकालं विवर्जयेत् ॥ चन्द्रसूर्योपरागे च स
आमलकस्नानम्। मलकैस्त्यजेत् ॥' **क्रतुः**–'षष्ठी च सप्तमी चैव नवमी च त्रयो
संक्रान्तौ रविवारे च स्नानमामलकैस्त्यजेत् ॥' यत्तु–'नवमी दशमी चैव
च त्रयोदशी । प्रतिपद्द्वादशी कृष्णा स्नानं तासु विवर्जयेत् ॥' यच्च 'दर्शे
न कुर्वीत मातापित्रोः सुजीवतोः । पुत्रः कुर्वन्निराचष्टे पित्रोरुन्नतिजीविते'
**कण्वयमाद्यैः स्नानमात्रं निषिद्धम्** । तद्भोगार्थस्नानपरम् । न नित्यनैमि
**मिति हेमाद्रिः** ॥

**अथ तैलस्नाननिषेधः** । **कात्यायनः**–'पक्षादौ च रवौ षष्ठ्यां रिक्तायां
तिथौ । तैलेनाभ्यज्यमानस्तु चतुर्भिः परिहीयते ॥' **गर्गः**–'प
तैलस्नाननिषेधः। चतुर्दश्यामष्टम्यां रविसंक्रमे । द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं
येत् ॥ न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा । शाश्वतीं गतिमन्विच्छ
म्यामपि पण्डितः ॥' **तत्रैवायुर्वेदे**–'षष्ठ्यां दिनक्षयेष्टम्यामेकादश्यां च
द्वादश्यां च चतुर्दश्यां पञ्चम्यां प्रतिपत्तिथौ ॥ व्रते श्राद्धदिने जन्मत्रितये
द्रयोः । ज्येष्ठोत्तराफाल्गुनीषु व्यतीपाते च वैधृतौ ॥ विष्टियोगे च संक्रान्तौ
युगादिषु । नाभ्यङ्गं तत्र बालानां वृद्धानां तु न दोषकृत् ॥ इति ।' **व्यवहार**
'संक्रान्तिभद्राव्यतिपातवैधृतिषष्ट्यष्टमीपर्वसु नार्कभूसुते । स्नाने द्वितीया द
गर्हिताः षष्ठ्याद्यमाद्या रदधावनेऽधमाः ॥. **अस्यापवादमाह तत्रैव प्र**
'सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् । अन्यद्द्रव्ययुतं तैलं न दुष्यति कद

आयुर्वेदे–'निषिद्धतिथिवारर्क्षग्रहणेष्वपि रात्रिषु । किंचिद्गोघृतयुक्तं वा विप्र
न्वितम् ॥ भानौ दूर्वान्वितं भौमे भूयुक्तं पुष्पयुग्गुरौ । सर्वेषां सर्वदा तैलमभ्य
दुष्यति॥' मंगलेष्वप्यदोषः।'मांगल्यं विद्यते स्नानं वृद्धिपर्वोत्सवेषु च । स्नेहपात्रस
मध्याह्नात् प्राक्तदिष्यते॥' इति मदनपारिजाते कात्यायनोक्तेः।हेमाद्रौ बृह
'तैलाभ्यंगो नार्कवारे न भौमे नो संक्रान्तौ वैधृतौ विष्टिषष्ठ्योः।पर्वस्वष्टम्यां च नेष्टः
प्रोक्तान् मुक्त्वा वासरे सूर्यसूनोः ॥' तिलस्नाननिषेधस्तु षट्त्रिंशन्मते
सप्तम्यमावास्या संक्रांतिग्रहजन्मसु । धनपुत्रकलत्रार्थी तिलपिष्टं न संस्पृशेत्

अथ गृहारम्भः। ज्योतिर्निबन्धे बादरायणः–'वैशाखे फाल्गुने पौषे
मार्गशीर्षके । सूत्रारम्भः शिलान्यासः स्तम्भारम्भः प्रशस्
गृहारम्भः । नारदः–'सौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकाः ॥ मासा
हनिर्माणे पुत्रारोग्यधनप्रदाः ॥' अत्र वृषसिंहवृश्चिकाः वैशाखश्रावणकार्त्तिकाः
ज्ञेयाः इति कालादर्शः। तत्रैव कारणतन्त्रे–'स्थिरमासे स्थिरे राशौ स्थिर
वेश्मनाम्। कुर्वीत स्थापनं शंकोः शंभुस्थापनमेव वा॥' कार्त्तिकनिषेधस्तुलापरः
माघोपि सर्वेषां मन्दिराणामुपक्रमम् । महर्षयः प्रशंसन्ति धान्यागारं विहाय च
धो धान्यगृहपरः । 'पाकभोजनशालादौ मार्गशीर्षश्च फाल्गुनः। रथ्यागेहमठादौ
स्यः शुचिरेव तु ॥'पौषाषाढनिषेधस्तु प्रधानगृहपरः। 'न प्रधानगृहारम्भं कुर्यात्पौ
वपि ।' इति तत्रैवोक्तेः। ज्योतिस्तत्त्वे–'पूर्वापरास्यं तु नभोन्त्यपौषे याम्यो
सहसि द्वितीये। कार्यं गृहं जीवबुधर्क्षगाक नीचास्तगौ जीवसितौ च दि
रत्नमालायां–'कर्कनक्रहरिकुम्भगतेऽर्के पूर्वपश्चिममुखानि गृहाणि । तौ
वृश्चिकयाते दक्षिणोत्तरमुखानि वदन्ति ॥ दैवज्ञवल्लभः–'शोकं धान्यं
निःपशुत्वं स्वाप्तिं नैःस्वं संगरं भृत्यनाशम् । स्वश्रीप्राप्तिं वह्निभीतिं च लक्ष्मीं
त्राद्या गृहारम्भकाले ॥'

गर्गः–'त्र्युत्तरामृगरोहिण्यां पुष्ये मैत्रे करत्रये । धनिष्ठाद्वितये पौष्णे गृहारम्
स्यते ॥ रोहिण्यां श्रवणत्रयेऽदितियुगे हस्तत्रये मूलके रेवत्युत्तरफाल्गुनीषु मृग
त्तराषाढयोः । शस्तं वेश्म तु कुजार्कवर्जितदिने गोकुम्भसिंहे झषे कन्यायां मिथु
शुचिसहोराधार्कजे फाल्गुने ॥' कालादर्शे सनत्कुमारः–'आदित्यभौमव
वाराः शुभप्रदाः ॥' वास्तुशास्त्रे–'मार्गशीर्षे तथा पौषे वैशाखे श्रावणे

हस्ते च रोहिण्यां पुष्याश्विन्युत्तरात्रये ॥' **वास्तुप्रदीपे**—'अधोमुखैर्भैर्विद
शिलास्तथैवोर्ध्वमुखैश्च पट्टम् । तिर्यङ्मुखैर्द्वारकपाटयानं गृहप्रवेशो मृदु
**ल्लः**—'स्नानं च पाकं शयनं च भोज्यं गजालयं वाजिगृहं धनस्य। देवस्य
**क्रमेण** मध्ये सभा भूपनिवेशनाय ।' **शिल्पशास्त्रे**—'कन्यासिंहे तुलायां
मुखं शंभुकोणेऽग्निखातं वायव्ये स्यात्तदास्यं त्वलिधनमकरे ईशखातं वदी
**मीने** च मेषे निर्ऋतिदिशि मुखं खातवायव्यकोणे:चाग्नेः कोणे मुखं वै वृ
**कर्कटे** रक्षखातम् ॥' **तत्त्वचिन्तामणौ**—'यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्त
**न** तत्र चिन्तयेद्धीमान् गुणानायव्ययादिकान् ॥' **राजमार्तण्डः**—'आयं
**शुद्धिं** तृणागारे न चिन्तयेत् । शिलान्यासादि नो कुर्यात्तथागारपुरातने
**हारतत्त्वे**—'निषिद्धेष्वपि कालेषु स्वानुकूले शुभे दिने । तृणकाष्ठगृहारम्भे
विद्यते ॥' **चण्डेश्वरः**—'पूर्णादि त्वष्टमीं यावत् पूर्वास्यं वर्जयेद्गृहम् ।
**कुर्वीत** नवम्यादिचतुर्दशीम् । अमावास्याष्टमीं यावत्पश्चिमास्यं विवर्जयेत्
**तथा** याम्यं यावत्कृष्णचतुर्दशी । ध्रुवं दृष्ट्वाथवा स्मृत्वा कर्तव्यं वास्तुरोपण
**वर्ज्यदिवसे** रात्रौ त्यक्त्वा महानिशाम् ॥' **वराहः**—'दक्षिणपूर्वे कोणे कृत्वा
**न्यसेत्प्रथमाम्** । शेषाः प्रदक्षिणेन स्तम्भाश्चैवं समुत्थाप्याः ॥' **काला**
**शास्त्रे**—'खाते चैव शिलान्यासे वृषचक्रं प्रशस्यते ॥' **तच्चोक्तं शान्ति**
**हस्तप्रमाणं** तु खात्वा गर्तं समन्ततः । कुम्भोदकैः सेचयेयुः शान्तिपाठपुरः
ईशानदिग्भागे साक्षतं रत्नपञ्चकम् । साज्यं कुम्भं स्थिरं मुक्त्वा वास्तुपूज
**कुम्भोपरि** शिलान्यासः कर्तव्यस्तदनन्तरम् ॥'

अथ **गृहप्रवेशः** । **बृहस्पतिः**—'नन्दायां दक्षिणं द्वारं भद्रायां पश्चि
यासुत्तरद्वारं पूर्णायां पूर्वतो विशेत्' ॥ **वसिष्ठः**—'कृत्वा

गृहप्रवेशः ।

वामतोऽर्कं विप्रान् पूज्यानग्रतः पूर्णकुम्भम् । हर्म्यं र
**ग्वितानैः** स्त्रीभिः स्रग्वी गीतवाद्यैर्विशेच्च ॥' **व्यवहारतत्त्वे**—'सौम्यायने श्र
**जन्मर्क्षलग्नोपचयोदयेशे** । वामं गतेऽर्के गृहवास्तुपूजां कृत्वा विशेद्वेश्म भव
**वास्तुशास्त्रे**—'लग्नात्प्रागादितो दिक्षु द्वौ द्वौ राशी नियोजयेत् । एकमेकं
**सूर्यं** वामं विचिन्तयेत् ॥' **वसिष्ठः**—'चन्द्रजार्यसितवासरेषु च श्रीकरं सुतम
**सूर्यसूनुदिवसे** स्थिरप्रदं किं तु चौरभयमत्र निर्दिशेत् ॥' **रत्नकोशे**—'पु

विहाय वारौ शूलादियोगानशुभान्नवापि । रिक्ता तिथिश्चापि मृदुध्रुवर्क्षे सौम
प्रविशेद्गृहाणि' ॥ रत्नमालायाम्-'त्वाष्ट्रमित्रशशिपुष्यदैवतान्यामनन्ति सु
न्यथ। मैत्रगे हरति भूषणाम्बरोद्गीतमंगलविधानमेषु च ॥' रोहिण्युत्तरात्रयं च
प्रवेशश्च वास्तुपूजां कृत्वा कार्यः। 'जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने ।
द्भवने प्रासादपरिवर्तने ॥ द्वाराभिवर्तने तद्वत्प्रासादेषु गृहेषु च । वास्तूपशम
पूर्वमेव विचक्षणः ॥' इति मात्स्योक्तेः । तत्रैव-'कृत्वाग्रतो द्विजवरा
कुम्भं दध्यक्षताम्रदलपुष्पफलोपशोभम् । दत्त्वा हिरण्यवसनानि तथा द्विजे
ल्यशान्तिनिलयं स्वगृहं विशेच्च ॥ गृह्योक्तहोमविधिना बलिकर्म कुर्यात् प्रास
मने च विधिर्य उक्तः। संतर्पयेद्विजवरानथ भक्ष्यभोज्यैः शुक्लाम्बरः स्वभव
त्सुरूपम् ॥'

अथ **कलिवर्ज्यानि** । **बृहन्नारदीये**-'समुद्रयातुः स्वीकारः कमण्डलु
द्विजानामसवर्णासु कन्यासूपयमस्तथा ॥ देवराच्च सुतोत्प
च गोवधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥

कलिवर्ज्यानि ।

कन्यायाः पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ ॥ र
मनं गोमेधश्च तथा मखः । इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥'
'सोदकं च कमण्डलुम्' इत्युक्तः मृन्मयो वा । दत्ता ऊढा 'ऊढायाः पुनरु
गोवधं तथा । कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥' इति **हेमाद्रौ**
'ऊढायाः परपुरुषसंयोगादृते देयेति केचन' इत्यादिभिर्विवाह्यतोक्ता। **हेमाद्रि**
'गोत्रान्मातुः सपिण्डाच्च विवाहो गोवधस्तथा । नराश्वमेधो मद्यं च कलौ
तिभिः ॥' गोत्राद्गोत्रजायाः पितृष्वसुः मातृसपिण्डान्मातुलात्तत्कन्याया वि
न कार्यः। तेन यानि तद्विधायकानि तानि युगान्तरविषयाणि । तथा च
'तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा । शुल्केन चोद्वहिष्यन्ति विप्राः
हिताः ॥' इति कलौ तन्निन्दामाह । मातृतस्तृतीयां मातुलकन्यामित्यर्थः
त्प्राक् । 'मद्यं स्त्रीभ्यश्च सुरामाचामम्' इत्यादिना विहितमपि वर्ज्यम् ।

---

१ 'यस्तु कार्तयुगो धर्मो न कर्तव्यः कलौ युगे। पापप्रयुक्ताश्च सदा कलौ नार्यो नर

हेमाद्रौ आदित्यपुराणे–'विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् । बाल
क्षतयोन्यास्तु वरेणान्येन संस्कृतिः ॥ कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः ।
तायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥ द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्र
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥ महाप्रस्थानगमनं गोसंज्ञप्तिश्च गो
सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥ अग्निहोत्रहवन्याश्च लेहो लीढापरि
वृत्तस्वाध्यायसापेक्ष्य मघसंकोचनं तथा ॥ प्रायश्चित्तविधानं च विप्राणां मरणान्ति
संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः ॥' संसर्गदोषः 'तत्संसर्गी च पञ्चमः' इत्यु
स्तेयं च तदन्यानि महापातकानि ब्रह्महत्यासुरापानगुरुतल्पानि त्रीणि । तेषां क
तानां मरणान्तिकं प्रायश्चित्तं विप्राणां कलौ नेत्यर्थः । मरणान्तिके हि जातिवधा
द्वादशाब्दद्विगुणं ब्रह्मवधनिमित्तं च द्विगुणं भवति तत् 'चतुर्थे नास्ति निष्कृतिः
निषिद्धम् । न चात्महत्याविधिना तद्बाधः तेन ह्यात्महत्यानिमित्तस्यैव बाधो न
वधनिमित्तस्याभिन्नविषयत्वात् । संसर्गिणस्तु कामतोपि व्रतस्यैवोक्तेर्न मरणान्ति
नापि स्तेये तत्र राज्ञो वधकर्तृत्वात् । तेन तयोर्मरणान्तिकत्वाभावात् । तयोरेव नि
नान्येषां त्रयाणाम् । युगान्तरे तु कलौ निषेधबलात् प्रवृत्तिः । एतद्विप्रपरं न क्षत्रि
तदुक्तं 'विप्राणां मरणान्तिकम्' इति ।

विशेषोऽस्मत्कृते प्रायश्चित्तरत्ने ज्ञेयः । 'वरातिथिपितृभ्यश्च पशूप
क्रिया । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥ सवर्णान्यङ्गनादुष्टैः संसर्गः शोधितै
अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियः । परोद्देशान्यसंत्याग उद्दिष्टस्यापि वर्ज
प्रतिमाभ्यर्चनार्थाय संकल्पश्च सधर्मकः । अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ॥
चैव विप्राणां सोमविक्रयणं तथा । षड्भक्तानशने चान्नहरणं हीनकर्मणः ॥'
वीये पृथ्वीचन्द्रोदये च–'शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् । भोज
गृहस्थस्य तीर्थसेवातिदूरतः ॥ शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता । आपद्वृ
ग्र्याणामश्वस्तनिकता तथा ॥ प्रजार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः । ब्राह्
प्रवासित्वं मुखाग्निधमनक्रिया ॥ बलात्कारादिदुष्टस्त्रीसंग्रहोविधिचोदितः । यते
वर्णेषु भिक्षाचर्या विधानतः ॥ नवोदके दशाहं च दक्षिणा गुरुचोदिता । ब्राह्
शूद्रस्य पचनादिक्रियापि च ॥ भृग्वग्निपतनैश्चैव वृद्धादिमरणे तथा । गोतृप्तिशिष्टे
शिष्टैराचमनक्रिया ॥ पितापुत्रविरोधेषु साक्षिणां दण्डकल्पनम् । यतेः सायं ग

न्तरस्यादोषत्वापत्तेश्च निरूपितं चैतद्धेमाद्रिणाऽन्यत्रेत्युपरम्यते । सु
सौत्रामणिविशेषणाविवक्षया वाजपेयेपि निषेधः । सौत्रामण्यां तु 'पये
इत्यापस्तम्बोक्तेर्वैकल्पिकपयोग्रहैरप्यधिकारः । वाजपेये तु तत्प्राते
सोमसुरयोः सह त्यागेंऽशे सुराद्रव्यत्वात्तत्प्रत्यक्षतया यागनामत्वेन तां वि
कलौ नाधिकार इति युक्तं प्रतीमः । त्रिकाण्डमण्डनादिलिखनं तु
च वृत्तेति—'एकाहाद्ब्राह्मणः शुद्ध्येद्योगिवेदसमन्वितः' इति उक्तः । अ
संकोचो 'न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते' इत्युक्तस्य प्रायश्चित्त
देशः। 'कलौ कर्तैव लिप्यते' इति व्यासोक्तेः। पतितसंसर्गे दोषसत्त्वेपि प
अन्यथा 'संसर्गः शोधितैरपि' इति विरोधापत्तेः । स्तेयभिन्ने महापापे र
श्चित्तं नेत्यर्थः । 'सवर्णान्या असवर्णा क्षत्रियादिस्तया दुष्टे अयोनौ शिष
स्तु परित्याज्याः शिष्यगा गुरुगा च याः ।' इत्युक्तस्त्यागः । परोद्देशे
आत्मत्यागः । यद्वा परोद्देशात्मत्यागो गोदानम् 'मनसा पात्रमुद्दिश्य' इ
ष्टस्य त्यक्तस्य वर्जनम् । 'प्रतिग्रहसमर्थोपि' इत्युक्तम् ।

**वेतनग्रहणेन प्रतिमापूजा** । 'स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु
इत्युक्तः स्पर्शः । षडिति । 'उपोषितस्त्र्यहं स्थित
णाद्धरेत् ।' इत्युक्तमन्नचौर्यम् । आपदि क्षात्रादिवृत्तिः

वेतनग्रहणेन प्रतिमापूजा ।

दग्निम्' इत्युक्तं धमनम् । 'दशाहेनैव शुद्ध्येत भूमिष्ठं च नवोदकम्' इ
'गुरवे तु वरं दत्त्वा' इत्युक्ता दक्षिणा । 'शूद्रेषु दासगोपाले तु' 'कन्दूपक्व
दुग्धेन पाचितम् । एतान्न शूद्रान्यभुजो भोज्यानि मनुरब्रवीत् ॥' इत्
न्तूक्ता शूद्रस्य पाकक्रिया । 'पितापुत्रविवादे तु साक्षिणां त्रिपणो दमः
सायंगृहत्वं 'विधूमे सन्नमुसले' इत्युक्तम् । पृथ्वीचन्द्रेण तु—'अटन्ति
पृथिवीदर्शनाय च । अनिकेता ह्यनाहारा यत्र सायं गृहास्तु ते ॥' इ
णोक्तो निषिद्धः । तेन ज्ञातशीलपान्थादेः श्राद्धादौ विनियोगो न
त्यर्थ उक्तः । एतानि वर्ज्यानीत्यर्थः ॥

निगमः—'अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् । देवराच्च
पञ्च विवर्जयेत् ॥' अग्निहोत्रं तदर्थमाधानम् ॥ एतच्च सर्वाधानपरम्
स्मृतौ श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः । सर्वाधानं तयोरैक्यकृतिः

तावत्कुर्यात्कलौ युगे ॥' इति । अत्र पूर्वयुगाश्रितेति **लौगाक्षिवाक्ये** पूर्वयुगानि
दीनीत्येकोर्थः । **अन्ये तु** युगस्य पूर्वं कलेः पूर्वं भागः। स च 'चत्वार्यब्दसहस्राणि'
पूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नः । तस्मिन् भागे सर्वाधानं कार्यम् । त
तु यावद्वर्णविभागोस्तीति वाक्यात् वर्णविभागपर्यंतमर्धाधानमित्याहुः । संन्यासस्त्विद

**इति कलिवर्ज्यानि ॥**

इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजदिनकरभट्टानुजकमलाकरभट्टकृते
निर्णयसिंधौ **तृतीयपरिच्छेदे पूर्वार्द्धं** समाप्तम् ।

१ कलौ गंगां विहाय न कोपि मुक्तिहेतुः तथा च भविष्ये–'कलौ कलुषचित्तानां प
रतात्मनाम् । विधिहीनक्रियाणां च गतिर्गंगां विना न हि ॥ सैवेह शरणं गंगा पतित
द्यता । संसारार्णवमग्नानां भूतानां शरणार्थिनाम् ॥ नान्यः शरणदः कश्चिदुपायो विद्यते
विना गङ्गां धर्ममयीं शरण्यां सर्वदेहिनाम् ॥ महापातकसंहर्त्रीं सर्वसर्वार्थसाधिकाम् । अनाश्रि
वै गङ्गां मुक्तिमिच्छति यः कलौ ॥ सूर्यं द्रष्टुमिवोद्युक्तो जात्यन्धसदृशस्तु सः' ॥ इत्य

॥ श्रीः ॥

# निर्णयसिन्धौ ।

## तृतीयपरिच्छेदोत्तरार्द्धम् ।

### श्राद्धप्रकरणम् ॥

अथ श्राद्धनिर्णयः । नानानिबन्धवैमत्यभ्रान्तचित्तोहिधीर्षया । कमलाक
क्रियते श्राद्धनिर्णयः ॥ तत्स्वरूपमाह पृथ्वीचन्द्रोदये मरी
श्राद्धनिर्णयः ।
'प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः । श्रद्धया
यत्र तच्छ्राद्धं परिकीर्तितम्' ॥ ब्राह्मणस्वीकारान्तश्चतुर्थ्यन्तपदोपनीतपित्राद्युदे
स्त्यागः श्राद्धमित्यर्थः । तत्र यद्यपि होमपिण्डभोजनानि प्रधानानीति हेमा
'होमश्च पिण्डदानं च तथा ब्राह्मणभोजनम् । श्राद्धशब्दाभिधेयं स्यादेकस्मिन्
रिकम् ॥' इति श्रीधरश्च । तथापि कश्चिद्विशेषं वक्ष्यामः । निमित्तभेदे भो
पिण्डानां वा निषेधो न प्राधान्यं निरुणद्धि । असोमयाजिनो दधिपय
वत् । यच्च शूलपाणिः—'नित्यश्राद्धमदैवं स्यादर्घ्यपिण्डविवर्जितम् ।'
हारीतीये नित्यश्राद्धमवादौ पिण्डनिषेधोस्ति न च प्राप्तिं विना सः । न
देशं विना प्राप्तिः । न चांगत्वेन विनातिदेशः । प्रधानस्यानतिदेशात् ।
उपकारकत्वेनातिदेशोक्तेः । तेन भोजनं प्रधानम्—पिण्डोङ्गम् । पिण्डदान
धिस्त्वङ्गभूतात् कर्मान्तरमेव प्रकरणान्तरन्यायादिति । तन्न । 'ज
न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि । न पक्वं भोजयेद्विप्रान् सच्छूद्रोपि कदाचन ॥'
जातश्राद्धशूद्रश्राद्धादौ भोजनस्य निषेधेनाङ्गत्वापत्तेः । 'न तौ पशौ करो

---

१ 'ब्राह्मणस्वीकारान्त इति त्वशुद्धम् । पिण्डदानस्यातथात्वेनाप्राधान्यापत्तेः । इष्टापत्तौ
नां निषेधो न प्राधान्यं निरुणद्धीति ग्रन्थासंगतेः । उपनीतत्वं च देवतात्वव्यञ्जकमात्रम्
लक्षणघटकं व्यर्थत्वात् । मृतोद्देश्यकत्वं विवक्षितम् । जीवच्छ्राद्धे देवश्राद्धे च श्राद्ध
कुण्डपाय्यग्निहोत्रवत्' इति टीका । २—'कौण्डपायिनामयन उपसद्भिश्चरित्वा 'मासमग्निहोत्रं
इत्यत्र जुहोतिना दूरस्थस्यापि कर्मण उपस्थित्या अनुवादेन मासादिरूपगुणविधिः ।

बहुपजीव्यविरोधेन विकल्पापत्तेश्च । तेन श्राद्धशब्दाभिधेयत्वेनोभयप्राप्तौ निषेधः
दासो वा । 'दीक्षितो न ददाति न जुहोति' 'नासोमयाजी स
इतिवदिति तत्त्वम् । **धर्मप्रदीपेऽपि**–'यजुषां पिण्डदानं तु बह्वृचानां द्विजा
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम् ॥' तच्च 'पितॄन् यजेत्, पितृभ्यो
इत्युभयप्रयोगदर्शनाद्यागदानोभयात्मकम् । 'पितरो देवता' इति पित्र्युद्देश्यकत्वा
विप्रापेक्षया च दानत्वमित्यविरुद्धम् । एतेन नायं यागः । देवतोद्देशेन त्यागो
यागोद्देश्या च देवतेत्यात्माश्रयादिति **गौडमतमपास्तम्** । वैधशब्दविशे
त्वस्य तस्येदमिति स्वत्वारोपप्रतियोगित्वस्य वा देवतात्वात् । **तत्रैव सुम**
'श्राद्धात्परतरं नान्यच्छ्रेयस्करमुदाहृतम् ॥' **आदित्यपुराणे**–'न सन्ति पि
कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते' ॥

तद्भेदानाह विश्वामित्रः–'नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्ड
पार्वणं चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥ कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स
यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥' इति । एषां लक्षणानि भ
'अहन्यहानि यच्छ्राद्धं तन्नित्यमिति कीर्तितम् । वैश्वदेवविहीनं तदशक्तावुदकेन
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते । तदप्यदैवं कर्तव्यमयुग्मान्
द्विजान् ॥ कामाय विहितं काम्यमभिप्रेतार्थसिद्धये । वृद्धौ यत
श्राद्धं वृद्धिश्राद्धं तदुच्यते ॥ गन्धोदकतिलैर्युक्तं कुर्यात् पा

श्राद्धलक्षणानि ।

यम् । अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ ये समाना इति द्वाभ्या
सापिण्डनम् । नित्येन तुल्यशेषं स्यादेकोद्दिष्टं स्त्रिया अपि' ॥ एतदुभयमेव स्त्रिया
स्त्रीकर्तृकं स्त्रीसम्प्रदानकं चेत्युभयनियम इति कल्पतरुः । 'अमावास्यां य
तत् पार्वणमिति स्मृतम् । क्रियते वा पर्वणि यत्तत् पार्वणमिति स्थितिः ॥' अ
'चतुर्दश्यष्टमी चैव अमावास्या च पौर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रमणं
इति **विष्णुपुराणोक्तं** संक्रान्त्यादि 'गोष्ठ्यां यत् क्रियते श्राद्धं गोष्ठीश्राद्धं त
बहूनां विदुषां संपत्सुखार्थं पितृतृप्तये ॥ क्रियते शुद्धये यत्तु ब्राह्मणानां तु भो
शुद्ध्यर्थमिति यत् प्रोक्तं वैनतेय मनीषिभिः ॥ निषेककाले सोमे च सीमन
तथा । ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव च ॥ देवानुद्दिश्य यच्छ्राद्धं तत्तु

१–पिण्डदानादेरनंगत्वेन । २–पिण्डदानमात्रप्राधान्यवादिनां निषिद्धपर्युदस्तपिण्डदानवे

च्यते । गच्छन् देशान्तरं यस्तु श्राद्धं कुर्यात्तु सर्पिषा ॥ यात्रार्थमिति तत् प्रोक्त
च न संशयः । शरीरोपचये श्राद्धमर्थोपचय एव च ॥ पुष्ट्यर्थमेतद्विज्ञेयमौपच
मुच्यते ॥' गोष्ठ्यां श्राद्धकर्तृसमुदाये संभूयसामग्रीसंपादनेन श्राद्धमित्यर्थः । यु
र्थादिमातौ विदुषां श्राद्धसंपदासुखार्थं भिन्नपाकाशक्तौ बहुपितृकश्राद्धमेकः कु
कल्पतरुः **शङ्खधरश्च** । शुद्धिश्राद्धं प्रायश्चित्ताङ्गमिति **मैथिलाः** ॥
पार्वणैकोद्दिष्टवृद्धिसपिण्डीकरणात्मकं चतुर्विधमेव मुख्यम् । तस्यैवायं प्रपञ्चः ॥

**अथ श्राद्धदेशाः । मनुः**-'शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत् । दक्षि
वणं चैव प्रयत्नेनोपपादयेत् ॥' **पृथ्वीचन्द्रोदये विष्णु**

श्राद्धदेशाः ।

'दक्षिणाप्रवणे देशे तीर्थादौ च गृहेपि वा । भूसंस्कारादि
श्राद्धं कुर्यात् प्रयत्नतः ॥' तत्रैव **प्रभासखण्डे**-'तीर्थादष्टगुणं पुण्यं स्वगृहे
शुभे ॥' **भारते**-'तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ॥ प्रभासं
चेति तेषु श्राद्धं महाफलम् ॥' **स्कान्दे**-'तुलसीकाननच्छाया यत्रयत्र भवे
तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे' ॥ **माधवीये श्राद्धोपक्रमे व्या**
'महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले ॥' **शङ्खः**-'गङ्गायमुनयोस्तीरे पय
मरकण्टके ॥ नर्मदावाहुदातीरे भृगुलिङ्गे हिमालये ॥ गङ्गाद्वारे प्रयागे च
पुष्करे तथा । सन्निहत्यां गयायां च दत्तमक्षयतां व्रजेत् ॥ अपि जायेत सो
कुले कश्चिन्नरोत्तमः । गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः ॥
बहवः पुत्रा यद्येकोपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत
**आदित्यपुराणे**-'पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः । महानद्याः पश्चिमेन
गृध्रेश्वरो गिरिः ॥ उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम् । एतद्गयाशिरो नाम
लोकेषु विश्रुतम्' ॥ इति । **शूलपाणौ बृहस्पतिः**-'गङ्गायां धर्मपृष्ठे च सरसि ब्र
स्तथा । गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥ धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव
दृष्ट्वैतानि पितॄंश्चार्चन् वंशान्विंशतिमुद्धरेत् ॥' **त्रिस्थलीसेतौ वायवीये**-'शमी
प्रमाणेन पिण्डं दद्याद्गयाशिरे । उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतम् ॥' सप्तगो
तु-'पिता माता च भार्या च भगिनी दुहिता तथा । पितृमातृष्वसा चैव सप्त गो
वै विदुः' ॥ इति । एषां गोत्राणामेकोत्तरशतं कुलम् । पुरुषा इत्यर्थः । ते चोक्त
त्रैव-'तत्त्वानि विंशतिनृपा द्वादशैकादश दश । अष्टाविति च गोत्राणां कुलमेव
शतम् ॥' तत्त्वानि चतुर्विंशतिः । ते च द्वादश पूर्वाः । द्वादश पराः । एवमग्रेपि । प्र

गपरिजाते पाद्मे–'शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् । वाराणस्यां यवाधि
समंताद्योजनत्रयम् ॥' तथा–'यत्किंचित् पैतृकं कुर्यात्सपिण्डं वा तदन्तिके । विष्णुलो
स गच्छेत्तु लभते शाश्वतं पदम् ॥' तत्रैव वाराहे–'चक्राङ्कस्य तु सान्निध्ये यत् श
क्रियते नरैः । स्नानं दानं तपः श्राद्धं सर्वमक्षयतां व्रजेत् ॥'

अथ निषिद्धदेशाः । पृथ्वीचन्द्रोदये स्कान्दे–'त्रिशंकोर्वर्जयेद्देशं सर्वं द्वाद
योजनम् । उत्तरेण महानद्या दक्षिणेन तु कीकटान् ॥ देशस्त्रैशंक
नाम श्राद्धकर्मणि वर्जितः ॥' वायवीये–'प्रणष्टाश्रमधर्माश्च दे

निषिद्धदेशाः ।

वर्ज्याः प्रयत्नतः ॥' यमः–'रूक्षं कृमिहतं क्लिन्नं संकीर्णानिष्टगन्धिकम् । देशं त्वनि
शब्दं च वर्जयेच्छ्राद्धकर्मणि ॥' तत्रैव शंखः–'गोगजाश्वादिजुष्टेषु कृत्रिमायां त
भुवि । न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥' यमः–'परकीयप्रदेशेषु पितॄण
निर्वपेत्तु यः । तद्भूमिस्वामिपितृभिः श्राद्धकर्म विहन्यते ॥' ब्राह्मभारतयोरपि
परकीयगृहे यस्तु स्वान् पितॄंस्तर्पयेद्यदि । तद्भूमिस्वामिनस्तस्य हरन्ति पितरो बलात्
अग्रभागं ततस्तेभ्यो दद्यान्मूल्यं च जीवितम् ॥' श्राद्धार्हाणामग्रभागश्राद्धम्–तदनर्हाण
शूद्राणां तु मूल्यमिति केचित् । षोडशीपिण्डे बान्धवानामपि पिण्डोक्तेः । 'येऽब
न्धवा बान्धवा वा' इत्यादितर्पणबाधापत्तेश्च । नामगोत्रपूर्वं श्राद्धनिषेधो नान्यत्रे
गौडाः । विप्रासु तस्य शूद्रापुत्रश्राद्धनिषेधो नान्यत्र । अन्नदानं चान्नत्यागात्पूर्वं का
मिति मैथिलाः । तन्न । अग्रभागस्य श्राद्धपरत्वे मानाभावात् । अन्नदाने निषेधाभ
वात् । त्यागात्पूर्वं करणेऽनङ्गेन व्यवधानापत्तेः । अङ्गत्वे च मानाभावात् । इदं
स्वाम्यनुज्ञाभावे । तदुक्तं तत्रैव ब्राह्मे–'स्वनुलिप्तेषु गेहेषु स्वेष्वनुज्ञापितेषु च । श्राद्ध
तेषु दातव्यं वर्ज्यमेतेषु नोच्यते ॥ किरातेषु कलिङ्गेषु कौंकणेषु खसेष्वपि । सिन्धोरु
रकूलेषु नर्मदायाश्च दक्षिणे । पूर्वेण करतोयाया न देयं श्राद्धमुच्यते ॥' इदं काम्य
विषयम् । ह्यन्यथा तत्रत्यानां सर्वश्राद्धाकरणापत्तेः । नर्मदादक्षिणेऽपवादः स्कान्दे
'सह्यस्य चोद्भवो यत्र यत्र गोदावरी नदी । पृथिव्यामपि कृत्स्नायां स प्रदेशोस्तिप
वनः ॥' परकीयत्वापवादः–आदित्यपुराणे–'अटवी पर्वताः पुण्या नदीतीरा
यानि च । सर्वाण्यस्वामिकान्याहुर्नहि तेषु परिग्रहः ॥ वनानि गिरयो नद्यस्तीर्थान्याय
तनानि च ॥ देवखाताश्च गर्तश्च न स्वाम्यं तेषु विद्यते ॥' स्मृतिसारे–'नैकवास
न च द्वीपे नान्तरिक्षे कदाचन । श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित् ॥
दिवोदासीये–'म्लेच्छदेशे तथा रात्रौ संध्यायां विप्रवर्जिते । न श्राद्धमाचरेद्विद्वा

न चक्षेषु चेहन्ते पितरो हि मघास्वपि ॥ पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥' इति शातातपपाठः। नवोदके नवकूपवाप्यादाविति केचित्। वर्षोपक्रमे आर्द्राप्रवेश इति गौडाः। नवान्नश्राद्धे विशेषो ज्योतिषे-'ज्येष्ठाशेषार्धगे सूर्ये मृगनेत्रानिशात्मके नवान्नभोजनश्राद्धं जन्मचन्द्रतिथौ न च ॥ आश्लेषाकृत्तिकाज्येष्ठामूलाजपदगेषु च। गुरुभौमदिने रिक्ते तिथौ नाद्यान्नवोदनम् ॥' तत्रैव-'वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः ॥' अतः कृष्णपक्षे नेति गौडाः। मैथिलास्तु-'अकृताग्रयणं चैव धान्यजातं नरोत्तम'। इति वराहोक्तेः। प्रतिधान्यं श्राद्धमाहुस्तन्न। जातपदस्य श्राद्धयोग्यसमूहपरत्वात्। हेमाद्रौ जातूकर्ण्यः-'ग्रहोपरागे च सुते च जाते पित्र्ये गयायामयनद्वये च। नित्यं च शंखे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम् ॥ शंखं प्राहुरमावास्यां क्षीणचन्द्रां द्विजोत्तमाः। अष्टकासु भवेत्पद्मं तत्र दत्तं तथाऽक्षयम् ॥' तत्रैव शंखः-'यदा विष्टिर्व्यतीपातो भानुवारस्तथैवच। पद्मकं नाम तत् प्रोक्तमयनाच्च चतुर्गुणम् ॥' याज्ञवल्क्यः-'अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यंब्राह्मणसम्पत्तिर्विषुवत्सूर्यसंक्रमः ॥ व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः। श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्तिताः ॥' कृष्णपक्षः सर्वोऽपि। 'शाकेनापरपक्षं नातिक्रमेत मासिमासि वाऽशनम्।' इति श्रुतेः। 'ऊर्ध्वं वा चतुर्थ्या यदहः संपद्यते ऋते चतुर्दशीम्।' इति कात्यायनोक्तेः। मासिमासि कार्यमपरपक्षस्यापराह्णः श्रेयान्।' इत्यापस्तंबोक्तेश्च। वीप्सया सर्वं कृष्णपक्षेषु नित्यम्। तेनोपसंहारान्महालयपरत्वं परास्तम्। अत्र प्रत्यहं १ पञ्चम्यादि २ यदहः संपत्तिर्वा ३ इति त्रयः पक्षाः। यदैकदिने श्राद्धं तदा दार्शं पृथगेव। याज्ञवल्क्येनामावास्यायाः पृथङ् निर्देशात्। एतेन कृष्णपक्षे यदहः सम्पद्यते अमावास्यायां तु विशेषेण इति निगमोक्तेर्गुणोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणिमतमप्यपास्तम्। 'अशक्तौ दर्शेनापि मासि श्राद्धसिद्धिः' इति नारायणवृत्तिः। निरग्निकानां कस्मिंश्चिद्दिने। आहिताग्नेस्तु दर्श एव। 'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः' इति मनूक्तेः। सर्वकृष्णपक्षाशक्तौ मात्स्ये-'अनेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्। कन्याकुम्भवृषस्थेऽर्के कृष्णपक्षे च सर्वदा ॥' कर्कोऽपि-'आहिताग्नेः संवत्सरे त्रिः श्राद्धनियमः।' इति। देवलः-'अनेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत्। द्विश्चतुर्वा यथाश्राद्धं मासेमासे दिनेदिने ॥' कृष्णपक्षेष्वपि महालयस्य श्रेष्ठत्वम्। तच्चोक्तं प्राक्। व्यतीपाते विशेषमाह हेमाद्रौ शंखः-'फलं लक्षघ्नमुत्पत्तौ भ्रमणे कोटिरुच्यते। पतने शतकोट्यस्तु पाते वै दत्तमक्षयम् ॥' ज्योतिःशास्त्रे-'द्वाविंशतिस्तथोत्पत्तौ भ्रमणे चैकविंशतिः। पतने दशनाड्यस्तु पतिते

न्नने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः '
मैत्रायणीयपरिशिष्टोक्तेः ।

तिथिविशेषे फलविशेषो याज्ञवल्क्येनोक्तः–'कन्यां कन्यावेदिनश्च
सत्सुतानपि । द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा ॥ ब्रह्मवर्चस्विनः पुत्रा
रौप्ये सकुप्यके। ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥ प्रतिपत्प्रभृतिष्वे
यित्वा चतुर्दशीम् ॥' एताः कृष्णपक्षस्था एव । महालये तु फलभूमेति पृथ्वी
द्यः । पौर्णमास्यां हेमाद्रौ पितामहः–'अमावास्यां व्यतीपाते पौर्णमास
च । विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥' एतन्माघ्यादिपरम् । 'व्रीहिपाके च
यवपाके च पार्थिव । पौर्णमासी तथा माघी श्रावणी च नृपोत्तम ॥ प्रौष्ठपद्याम
तथा कृष्णात्रयोदशी॥एतांस्तु श्राद्धकालान्वै नित्यानाह प्रजापतिः ॥' इति विष्
क्तेः । विष्णुः–'माघी प्रौष्ठपद्यूर्ध्वं कृष्णा त्रयोदशी' इति । अत्र माघी पौर्ण
कल्पतरुः। 'श्रावण्यूर्ध्वमपि माघयोगसंभवात्रयोदशीविशेषणम्' । इति गौडाः।
क्वापि याज्ञवल्क्यः–'स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा । पुत्राञ्छ्रैष्ठ्यं
भाग्यं समृद्धिं मुख्यतां शुभम् ॥ प्रवृत्तचक्रतां वापि वाणिज्यप्रभृतीनपि । अरो
शो वीतशोकतां परमां गतिम् ॥ धनं वेदान् भिषक्सिद्धिं कुप्यं गामप्यजाविकम्
नायुश्च विधिवद्यः श्राद्धं सम्प्रयच्छति कृत्तिकादिभरण्यन्तं स कामान् प्राप्नुया
फलान्तराण्यपि महाभारते कौमार्देर्ज्ञेयानि । माधवीये मरीचिः–'कृ
ऋक्षेषु श्राद्धे यत् फलमीरितम् । विष्कम्भादिषु योगेषु तदेव फलमिष्यते ॥' बृह
–'आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयम् । सर्वान् कामान् प्रियां विद्यां धन
थाक्रमम् ॥ सूर्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम् । बवादिकरणेष्वेतच्छ्राद्ध
फलम् ॥' अन्यानि च षण्णवतिश्राद्धादीनि प्रागुक्तानि । मार्कण्डेयपुराणे–'
द्रव्यसंपत्तौ तथा दुःस्वप्नदर्शने । जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया ॥

अथ श्राद्धाधिकारिणः । चन्द्रिकायां सुमन्तुः–'मातुः पितुः प्रकुर्वीत
तस्यौरसः सुतः । पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादितः ॥

[श्राद्धाधिकारिणः ।]

हेमाद्रौ शंखः–'पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रियाः।
तु पत्नी स्यात्तदभावे तु सोदरः ॥'अत्र यद्यपि पुत्रपदं क्षेत्रजादिद्वादशविधपुत्रपर
च द्वादश पुत्रा याज्ञवल्क्येनोक्ताः–'औरसो धर्मपत्नीजस्ततसमः पुत्रिकासुतः
जः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥ गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।

यकृतः। दत्तान्नातुः स्वयं दत्तो गर्भे विन्नः सहोढजः ॥ उत्सृष्टो गृह्यते यस्तु सो भवेत्सुतः। पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः ॥' इति। तथापि 'दत्तौरसेतरेष त्रत्वेन परिग्रहः।' इति **हेमाद्रावादित्यपुराणे**। कलावितरेषां पुत्रत्वनिषेधादौ कमेव। यद्यपि 'पिण्डदोंशहरश्चैषां पूर्वाभावे परः परः।' इति **याज्ञवल्क्योक्ते** भावे दत्तकप्राप्तिस्तथाप्यौरसाभावे पौत्रः, तदभावे प्रपौत्रः, तदभावे दत्तकाद ज्ञेयम् 'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्य विष्टपम् ॥' इति **जीमूतवाहनधृतवसिष्ठहारीतशंखलिखितोक्तेः**। 'ल न्त्यं दिवः प्राप्ति पुत्रपौत्रप्रपौत्रकैः।' इति **याज्ञवल्क्योक्तेश्च** 'पुत्रः पौत्रश्च पुत्रिकापुत्र एव च। पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा। भगिनी भ यश्च सपिण्डः सोदकस्तथा। असंनिधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ॥' इ **स्मृतिसंग्रहे**—'प्रपौत्रानन्तरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च दत्तकस्य'। यद्यपि **क्र तिना**—'पुत्रश्च पुत्रिकापुत्रः स्वयंप्राप्तिकरावुभौ। रिक्थे च पिण्डदाने च समानौ कीर्तितौ ॥ इति पौत्रसाम्यमुक्तम्। **याज्ञवल्क्येन च**—'औरसो धर्मपत्नीजस्त पुत्रिकासुतः'। इति औरससाम्यम्। तथापि 'लोके राजसमो मन्त्री' इत्यादौ न्यूने समशब्दप्रयोगात्। गौणमुख्ययोः साम्ययोगाच्च स्तुत्यर्थं तत् न तु समा इति भ्रमितव्यम्। 'पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसंततिः। सपिण्डसंत क्रियार्हा नृप जायते। तेषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षसपिण्डेन न्धो यो जलेन वा। कुलद्वयेपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप। तत्संघ वापि तद्रिक्थात्कारयेन्नृप ॥' इति **विष्णुपुराणाच्चेति**। प्रपौत्रानन्तरं दत्तकाद **पृथ्वीचन्द्रमदनरत्नकालादर्शादयः**। **मदनपारिजातेप्येवम्**।

**बोपदेवरुद्रधरादयस्तु**—'पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम्' **सुमन्तूक्तौ**—'पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति। पौत्रेणैकादशाहादि श्राद्धषोडशम् ॥ नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः ॥' इति **च्छन्दोग** शिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात्। 'पूर्वाभावे परः परः इत्यस्य परत्वाच्च दत्तकाद्यभावे पौत्रादीनामप्यधिकार इत्याहुः। तद्गौणमुख्ययोः सा गाद्दत्तके सति पौत्रस्यांशहरत्वस्याप्यभावापत्तेः। पुत्रपदस्यौरसमात्रपरत्वाच्चिन्त अत एव निषेधादुपनीतपौत्रसत्त्वेप्यनुपनीतपुत्रस्यैवाधिकारः। 'औरसश्चानुपन कुर्यात्।' इत्याह **पृथ्वीचन्द्रोदये सुमन्तुः**—'श्राद्धं कुर्यादवश्यं तु

यावन्मौञ्जी निबध्यते । मन्त्राननुपनीतोपि पठेदेवैक औरसः॥' अयं मन्त्रपा तच्चूडस्यैव । 'अनुपेतोपि कुर्वीत मन्त्रवत् पैतृमेधिकम् । यद्यसौ कृतचू स्याच्च त्रिवत्सरः ॥' इति सुमन्तूक्तेः । यत्तु व्याघ्रः—'कृतचूडस्तु कुर्वीत उ मेव च । स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥' इति । यच्च स्मृतिसंग्र डोनुपेतश्च पित्रोः श्राद्धं समाचरेत् । उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ तत् प्रथमवर्षचूडाविषयमिति माधवमदनरत्नपृथ्वीचन्द्राः । त्रिवर्षोर्ध्वं विकल्प इति चन्द्रिका बोपदेवश्च । दत्तकादिपरो निषेध इति वयम् ।

मदनरत्ने स्कान्दे—'यज्ञेषु मंत्रवत्कर्म पत्नी कुर्याद्यथा नृप । तथौर्ध्वदै कुर्यात्सा धर्मसंस्कृता ॥' अशक्तौ तु कात्यायनः—असंस्कृते तु पत्न्या च समन्त्रकम् । कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥' पुत्रश्च न जन्मतोधिकार वर्षोत्तरमित्याह कालादर्शः । 'चौलादाद्याब्दिकादर्वाङ् न कुर्यात्पैतृमेधिक नरत्ने सुमन्तुरपि—'पुत्रश्चोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात् ॥ पितरं नो लात्पैतृमेधेन कर्मणा ॥' एतच्चौरसस्यैव । दत्तकादीनां तूपनीतानामेवा कालादर्शः । पृथ्वीचन्द्रोदयेपि स्कान्दे—'पित्रोरनुपनीतोपि विदध्यादौ और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥' इति । अन्यत्रापि दर्शमहा पनीतस्याधिकारोस्माभिः पूर्वमुक्तः । प्रपौत्राभावे दत्तकादय एकादश पुत्रा भावे भर्तुः पत्नी तस्याश्च सः । 'अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥' इति वृद्धमनूक्तेः 'भार्यापिण्डं प भार्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः ॥' इति । 'पुत्राभा स्यात्पत्न्यभावे तु सोदरः ।' इति च हेमाद्रौ शंखोक्तेः । पृथ्वीचन्द्रो 'कानीनगूढसहजपुनर्भूतनयाश्च ये । पत्न्यभावे पि कुर्युस्ते अप्रशस्ताः स्मृता इति स्मृतिसंग्रहात् । पत्न्यभावे कानीनादय इत्याह ।

पत्युरपि सपत्नीपुत्रे सति नाधिकारः । 'पितृपत्न्यः सर्वा मातरः इति सु 'विदध्यादौरसः पुत्रो जनन्या और्ध्वदैहिकम् । तदभावे सपत्नीजः क्षेत्रजाद्य स्तथा ॥ तेषामभावे तु पतिस्तदभावे सपिण्डकाः' इति मदनरत्ने कात्यायन 'बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः । एका चेत् पुत्रिणी तासां सर्वासां सः ॥' इति बृहस्पतिवचनाच्च । अपरार्केप्येवम् । तेन यच्छुद्धिविवे सत्यापि सपत्नीपुत्रे पत्युरेवाधिकारः' इति । तन्निरस्तम् । यच्च तत्रैव

१—ऋणमोचनस्य हेतुत्वम् । अध्ययनतो वसतीतिवत् । २ आ आब्दिकात् इति च्छे मवर्षीयचौलादि नेति तदर्थः । इति टीका ।

यनः–'न भार्यायाः पतिर्दद्यादपुत्राया अपि क्वचित् ॥' यच्च विष्णु
'कुलद्वयेपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप' इति । यच्च मार्क
गम्–'सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्' इति । तदासुरादि
विषयम् । 'धर्म्यैर्विवाहैरूढा या सा पत्नी परिकीर्तिता । [२]क्रयक्रीता तु
न सा पत्न्यभिधीयते । न सा दैवे न सा पित्र्ये दासीं तां मुनयो विदुः
माधवीये शातातपोक्तेः । यत्तु शुद्धिरत्नाकरः शूलपाणिश्च–'
या पुत्री सापि पिण्डप्रदा भवेत् । तस्य पिण्डान् दशैकं वा एकाहेनैव निक्षि
जाबालोक्तेः । 'भर्तुर्धनहरा पत्नी तां विना दुहिता स्मृता । अङ्गादङ्गात्सं
वद् दुहिता नृणाम् ॥' इति बृहस्पतिना दुहितुर्धनहारित्वोक्तेश्च 'पुत्रा
तदभावे सपत्नीपुत्रः'। इत्याहतुः । तत्पूर्वविरोधात् । 'मातुर्दुहितरः शेष
ऋतेन्वये ।' इति दुहितुर्मातृधनग्राहित्वेन पुत्रस्य तच्छ्राद्धानधिकारापत्तेश्च
[३]वचनं तु भ्रातृपुत्राद्यभावविषयम् । पत्न्यभावे अविभक्तस्य सोदरः पूर्वोक्त
विभक्तस्य तु दुहिता । धनहारित्वात् । पूर्वोक्तजाबालवचनाच्च । तत्राप
वाये ऊढैव । 'दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता । आशौचमुदकं पि
सदा तयोः ॥' इति भरद्वाजोक्तेः । तदभावे दौहित्रः धनहारित्वात्
पित्रोरुपाध्यायाचार्ययोरौर्ध्वदैहिकम् । कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रत
चन्द्रिकायां वृद्धमनूक्तेः । 'यथा व्रतस्थोपि सुतः पितुः कुर्यात् क्रि
उदकाद्यां महाबाहो दौहित्रोपि तथार्हति ॥' इत्यपरार्के भविष्योक्तेश्च
नहारिणः आवश्यकं नान्यस्येत्याह तत्रैव । स्कान्दे–'श्राद्धं मातामहानां
धनहारिणा । दौहित्रेणार्थनिष्कृत्यै कर्तव्यं पूर्वमुत्तरम् ॥' इति । तेन दौहित्रो
इति देवयाज्ञिकोक्तिः परास्ता । अत्र पत्नीदौहित्रसमवायेंशहरत्वात् पत्नी

१ अत्र द्वावुपन्यासौ 'न भार्यायाः' इत्याद्यः 'कुलद्वयेपि च' इति द्वितीयः । तत्र
तीयं निरस्यति–तदासुरेत्यादि । **अयं भावः**–स्त्रीपदद्वयं न पत्नीपरम् । अमन्त्रकम् इ
त् । पत्न्याः समन्त्रकर्माम्नानात् । पुत्राभावे पत्नीविधानेन सर्वाभावे विधानासम्भवाच्च
न्योढापरम् । एवं च 'कुलद्वयेपि चोत्सन्ने'–इति मातुलाद्यभावे बान्धवान्ताभावे य
युक्त इति । एतेन मन्त्रवत्क्रियाकर्त्री पत्नी । तदभावेऽमन्त्रकाक्रियाकर्त्र्य एता इत्यप
टीका । २ 'कन्यामुपयच्छेत' इति विधिसत्त्वेपि क्रय एव यज्ञसंयोगादिविघटक इति
पत्नीत्वमित्यर्थः । इति टीका । ३–'न भार्यायाः पतिः–' इत्यादि पूर्वोपन्यासे 'आ

दौहित्रभ्रातृपुत्रसत्त्वे विभक्तस्य दौहित्रः, अविभागे भ्रातृपुत्रः । भ्रातृतत्पु
कनिष्ठश्चेत् भ्रातैव । ज्येष्ठश्चेत्तत्पुत्रः कुर्यादिति **दाक्षिणात्यग्रंथाः । हारलताद**
'भ्रातुर्भ्राता स्वयं चक्रे तद्भार्या चेन्न विद्यते । तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहो
इति **ब्राह्मोक्तेः** । 'पत्नी कुर्यात्सुताभावे पत्न्यभावे सहोदरः ।' इति **कौम**
ज्येष्ठभ्रातैव कुर्यान्न तत्पुत्रः । यत्तु 'नानुजस्य तथाग्रजः' इति तत् कनिष्ठभ्रात
विषयम् । **यच्च मनुः**—'सर्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत् । सर्वांस्तांस्तेन
पुत्रिणो मनुरब्रवीत्' ॥ इति तत्सहोदराभावविषयमित्युक्तम् । एतेन पुत्रत्वाति
यम् । अतस्तस्मिन् सति एकादश पुत्राः प्रतिनिधयो न कार्याः । स एव पिण्डदे
रश्चेति । अत्रापि **वाचस्पतिमनुटीकाकल्पतरुरत्नाकरादयः** परास्ताः ।
दशविधपुत्राभावे पत्नीदुहितरः' इति **याज्ञवल्क्योक्तेश्च** । तस्माद्दत्तकपुत्रप्रशंसेय
**विज्ञानेश्वरः** । अविभक्तविषयं वा । **मदनरत्ने स्मृतिसंग्रहे**—'पुत्रः कुर
तुःश्राद्धं पत्नी च तदसंनिधौ । धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः ॥
सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः ॥ ततस्त्वसोदरो भ्राता तदभावे च तत्सु
इति । भ्रातृपुत्राभावे क्रमेण पितृस्नुषास्वसृतत्पुत्रादयः । धनहारित्वात् । भ
तत्सुतयोर्विशेषमाह **मदनरत्ने कात्यायनः**—'अनुजा अग्रजा वापि भ्रातुः
संस्क्रियाम् । ततः स्वसोदरास्तद्वत्क्रमेण तनयस्तयोः ॥ **अपरार्के कार्ष्णाजि**
'पुत्रः शिष्योथवा पत्नी पिता भ्राता स्नुषा गुरुः । स्त्रीहारी धनहारी च कुर्याति
दकक्रियाम् ॥' **मार्कण्डेयपुराणे**—'पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा
वित्ताभावेपि शिष्यश्च कुर्वीरन्नौर्ध्वदैहिकम् ॥' तेन धनहारी एतद्भिन्न इति क
दर्शः । अत्र पाठक्रमो न विवक्षितः । पूर्ववाक्येष्वथ ततश्शब्दादिभिः श्रौ
मोक्तेः । '**अथ जिह्वाया अथ वक्षसः**' इतिवत् ।

**पृथ्वीचन्द्रोदये वृद्धमनुः**—'स्नुषास्वस्रीयतत्पुत्रज्ञातिसम्बन्धिबान्धवाः । पुत्र
तु कुर्वीरन्सापिण्डान्तं यथाविधि ॥' **मार्कण्डेयपुराणे**—'पुत्राद्युत्सन्नबन्धोश्च स
श्वशुरस्य च । जामाता स्नेहवत्कुर्यादखिलं पैतृमेधिकम् ॥' **चन्द्रिकायां वृद्ध**
**शातपः**—'मातुलो भागिनेयश्च स्वस्रीयो मातुलस्य च । श्वशुरस्य गुरोश्चैव सख्यु
महस्य च ॥ एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा । श्राद्धमेषां तु
र्यामिति वेदविदो विदुः ॥' **शुद्धिविवेके पृथ्वीचन्द्रोदये च ब्राह्मे**—'दत्तानां च
दत्तानां कन्यानां कुरुते पिता । चतुर्थेहनि तास्तेषां कुर्वीरन् सुसमाहिताः॥'दत्ता वाग्द

संचयनपरम् । **कालादर्शे**–'दाहादि मन्त्रवत् पित्रोर्विदध्यादौरसः सुतः । तव
पौत्रश्च प्रपौत्रः पुत्रिकासुतः ॥ दौहित्रो धनहारी च भ्राता तत्पुत्र एव च । पित
स्नुषा चैव स्वसा तत्पुत्र एव च ॥ सपिण्डः सोदको मातुः सपिण्डश्च सहोदकः
शिष्यर्त्विगाचार्या जामाता च सखापि वा ॥ उत्सन्नबन्धोरिक्थेन कारयेदवनी
**गौतमः**–'पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युः । तदभावे ऋत्विगा
यत्तु **चंद्रिकायां वृद्धशातातपः**–'प्रीत्या श्राद्धं प्रकर्त्तव्यं सर्वेषां वर्णलिंगि
इति तत्सवर्णविषयम् । 'ब्राह्मणस्त्वन्यवर्णानां न कुर्यात्कर्म किंचन । कामाल्लो
न्मोहात्कृत्वा तज्जातितां व्रजेत् ॥' इति **ब्राह्मोक्तेः** । 'न ब्राह्मणेन कर्त्तव्यं
प्यौर्ध्वदेहिकम् । शूद्रेण वा ब्राह्मणस्य विना पारशवात्क्वचित्' ॥ इति **पार**
**क्तेश्च** ॥ पारशव ऊढशूद्रापुत्रः ॥

**अत्रेदं तत्त्वम्** । सर्वत्र पुत्रादेः सर्वस्याभावे पत्न्यादेरधिकार उक्तः । तत्रा
न्निधिर्नाशश्चोच्यते । अत एव पूर्वत्र 'असन्निधाने पूर्वेषाम्' इत्युक्तम् । तत्र
पत्न्यादेः सर्वाधिकारे प्राप्ते 'प्रोषितावसिते पुत्रः कालादपि चिरादपि । एका
क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ॥ ज्येष्ठेनैव तु यत्कृतम्' इत्याद्यैर्देशान्तरेऽपव
नाशे एव पत्न्यादेः सपिण्डनादावधिकारः । असंनिधौ तु तत्पूर्वमेव नोर्ध्वम् ।
नधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्तनीयम् । मासिकापकर्ष
नीयः ॥ एकादशाहमासिकानि नावर्तन्ते । 'तज्ज्यायसापि कर्तव्यं सपिण्डीकर
इतिवदावृत्तिविधानाभावादिति केचित्तन्न । अस्य निर्मूलत्वात् । अतस्तदपि
तमावर्तते । वृद्धिश्रौतपिण्डपितृयज्ञार्थं तु कृतं नावर्तते । 'नासपिंड्याऽग्निमान् पु
यज्ञं समाचरेत् । न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥' इति वृद्धत्युत्तर
दिति । 'भ्राता वा भ्रातृपुत्रो वा' इत्यादि**हारीतादि**वचोभ्यः कनिष्ठादेरप्यधि
यथात्र ज्येष्ठकर्तृकत्वबाधः, तथा पुत्रकर्तृकत्वस्यापि बाधः । सपिण्डने तु व
तन्निर्णये वक्ष्यामः ।

---

१ 'यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् । स पारयन्नेव शवस्तस्मात्पारशवः स्मृत
क्षणः २–'पुत्राभावे तु पत्नी स्यात्' इत्यादेः 'पितुः पुत्रेण कर्तव्याः पिण्डदानोदकक्रिया
देश्च सामान्यशास्त्रस्य सपिण्डनविषये बाधं विनाऽगतेरिति भावः । ३–अधिकारभ्रमेण

अधिकारविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे—'पूर्वाः क्रिया मध्य
चैवोत्तराः क्रियाः । त्रिप्रकाराः क्रिया ह्येतास्तासां भेदाञ्छृणुष्व मे ॥ आद
हाच्च मध्ये याः स्युः क्रिया नृप । ताः पूर्वा मध्यमा मासिमास्येकोद्दिष्टसंज्ञि
पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रियाः पुत्र प्रोच्यन्ते ता
पितृमातृसपिण्डैश्च समानसलिलैस्तथा । तत्संघातगतैश्चैव राज्ञा वा धनहारिण
मध्याश्च कर्तव्याः पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथ
हानि तु कर्तव्याः स्त्रीणामप्युत्तराः क्रियाः' ॥ दौहित्रतत्पुत्रयोर्धनहारिणोर्
मन्यस्य धनहर्तुः 'यश्चार्थहरः स पिण्डदायी' इत्यापस्तम्बोक्तेः । 'प्रेत
र्याणि अकृत्वा धनहारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरे
पृथ्वीचन्द्रोदये व्याघ्रपादोक्तेः । मदनरत्ने स्कान्देपि—'मलमेत
द्रविणं यत्प्रकीर्तितम् ।' इत्युक्त्वा 'ऋषिभिस्तस्य निर्दिष्टा निष्कृति
परा । आदेहपतनात्तस्य कुर्यातिपण्डोदकक्रियाम् ॥' इत्युक्तम् । क्रियानिबन्धे
यनः—'न च माता न च पिता कुर्यात्पुत्रस्य पैतृकम् । नाग्रजश्च तथा भ्राता
कनीयसाम् ॥' पृथ्वीचन्द्रोदये बौधायनः—'पित्रा श्राद्धं न कर्तव्यं पुत्राण
चन । भ्रात्रा चैव न कर्तव्यं भ्रातॄणां च कनीयसाम् ॥ यदि स्नेहेन कुर्यात्तां
रणं विना । गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥' अन्याभावे
कुर्यात् । 'उत्सन्नबान्धवं प्रेतं पिता भ्राताथवाग्रजः । जननी चापि संस्कुर्यान्म
भवेत् ॥' इति सुमन्तूक्तेः ।

ब्रह्मचारिणां तु शुद्धिविवेके पृथ्वीचन्द्रोदये च ब्राह्मे—'असम
कर्तव्यं ब्रह्मचारिणः । श्राद्धं तु मातापितृभिर्न तु तेषां करोति सः ॥' श्राद्धं
विदकादि सर्वं कार्यमित्यर्थः । न त्विति निषेधोन्यसत्त्वे । यत्तु छन्दोगप
'न त्यजेत्सूतके कर्म ब्रह्मचारी स्वयं क्वचित् । न दीक्षणात्परं यज्ञे
तपश्चरन् ॥ पितर्यपि मृते नैषां दोषो भवति कर्हिचित् ॥ आशौचं
स्यात् त्र्यहं वा ब्रह्मचारिणाम् ॥' यच्च याज्ञवल्क्यः—'न ब्रह्मचारिणः कुर्यु
तास्तथा ।' इति तदप्यन्यसत्त्वे । अन्याभावे तु ब्रह्मचारिणापि कार्यं पूर्वो
वचनात् । 'आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ॥ संकटान्नं च न
तैः सह संवसेत् ॥' इति तेनैवोक्तेः । 'ब्रह्मचारिणः शवकर्मिणो व्रतान्निवृत्ति
पित्रोः ।' इति वसिष्ठोक्तेः । अत्राशौचमेकाहं वक्ष्यामः । प्रागुपन

क्रतं भवेत् ॥' ज्येष्ठस्य कर्तृत्वेपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्य नादयः फलसंस्काराः, ते सर्वेषां भवन्तीति सिद्धम् । संसृष्टिनामप्येवम् । तु विभक्तानां विशेषमाहोशनाः-'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश । कार्याणि संविभक्तधनेष्वपि ॥' लघुहारीतः-'सपिण्डीकरणान्तानि यानि षोडश । पृथङ् नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥ ऊर्ध्वं सपिण्डी कुर्युः पृथक्पृथक् ॥' मदनरत्ने-'विभक्तास्तु पृथक् कुर्युः प्रतिसंवत्सरादिकम् नेवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ॥' एतेनाब्दिकादिष्वविभक्तानामनियम इ शूलपाणिः परास्तः ॥

दत्तकस्तु जनकस्य पुत्राद्यभावे दद्यान्न तत्सत्त्वे । 'गोत्ररिक्थे जनयितुर्न भजे तः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥' इति मनूक्तेः। इदं जनकस्य विषयम् । एतच्च प्रवरमञ्जर्यां कात्यायनलौगाक्षिभ्यां स्पष्टमुक्तम् । 'अथ क्रीतकृत्रिमपुत्रिकापुत्राः परपरिग्रहेणानार्षेया जातास्ते द्व्यामुष्यायणा भवन्ति । 'शौङ्गशैशिरीणां यानि चान्यान्येवं समुत्पत्तीनि कुलानि भवन्ति ।'इत्यादिना द्वय प्रवरानुक्त्वोक्तम् ।'अथ यद्येषां स्वासु भार्यास्वपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्य दद्युर्यद्युभयोर्न स्यादुभाभ्यामेव दद्युरेकस्मिञ् श्राद्धे पृथगुद्दिश्यैकपिण्डे द्वावनुकी गृहीतारं चोत्पादयितारं चातृतीयात् पुरुषात्' इति हेमाद्रौ कार्ष्णाजिनिः- पितृवर्ज्याः स्युस्तावद्भिर्दत्तकादयः । प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह सहाय तत्पुत्राः पौत्रास्त्वेकेन तत्समम् । चतुर्थपुरुषे छन्दस्तस्मादेषा त्रिपूरुषी रणेषु कालेषु विशेषो नास्ति वर्गिणाम् । मृताहे त्वेकमुद्दिश्य कुर्युः श्राद्धं यथा इति । अस्यार्थमाह हेमाद्रिः-दत्तकादयः जनकपालकयोः कुले प्रेतानां सपिण्डनं कुर्युः । दत्तकानां पुत्रास्तु पितुर्दत्तकस्य पितृभ्यां जनकपालकाभ्यां महाभ्यां सपिण्डनं कुर्युः । तेषां पौत्राः स्वपितरं दत्तकेन पितामहेन तज्ज सपिण्डयेयुः । चतुर्थोपि तत्कुलस्थ एव । तेषां प्रपौत्रस्तु दत्तकस्य प्रपितामह ककुलस्थं चतुर्थं योजयेन्न वा । छन्द इच्छा दर्शमहालयादौ तु द्वयोः पुत्रोः हयोः प्रपितामहयोर्वा श्राद्धं देयम् । तत्र द्वयोः पित्राद्योः पृथक् पिण्डदानं द्व नैको वेति । अत्र केचित्-आवयोरयमिति परिभाष्य यो दत्तस्तस्येदं द्वयो श्राद्धम् । यस्त्वपरिभाष्य दत्तः स गृहीतुरेव स पालकायैव दद्यादित्याहुः । अत्र एव प्रष्टव्याः ॥

वस्तुतस्तु जनकस्य पुत्रपत्न्याद्यभावे दत्तको द्वयोर्दद्यादन्यथा पालकायै
कात्यायनवचनात् । मानवीयमप्येतद्विषयमेव । गोत्रं तु श्राद्धे पा
विवाहादौ तूभयोरित्यादि मत्कृतप्रवरदर्पणे ज्ञेयम् । यस्तु मूल्यक्रीतायां
दास्यां चोत्पन्नः स बीजिन एव दद्यात् । मूल्यं विना स्वयमुपनतायां तु क्षेत्रि
तदुक्तं पृथिवीचन्द्रोदये कौर्मे–'अनियोगात्सुतो यस्तु शुल्कतो जायते
द्याद्बीजिने पिण्डं क्षेत्रिणे तु ततोन्यथा ॥' इति । क्षेत्रजादेर्विशेषस्तु कलौ
नोच्यत इति दिक् । जारजानां विशेषमाहापरार्के नारदः–'जायंते त्वा
मेकेन बहुभिस्तथा । अरिक्थभाजस्ते सर्वे बीजिनामेव ते सुताः ॥ दद्युस्ते
पिण्डं माता चेच्छुल्कको हृता । अशुल्कोपहृतायां तु पिण्डदा वोढुरेव ते' ॥

धर्मार्थं श्राद्धकरणे फलमाह चन्द्रिकायां शातातपः–'प्रीत्या श्राद्धं
सर्वेषां वर्णलिङ्गिनाम् । एवं कुर्वन्नरः सम्यङ् महतीं श्रियमाप्नुयात् ॥ ग
तत्रैव ब्रह्मवैवर्ते–'आत्मजो वाथवान्योपि गयाशीर्षे यदा तदा । यन्नाम्ना
पिण्डं तन्नयेद्ब्रह्म शाश्वतम् ॥' एतच्च यदा फलप्रमार्थिना द्विस्त्रिर्वा क्रियते
श्राद्धवर्ज्यं कुर्यात् । तस्य प्रेतत्वविमोक्षार्थत्वात् । तस्य च जातत्वादिति
वस्तुतस्तु संन्यासिश्राद्धवदत्रापि सर्वं कार्यम् । साङ्गेधिकारादिति युक्तं
संन्यस्तपित्रादिस्तु पितः पित्रादिभ्यः सर्वश्राद्धेषु दद्यादित्युक्तं प्राक् ।
जीवत्पितृकश्राद्धे ॥

अत्र स्त्रीशूद्राणां श्राद्धं मंत्रवर्ज्यं तूष्णीं भवति । 'स्त्रीणाममन्त्रकं श्राद्धं त
सुतस्य च । प्राग्द्विजाश्च व्रतादेशात्ते च कुर्युस्तथैव तत् ॥' इति हेमाद्रौ
न्विवच्चनात्सिद्धम् । 'अयमेव विधिः प्रोक्तः शूद्राणां मंत्रवर्जितः । अम
शूद्रस्य विप्रो मन्त्रेण गृह्यते' ॥ इति ब्राह्मोक्तेश्च । गृह्यते संबद्धचते । अ
प्रकरणे पाठेपि परिभाषात्वान्न प्रकरणेन संकोचो युक्तः । तेन शूद्रस्य स्नानदा
विप्रेण मन्त्रपाठः कार्यः । अमन्त्रश्चेति विशेषणात् । स्त्रिया अपीति शूलपा
यत्तु तेनोक्तं मन्त्रजन्यनियमादृष्टसिद्धिस्तु नमस्कारेण अनुमतोस्य नमस्कारो
इति गौतमोक्तेरिति तन्न । दृष्टद्वारैव हि तत्प्राप्तिर्न स्वातन्त्र्येण । अन्यथ
पूतेप्यवघातजन्यादृष्टार्थं सोपि क्रियेतेति किंचिदेतत् । तेन 'पितॄणां नाम
इत्यादौ यत्र द्विजानामपि नाममन्त्र उक्तः तत्र प्रतिप्रसवमात्रार्थं युक्तम् । न
पनादावपि । अत्र केचित् । वैदिकमन्त्रो विप्रस्य, पौराणस्तु शूद्रैः पठनीय

तत्रैव **पाद्मोक्तेरि**त्याहुः । **गौडा**प्येवं तन्न । 'नाध्येतव्यमिदं शास्त्रं वृषल
न्निधौ ।' इति **कौर्मे** पुराणनिषेधेन वेदस्य दूरापास्तत्वात् । 'अध्येतव्य
वैश्येन क्षत्रियेण च । श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन ॥ श्रौतं
वै धर्मं प्रोक्तमस्मिन्नृपोत्तम । तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन
तत्रैव **पुराणाधिकारे भविष्योक्तेश्च** । एतेन 'नाध्येतव्यम्' इति निषे
तरपुराणपरः । इति **श्रीदत्तादि**मतमपास्तम् । तेन पौराणमन्त्राणामेव वि
न वैदिकानामिति सिद्धम् । द्विजस्त्रियस्तु संकल्पमात्रं स्वयं कृत्वा वैदिकमं

द्विजस्त्रीणां विशेषः ।

ब्राह्मणद्वारा कारयेयुरिति **प्रयोगपारिजातः** । अत
मित्यकृतविवाहस्त्रीपरमिति **हेमाद्रिराह** । 'अनुपनीत
मन्त्रयुक्तं सर्वं स्वयमेव कुर्यात्' इत्युक्तं [१]क् । यत्तु 'प्राक् द्विजाश्च व्रता
तदशक्ताविषयमचूडाविषयं वा इति दिक् ॥

**शूद्रस्य तु सदामश्राद्धमेव** । 'सदा चैव तु शूद्राणामामश्राद्धं विधी
**सुमन्तूक्तेः** । **पृथ्वीचन्द्रोदये मात्स्येपि**–एवं शूद्रोपि सामान्यं वृ
सर्वदा । **नमस्कारेण मन्त्रेण** कुर्यादामान्नवत्सदा ॥' तत्रैव **वृद्धपराश**
न्नेन तु शूद्रस्य तूष्णीं तु द्विजपूजनम् । कृत्वा श्राद्धं तु निर्वाप्य सजातीना
स एव 'आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते ॥' **हेमाद्रौ–भविष्ये**–
धर्मज्ञा यदि शूद्राः प्रकुर्वते । अग्नौकरणमन्त्रश्च **नमस्कारो विधीयते** ॥
**कर्तव्यं यथा शूद्रेण** तच्छृणु । देवानां देवनाम्ना तु पितॄणां **नामगोत्रतः** ॥
न्निर्वपेद्वीर **नामतो गोत्रतस्तथा** ।' शूद्राणां गोत्राभावेपि काश्यपं गोत्रं ज्ञेय
दाहुः सर्वाः प्रजाः काश्यप्यः' इतिः श्रुतेः । गोत्रनाशे तु काश्यपः' इति व्या
श्चेति **हेमाद्रिः** ॥ एवमन्यत्र गोत्राज्ञाने तर्पणादिषु च ज्ञेयम् । तत्रैव
'शूद्रस्तु गृहपाकेन न पिण्डान्निर्वपेत्तथा । सक्तुमूलं फलं तस्य पायसं
तम् ॥' **गौतमः**–'अनुमतोस्य नमस्कारो मन्त्रः' इति । 'देवताभ्यः

---

१–वस्तुतस्तु द्विजस्त्रीणां कारणे मन्त्रपठनाप्रसक्तेः । 'ते च–' इत्याद्यमन्त्रकत्वं
करणपक्षोपि वाच्यः । तत्रापि वेदश्रवणेऽधिकारात्समन्त्रकत्वकथनं पाठबोधनेनैवार्थवत्
स्त्वशक्तपरः । इति टीका । वस्तुतस्तु पूर्वोत्तरमीमांसयोः शूद्राणां वेदोच्चारणश्रवणाना
स्त्रीणामनधिकारबोधनस्याभावात् । 'जातिं तु बादरायणोऽविशेषात् । तस्माद्ध्यपि

इत्ययं नमस्कारमन्त्र इति केचित् । **विज्ञानेश्वरोऽप्येवमाह** । **हेमाद्रिस्तु**–'शूद्रो मन्त्रवत्कुर्यादनेन विधिना बुधः ।' इति **मात्स्ये** मन्त्रनिषेधान्नाममन्त्रेणेत्या पृथ्वीचन्द्रोदये **स्कान्दे**–'राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः । व्यसनेषु सर्वेषु श्राद्धं विप्रेण कारयेत् ॥' यत्तु **भारते राजधर्मेषु**–'यवनाः किराता गा राश्चीनाः शवरबर्बराः । शकास्तुषाराः कंकाश्च पह्लवाश्चान्ध्रमद्रकाः ॥' इत्यु 'ब्रह्मक्षेत्रे प्रसूताश्च वैश्याः शूद्राश्च मानवाः । कथं धर्मांश्चरिष्यन्ति सर्वे विष सिनः ॥' इति चोक्त्वा 'वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते । पितृयज्ञास्तथा प्रपाश्च शयनानि च । दानानि च यथाकालं द्विजेभ्यो विसृजेत्सदा ॥' तथा–'दक्षि सर्वयज्ञानां दातव्या भूतिमिच्छता । पाकयज्ञा महार्हाश्च कर्तव्याः सर्वदस्युभि इति म्लेच्छादीनां श्राद्धविधानम् । तदपि सजातीयभोजनद्रव्यदानादिपरं न तु श्रा रमिति ॥ ॥ **इति श्रीनारायणभट्टसूरिसूनुरामकृष्णभट्टात्मजकमलाक ट्टकृते निर्णयसिन्धौ श्राद्धाधिकारिनिर्णयः** ॥

**अथ पितरः** । **हेमाद्रौ मात्स्यदेवलौ**–'नामगोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः । अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ॥ नाममन्त्र दादेशा भवान्तरगतानपि । प्राणिनः प्रीणयन्त्येव तदाहारत्वमागत

श्राद्धपितरः ।

देवो यदि पिता जातः शुभकर्मानुयोगतः । तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति गांधर्वे भोगरूपेण पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठ पानं भवति यक्षत्वे राक्षसत्वे तथामिषम् । दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदक मनुष्यत्वेऽन्नपानादिनानाभोगकरं भवेत् ॥' अत्र पित्रादिशब्दैर्जनकादीनामेव देव मुच्यते । न वस्वादीनाम् । 'असावेतत्त इति यजमानस्य पित्रे' इति **शतपथश्रु** 'यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय' इति **विष्ण्वादिस्मृतेश्च** । यत्तु म **वलौ**–'वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः । प्रपितामहास्तथादित्याः रेषा सनातनी ॥' यच्च **याज्ञवल्क्यः**–'वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः । तद्भेदज्ञानार्थम् । यानि तु **हेमाद्रौ नंदिपुराणे**–'विष्णुः पितास्य जगतो दिव्यो स एव च । ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामहः ॥' इति । यच्च **भविष्ये**–' रुद्धः स्वयं ज्ञेयः प्रद्युम्नश्च पिता स्मृतः । संकर्षणस्तज्जनको वासुदेवस्तु तत्पिता ॥ कर्ता । यत्तु **तत्रैव**–'प्रथमो वरुणो ज्ञेयः प्राजापत्यस्तथापरः ॥ तृतीयोऽग्निः स्मृतः

प्रकीर्तिताः ॥ सुकालिनस्तु शूद्राणां व्यायामा म्लेच्छान्त्यजातिषु ॥' अत्रावा
पित्रादयः समुच्चयेन विकल्पेन वा यथाचारं तत्तद्देवतारूपेण वाच्याः ।
**हेमाद्र्यादयः** ।

**हेमाद्रौ ब्राह्मे**-'पार्वणं कुरुते यस्तु केवलं पितृहेतुकम् । मातामह्यं न
पितृहा स प्रजायते ॥' **धौम्यः**-'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्
शेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥' अस्यापवादमाह **कात्यायनः**-'कर्षू
मुक्त्वा तथाद्यं श्राद्धषोडशम् । प्रत्याब्दिकं तु शेषेषु पिण्डाः स्युः षडिति स्थि
कर्षूसमन्वितं सपिण्डीकरणम् । दर्शादौ सपत्नीकानामेव देवतात्वम् । 'स्वेन भ
श्राद्धे माता भुङ्क्ते सुधासमम् । पितामही च स्वेनैव तथैव प्रपितामही ॥' इ
वोक्तेः । **चन्द्रिकायां चतुर्विंशतिमते**-'क्षयाहं वर्जयित्वैकं स्त्रीणां नास्ति
क्रिया । केचिदिच्छन्ति नारीणां पृथक् श्राद्धे महर्षयः ॥ अन्वष्टकासु वृद्धौ च
च क्षयेहनि । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥' **इति कात्यायनो**
अस्य निर्मूलतां वदन्तो **गौडास्त्वज्ञा** एव । अत्र भाग इत्यध्याहारः ।
सपतिकायै मात्रे इति प्रयोगापत्तेः । अत्र मातृशब्दो जनन्यामेव मुख्यः । तेन
मातृभ्यो न दद्यात् । एवं पितामह्यादिशब्दैः पितृजनन्यादय एवोच्यन्ते इति
त्नीभ्यो न देयम्' इति **हेमाद्रिः** । 'कारुण्येन तु महालयादौ देयम्' इति स

**अथ विश्वेदेवाः** । **हेमाद्रौ शङ्खबृहस्पती**-'इष्टिश्राद्धे क्रतू दक्षौ
नान्दीमुखे वसू । नैमित्तिके कामकालौ काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव
समुदाहृतौ ॥' **तत्रैव**-'उत्पत्तिं नाम चैतेषां न विदुर्ये द्विज

विश्वेदेवाः ।

अयमुच्चारणीयस्तैः श्लोकः श्रद्धासमन्वितैः ॥ आगच्छन्तु म
विश्वेदेवा महाबलाः । ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥' इति । 'इ
प्रति रुचिः' इत्युक्तम् । इति **कल्पतरुः** । आधानादिकर्माङ्गमित्यन्ये । नै
कमेकोद्दिष्टम् । 'एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।' इति **भविष्यो**
एतद्यद्यपि 'एकोद्दिष्टं देवहीनम्' इति तत्र विश्वेदेवनिषेधस्तथापि नवश्राद्धे द्वा
सिके च कामकालौ ज्ञेयौ । नवश्राद्धं दशाहानि नवमिश्रं तु षडृतून् । अतः परं पु
त्रिविधं श्राद्धमुच्यते ॥ यस्मिन्नेव पुराणे वा विश्वेदेवा न लेभिरे । आसुरं तद्भ
वृषलं मन्त्रवर्जितम् ॥' इति **बह्वृचपरिशिष्टात्** । एतच्च बह्वृचानामेव,
वोक्तेः । अन्येषां तु-'नात्रविश्वेदेवाः' इति **कात्यानोक्तेस्तन्निषेध** एवेति पृ

यद्यपि सापिण्डीकरणेंशत एकोद्दिष्टत्वं तथापि 'सापिण्डीकरणश्राद्धं देवपूर्वं नियोज
इति वचनात्तत्परत्वम् । **हेमाद्रावादित्यपुराणे**–'विश्वेदेवौ क्रतुर्दक्षः सर्वासि
कीर्तितौ । नित्ये नान्दीमुखे श्राद्धे वसुसत्यौ च पैतृके ॥ नवान्नलम्भने देवौ
कालौ सदैव हि । अपि कन्यागते सूर्ये काम्ये च धूरिलोचनौ ॥ पुरूरवार्द्रवौ चैव
देवौ तु पार्वणे ॥' क्वचिद्विश्वेदेवापवादमाह **हेमाद्रौ शातातपः**–'नित्यं श्राद्ध
स्यादेकोद्दिष्टं तथैव च । मातुः श्राद्धं च युग्मैः स्याद्दैवं प्राङ्मुखैः पृथक् ॥ यो
देवपूर्वाणि श्राद्धान्यन्यानि यत्नतः ॥' नान्दीश्राद्धे भिन्नप्रयोगपक्षे मातुः श्राद्धम
मिति **हेमाद्रिः** ॥

**अथ विप्राः** । ते चोत्तममध्यमाधमभेदेन त्रिविधाः । तत्राद्याः । अत्र मद
श्लोकाः–'त्रिणाचिकेतस्त्रिमधुश्च बह्वृचोप्याथर्वणो याजुषसामगौ च । षडङ्ग
त्रिसुपर्णवेत्ताऽप्यथर्वशीर्ष्णोऽध्ययने रतश्च ॥ शतायुर्वेदार्थविदो प्र

उत्तमविप्रनिर्णयः ।

स्याद्ब्रह्मचारी च तथाग्निचिच्च । सीदद्वृत्तिः सत्यवाक्पूरुषैः
तापित्रोः पञ्चभिः ख्यातवंशः ॥ पत्नीयुक्तोज्येष्ठसामा पुराणवेत्ता पुत्री चेति
ष्वभिज्ञः । योगी भिक्षुः सामगो ब्रह्मवेत्ता पञ्चाग्निश्च श्रोत्रियस्तत्सुतो व
शंभुध्यायी श्रीशपादाब्जसेवी पान्थश्चैते तूत्तमाः संप्रदिष्टाः । भिक्षुर्योगी
एते त्वलभ्या भाग्याल्लब्धाश्चेत्तदा भोजनीयाः । श्राद्धे विप्रेषूपविष्टेषु पश्चात्संप्रा
द्विप्रपङ्क्तौ तु भोज्याः ॥' अत्र मूलं **हेमाद्रौ ज्ञेयम्** ॥ तत्रैव **नारदः**–
वै यतीननादृत्य भोजयेदितरान् द्विजान् । विजानन्वसतो ग्रामे कव्यं त
राक्षसान् ॥' **दीपकलिकायां दक्षः**–'विना मांसेन मधुना विना दक्षिणयाशि
परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ॥' एतच्च ज्ञानिविषयम् । 'त्रिणाचिके
सुपर्णौ यजुर्वेदैकदेशौ तद्व्रतेन तदध्यायिनौ च यस्य सप्त पूर्वे सोमपाः त्रिसुपर्णं'
**बोपदेवः** । सत्रिमधुर्ऋग्वेदैकदेशस्तदध्यायी । केचित्त्राचिकेतं चयनं त्रिःकृतवानित
माहुस्तद्धेमाद्रिविरुद्धम् । **हेमाद्रौ गौतमः**–'युवभ्यो दानं प्रथमं पितृवयसः' इत्
**मात्स्ये मनुः**–'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । सामस्वरविधिज्ञश्च प
पावनपावनः ॥' **कौर्मे**–'असमानप्रवरको ह्यसगोत्रस्तथैवच । असंबन्धी च वि
ब्राह्मणः श्राद्धसिद्धये ॥' **गारुडे**–'श्राद्धेषु विनियोज्यास्ते ब्राह्मणा ब्रह्मवित्तम
ये योनिगोत्रमन्त्रान्तेवासिसंबन्धवर्जिताः ॥' **मनुः**–'न मित्रं भोजयेच्छ्राद्धे
कार्योस्य संग्रहः । नारिं न मित्रं यं विद्यात्तं तु श्राद्धे निमन्त्रयेत्' ॥ द्वयोर्भ्रात्रोः

भोजनं निषिद्धम् । 'पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ॥ सगोत्रप्रवरं
षु परिवर्जयेत्' इति **श्राद्धदीपकलिकायां जातूकर्ण्योक्तेः** ।

अथ **मध्यमाः । हेमाद्रौ कौर्मगार्ग्यौ**-'नैकगोत्रे हविर्दद्याद्यथा
हविः । अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥' अत्र केचित्स्वशाखी
नाहुः पठन्ति च । 'निमन्त्रयीत पूर्वेद्युः स्वशाखीयान् द्वि
स्वशाखीयद्विजाभावे द्विजानन्यान्निमन्त्रयेत् ॥' इति । इदं

मध्यमविप्रनिर्णयः ।

त्वाद्धेमाद्रिणा दूषितत्वाच्चोपेक्ष्यम् । **मनुरपि**-'यत्नेन भोजयेच्छ्राद्धे ब्राह्म
गम् । शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम् ॥ एषामन्यतमो यस्य भु
मर्चितः । पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी ॥'

अत्र **मामकः श्लोकः**-"मातामहो मातुलभागिनेयदौहित्रजामातृगुरु
ऋत्विक् च याज्यश्वशुरौ स्वबन्धुश्याला गुणाढ्यास्त्वनुकल्पभूताः" ॥ बन्ध
स्तृपितृष्वसृमातुलपुत्रा इति **बोपदेवः** । अत्र मूलं **हेमाद्रौ ज्ञेयम्** ।
याद्यतिक्रमे दोष एव । 'सप्त पूर्वान् सप्त परान् पुरुषानात्मना सह । अतिक्र
तान्नरके पातयेत् खग ॥ संबन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा । भा
ग्नेयेण तथा बन्धुं खगाधिप ॥' इति **मदनरत्ने भविष्योक्तेः** । अत
लक्ष्यः-'ब्राह्मणप्रतिवेश्यानामेतदेवानिमन्त्रणे ।' इति गुण्यातिक्रमे दशपणं
आसन्नमात्रपरमिदम् । मूर्खे तु न दोषः । 'ब्राह्मणातिक्रमो नास्ति मूर्खे चैव
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥' इति **कात्यायनोक्तेः**
दोषः । 'अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत् ।' इति **मनूक्तेः**
**अत्रिः**-'षड्भ्यस्तु पुरुषेभ्योर्वागश्राद्धेयास्तु गोत्रिणः ॥ षड्भ
भोज्याः श्राद्धे स्युर्गोत्रजा अपि ॥' एतच्च ब्राह्मणालाभे अपि
असंभवे **हेमाद्रौ गौतमः**-'शिष्यांश्चैके सगोत्रांश्च भोजयेदू
गुणवतः ।' **आपस्तम्बः**-'ब्राह्मणान् भोजयेद्योनिगोत्रमन्त्रान्तेवास्यस
गुणहान्यां तु परेषां समुदितः सोदर्योपि भोजयितव्यः ।' एतेनान्तेवासिनो
इति । अत्र **विशेषमाहात्रिः**-'पिता पितामहो भ्राता पुत्रो वाथ स
परस्परमर्घ्याः स्युर्न श्राद्धे ऋत्विजस्तथा ॥ ऋत्विक्पुत्रादयोप्येते सकुल

वर्ज्यविप्रानिर्णयः ।

**अथ वर्ज्याः** । अत्र मामकाः श्लोकाः ॥ 'वर्ज्यान् प्रवक्ष्ये त्वथ रोगि
धिकाङ्गान् कितवान् कृतघ्नान् । नक्षत्रशास्त्रेण च जीवमानान्
वृत्त्यापि च राजभृत्यान् ॥ संगीतकायस्थकुसीदवृत्त्या वेद
कवित्ववृत्त्या । देवार्चनेनापि च जीवमानान् स्वाध्यायदाराग्निसुताक्षकाणान् ।
खल्वाटकुनख्यधर्मिनटांश्च पौनर्भवकृष्णदन्तान् । अगारदाही गरदः समु
कुण्डाश्यथ कूटकारी ॥ बालांश्च योध्यापयते स्वपुत्रादवाप्तविद्यस्त्वथ कुण
अग्रेदिधिष्वाः पतिरस्त्रकर्ता सोमक्रयी तैलिककेकराक्षौ ॥ युद्धाचार्यः पक्षिणां
स्रोतोभेत्ता वृक्षसंरोपकश्च । मेषाणां वा माहिषाणां च पुष्ट्या स्वीयस्त्रीषु
जारैः ॥ जीवत्यधेनुश्च दत्तानुयोगाद्द्रव्यप्राप्त्या वेदमुद्धाटयन्तः ॥ ग्रामया
शविक्रयिस्तेनशिल्पिपितृवादकारकान् । अर्थकामरतशूद्रयाजकश्मश्रुहीनजटिम
णान् । यस्य चैव गृहिणी रजस्वला स्वार्थपाककरशापदायकान् । क्लीबकुष्ठयति
क्षणान् कुब्जवामनमृषाभिशापिनः ॥ पुत्रहीनमथ कूटसाक्षिणं प्रेतहारिकमयाज्य
स्वात्मदातृपरिवेत्तृयाजकस्तेनहिंसकमुखान् विवर्जयेत् ॥ ' अत्र मूलं **हेमाद्रौ**
**चन्द्रोदये** च ज्ञेयम् । **भारते दानधर्मेषु** श्राद्धवर्ज्यविप्राधिकारे । 'कित
यक्ष्मी पशुपालो निराकृतिः । ग्रामप्रेष्यो वार्धुषिको गायकः सर्वविक्रयी ॥
राजभृत्यस्तैलिकः कूटकारकः । पित्रा विवदमानश्च यस्य चोपपतिर्गृहे ॥
स्तथा स्तेनः शिल्पं यश्चोपजीवति । पर्वकारश्च सूची च मित्रध्रुक् पारदारिक
तानामुपाध्यायः काण्डपृष्ठस्तथैव च । श्वभिश्च यः परिक्रामेद्यः शुना दष्ट
परिवित्तिस्तथा स्तेनो दुश्चर्मा गुरुतल्पगः । कुशीलको देवलको नक्षत्रैर्यश्च
ईदृशा ब्राह्मणा ज्ञेया अपांक्तेया युधिष्ठिर ॥ ' **तथा**—'ऋणकर्ता च यो
वार्धुषिको नरः ॥ ' काण्डपृष्ठः स्वशाखां त्यक्त्वा परशाखयोपनीतस्तद
क्षत्रियवैश्यवृत्तौ **नारदस्तु**—'तस्यामेव तु यो वृत्तौ ब्राह्मणो वसते रसात्
पृष्ठश्च्युतो मार्गात्सोपांक्तेयः प्रकीर्तितः ॥ ' इत्याह । **हारीतः**—
स्वयंदत्ता ये चैते क्रीतकाः सुताः । ते सर्वे मनुना प्रोक्ताः काण्डपृष्ठा न संश

अन्येपि **हेमाद्रौ मात्स्ये**—'त्रिशंकून् बर्बरानन्ध्रान् चीनद्रविडकौंकणान्
टकांस्तथाभीरान् कालिङ्गांश्च विवर्जयेत् ॥ ' तत्रैव **सौरपुराणे**—'अङ्गवङ्ग
सौराष्ट्रान् गुर्जरांस्तथा । आभीरान् कौंकणांश्चैव द्राविडान् दाक्षिणायनान् ॥
मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ॥ ' **चन्द्रिकायां यमः**—'काणाः कुब्जा

यां कात्यायनः–'द्विर्नग्नः कीलदुश्चर्मा शुक्लोतिकपिलस्तथा । छिन्नोष्ठश्छिन्न
नैव केतनमर्हति ॥' द्विर्नग्नः पित्रोर्वंशे त्रिपुरुषं विच्छिन्नवेदाग्निः । हेमाद्रौ म
'अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च । वर्जनीयाः प्रयत्नेन ब्राह्मणाः
र्मणि ॥' ब्राह्मे–'मूकश्च पूतिनासश्च छिन्नांगश्चाधिकांगुलिः । गलरोगी च
स्फुटितांगश्च सज्वरः ॥ षण्ढतूवरमन्दांश्च श्राद्धेष्वेतान्विवर्जयेत् ॥' लम्बकर्
तत्रैव गोभिलः–'हनुमूलादधः कर्णौ लम्बौ तु परिकीर्तितौ । द्व्यंगुलौ त्र्यंगुलौ
विति शातातपोऽब्रवीत् ॥' चन्द्रिकायां यमः–द्व्यंगुलातीतकर्णस्य भुञ्जते
न तु ॥' षण्ढश्चात्र चन्द्रिकोक्तः सप्तविधो ग्राह्यः । यथा 'षण्ढको वातज
षण्ढः क्लीबो नपुंसकः । कीलकश्चेति सप्तैवं क्लीबभेदाः प्रकीर्तिताः ॥' पराश
वीये तु चतुर्दशविधा उक्ताः । तेषां स्वरूपाणि तत्रैव ज्ञेयानि ।

चन्द्रिकायां शातातपः–'अग्निष्टोमादिभिर्यज्ञैर्ये यजन्त्यल्पदक्षिणैः । तेष
भोक्तव्यमपांक्तास्ते प्रकीर्तिताः ॥' एतच्च शक्तौ सत्याम् । अपरार्के भारते–
कितवस्तेनः प्राणिविक्रयकोपि वा । पश्चाच्चेत्पीतवान् सोमं स निकेतनमर्हति ॥'
दापकालिकायां यमः–'अपत्नीकश्च वर्ज्यः स्यात्सपत्नीकोप्यनग्निकः ॥'
श्वलायनः–'प्रतिमाविक्रयं यो वै करोति पतितस्तु सः । जीवनार्थं परास्थीनि
तार्थं प्रयाति यः ॥ मातापित्रोर्विना सोपि पतितः परिकीर्तितः ॥' तत्रैव जातूक
'यत्र मातुलजोद्वाही यत्र वा वृषलीपतिः । श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च
षम् ॥ पितृपुत्रौ भ्रातरौ द्वौ निरग्निं गुर्विणीपतिम् ॥ सगोत्रप्रवरं चैव श्राद्धेषु
येत् ॥' बृहन्नारदीये–'शङ्खं चक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शू
ष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एक
धर्मो न जातु स्याद् द्विजन्मनः ॥' तेन ये तप्तमुद्रादिविधयस्ते शूद्रविषयाः
पृथ्वीचन्द्रोदये–'शिवकेशवयोरंकाञ् शूलचक्रादिकान् द्विजः । न धारयेत
वैदिके वर्त्मनि स्थितः' ॥ इत्याश्वलायनोक्तेश्च । नृत्यं चोदराद्यर्थं नि
श्रीधरस्वामी । अन्येपि निषेधा निबन्धेषु ज्ञेया इति दिक् ॥

अत्र विप्राणां ग्राह्यत्वोक्त्यैव तद्वर्ज्यानां निषेधे सिद्धे पुनर्वर्ज्यपरिगणनं नि
निर्गुणप्राप्त्यर्थमिति विज्ञानेश्वरः । कुष्ठिकाणादेरपवादो हेमाद्रौ व
'अपि चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः । अदूष्यं तं यमः प्राह पङ्क्तिपा
सः ॥' क्वचिद्विप्राणां जातिमात्रेण ग्राह्यत्वमुक्तम् । चन्द्रिकायामाग्नेये–'

निर्गुणा अपि ते एव भोज्या इति **हेमाद्रौ** । अक्षय्यवटश्राद्ध एव तन्नियमो न
त्रेति **त्रिस्थलीसेतौ पितामहचरणाः** । **पृथ्वीचन्द्रोदयेपि पाद्मे**–'
ब्राह्मणं नैव परीक्षेत कदाचन । अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥' स्क
पि–'ब्राह्मणान्न परीक्षेत तीर्थे क्षेत्रनिवासिनः । **मनुः**–'न ब्राह्मणं परीक्षेत दैवे क
धर्मवित् । पित्र्ये कर्मणि तु प्राप्ते परीक्षेत प्रयत्नतः ॥' असंभवपरमेतदिति मेधा
थिः । **हेमाद्रौ व्यासः**–'गायत्रीसारमात्रोपि वरं विप्रः सुयन्त्रितः । नायंत्रित
वेदी सर्वाशी सर्वविक्रयी ॥ काणाः कूटाश्च कुब्जाश्च दरिद्रा व्याधितास्तथा । सर्वे
नियोक्तव्या मिश्रिता वेदपारगैः ॥'

श्राद्धे विप्रनिमन्त्रणम् ।

**अथ विप्रनिमन्त्रणम्** । **चन्द्रिकायां वाराहे**–'वस्त्रशौचादि कर्तव्यं श्वः
स्मीति जानता । स्थानोपलेपनं कृत्वा ततो विप्रान्निमन्त्रयेत् ॥
काष्ठं च विसृजेद्ब्रह्मचारी शुचिर्भवेत् ॥' तत्रैव **प्रचेताः**–'
चरणं विप्रः सव्यं वै क्षत्रियस्तथा । पादावादाय वैश्यो द्वौ शूद्रः प्रणतिपूर्वक
**बृहस्पतिः**–'उपवीती ततो भूत्वा देवार्थं तु द्विजोत्तमान् । अपसव्येन पित्र्येथ
शिष्योथवा सुतः ॥ **प्रचेताः**–'सवर्णं प्रेषयेदाप्तं द्विजानां तु निमन्त्रणे ॥' पृथ्वी
**न्द्रोदये स्कान्दे**–'राजकार्ये नियुक्तस्य बन्धनिग्रहवर्तिनः । व्यसनेषु च सर्वेषु
**विप्रेण** कारयेत् ॥' **चन्द्रिकायां यमः**–'अभोज्यं ब्राह्मणस्यान्नं वृषलेन नि
तम् । तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥' तत्रैव **पैठीनसिः**–'सप्त पञ्च
श्रोत्रियान्निमन्त्रयेत्' ॥ **आश्वलायनसूत्रेपि**–'एकैकमेकैकस्य द्वौ द्वौ त्रींस्त्रीन्वा
फलभूयस्त्वम्'॥ द्वाविति वृद्धिश्राद्धे । **गौतमः**–'नवावरान् भोजयेदयुजो वा यथोत्सा
**याज्ञवल्क्यः**–'द्वौ दैवे प्राक् त्रयः पित्र्ये उदगेकैकमेव वा । मातामहानामप्येवं त
वैश्वदेविकम् ॥' **दीपकालिकायां पराशरः** 'संपत्तावर्थपात्रानामेकैकस्य त्रयस
पित्रादेर्ब्राह्मणाः प्रोक्ताश्चत्वारो वैश्वदेविके ॥' **वृद्धयाज्ञवल्क्यः**–'दर्शेकं पञ्च वा
पार्वणे विनियोजयेत् ॥' अत्र वैश्वदेवे द्वौ चतुरो वोपवेश्य पित्रादीनामेकैकस्य
एकं त्रीन् पञ्च सप्त नव वोपवेशयेदिति निष्क्षुण्णोर्थः । **मनुः**–'द्वौ दैवे पि
त्रीनेकैकमुभयत्र वा । भोजयेत्सुसमृद्धोपि न प्रसज्जेत विस्तरे ॥ सत्क्रियां देश
च शौचं ब्राह्मणसम्पदम् । पञ्चैतान्विस्तरो हन्ति तस्मान्नेहेत विस्तरम् ॥' पृथ
**न्द्रोदये शातातपः**–'द्वौ दैवेथर्वणौ विप्रौ प्राङ्मुखावुपवेशयेत् । पित्र्ये तूदङ्
स्त्रींश्च बह्वृचाध्वर्युसामगान् ॥' अत्यशक्तौ **हेमाद्रौ देवलः**–'एकेनापि हि

षट्पिण्डं श्राद्धमाचरेत् । षडर्घ्यान् दापयेत्तत्र षड्भ्यो दद्यात्तथा हविः ॥' भिलः–'यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् । ऋचो यजूंषि सामानि तत्र विद्यते ॥'

अत्र वैश्वदेवे विशेषमाह तत्रैव **वसिष्ठः**–'यद्येकं भोजयेच्छ्राद्धे दैवं तत्र भवेत् । अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य च ॥ देवतायतने कृत्वा ततः समाचरेत् । प्रास्येदग्नौ तदन्नं तु दद्याद्वा ब्रह्मचारिणे ॥' एतच्च सपिण्डीकरण ज्ञेयम् । 'न त्वेवैकं सर्वेषां काममनाद्ये' **इत्याश्वलायनोक्तेः** । अस्यार्थ **नारायणवृत्तौ**–'आद्यं सपिण्डीकरणं तद्वर्ज्येषु श्राद्धेषु कामं त्रयाणामेकं भो सपिण्डीकरणे तु नियतं त्रिभिर्भवितव्यमिति । अनाद्ये पार्वणवर्जिते वा । अ आमहेमश्राद्धादौ वा । अन्नाभावे चेति व्याख्यान्तरं तत्रैव ज्ञेयम् ।' **कारिक** 'दैवे पित्र्येऽथवैकैकं सपिण्डीकरणं विना ।' इति । अत्रैकविप्रे साग्नेर्विशेषमाह **चन्द्रोदये प्रचेताः**–'एकस्मिन् ब्राह्मणे दैवे साग्नेरग्निर्भवेत्सदा । अनग्नेः कु स्स्याच्छ्राद्धकर्माणि सर्वदा ॥ सर्वथा विप्रालाभे तत्रैव **हेमाद्रौ च सत्यव्रतः**– य दर्भनिचयमासनेषु समाहितः । प्रैषानुप्रैषसंयुक्तं सर्वं श्राद्धं प्रकल्पयेत् ॥' प्राप्त्यभावात्सत्रे इव ऋत्विक्कार्ये यजमानविधौ न दक्षिणा' इति केचित् तन्न । र्थाया: दक्षिणायाः प्राप्तेः । 'सर्वं तन्निजटे तुभ्यं यच्च श्राद्धमदक्षिणम्' इति **पा** 'विदध्याद्धौत्रमन्यश्चेद्दक्षिणार्धहरो भवेत् । स्वयं चेदुभयं कुर्यादन्यस्मै प्रतिपाद इति **छन्दोगपरिशिष्टाच्च** । एवं यतिश्राद्धेपि **कात्यायनः**–'यज्ञवस्तुनि च स्तम्भे दर्भवटौ तथा । दर्भसंख्या न विहिता विष्टरास्तरणेषु च ॥' मातृश्र विप्रालाभे सुवासिन्योपि भोजनीया **इत्याहापरार्के वृद्धवसिष्ठः**–'मातृश्र विप्राणामलाभे पूजयेदपि । पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः ॥' इति विति वृद्धिश्राद्धविषयम् ।

**पाद्मे उत्तरखण्डे**–'सकृदभ्यर्चितं लिङ्गं शालग्रामशिलां च यः । पीठे यित्वा तु श्राद्धं च कुरुते नरः ॥ पितरस्तस्य तिष्ठंति कल्पकोटिशतं दि **चन्द्रिकायां मात्स्ये**–'पठन्निमन्त्र्य नियमान् श्रावयेत्पैतृकान् बुधः । अ शौचपरैः सततं ब्रह्मचारिभिः ॥ भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा । **मनुः**–'सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः । भवितव्यं भवद्भिर्नः श्वोभूते कर्माणि ॥' इति तत्पूर्वेद्युर्निमन्त्रणपरं न तदहः । **तत्रैव देवलः**–'असंभवे

ब्राह्मणांस्तान्निमन्त्रयेत् । अज्ञातीनसमानार्षानयुग्मानात्मशक्तितः ॥' कात्याय
'[१]अनिन्द्येनामन्त्रितो नापक्रामेत्केतनं गृह्यशक्तः ।

श्राद्धकर्तृभोक्तृनियमाः।

**अथ श्राद्धकर्तृभोक्तृनियमाः** । तत्र निमन्त्रितविप्रत्यागेऽपरार्के **यमः**-
तनं कारयित्वा तु योऽतिपातयति द्विजम् । ब्रह्महत्यामवाप्नोति शूद्र
च जायते ॥ आमन्त्र्य ब्राह्मणं यस्तु यथान्यायं न पूजये
अतिकृच्छ्रासु घोरासु तिर्यग्योनिषु जायते ॥' प्रमादात्त्यागे तु **हारी**
'प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः । तर्पयित्वा यथान्यायं सर्व
फलमश्नुते ॥' प्रमादाभावे तु **नारायणः**-'एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नि
शुचिः ॥ यतिचान्द्रायणं कृत्वा तस्मात् पापात्प्रमुच्यते ॥' **यमः**-'आमन्त्रितस्
विप्रो भोक्तुमन्यत्र गच्छति । नरकाणां शतं गत्वा चांडालेष्वभिजायते ॥'
**देवलः**-'पूर्वं निमन्त्रितोऽन्येन कुर्यादन्यप्रतिग्रहम् । भुक्ताहारोऽथवा भुङ्क्ते
तस्य नश्यति ॥' यदि विप्रो विलम्बते तदोक्तम**आदित्यपुराणे**-'आमन्त्रितश्चि
कुर्याद्विप्रः कदाचन । देवतानां पितॄणां च दातुरन्नस्य चैव हि ॥ चिरकारी
ोही पच्यते नरकाग्निना ॥' **पृथ्वीचन्द्रोदये यमः**-निमन्त्रितस्तु यो विप्रो ह्य
याति दुर्मतिः । भवन्ति पितरस्तस्य तं मासं पांसुभोजनाः ॥ आमन्त्रितस्
श्राद्धे हिंसां वै कुरुते द्विजः । पितरस्तस्य तं मासं भवन्ति रुधिराशनाः ॥
न्त्रितस्तु यो विप्रो भारमुद्वहते द्विजः । पितरस्तस्य तं मासं भवन्ति स्वेदभोज
निमन्त्रितस्तु यो विप्रः प्रकुर्यात्कलहं यदि । पितरस्तस्य तं मासं भवन्ति मलभोज

**शंखः**-निमन्त्रितस्तु यः श्राद्धे मैथुनं सेवते द्विजः । श्राद्धं दत्त्वा च भुक्
युक्तः स्यान्महतैनसा ॥' मैथुनं ऋतावपि निषिद्धम् । 'ऋतुकाले नियुक्तो व
गच्छेत् स्त्रियं क्वचित् । तत्र गच्छन्नवाप्नोति ह्यनिष्टानि फलानि तु ॥' इति तत्र
वीये च **वृद्धमनूक्तेः** । 'श्राद्धं करिष्यन् कृत्वा वा भुक्त्वा वापि निमन्त्रितः । उ

---

१ अनिन्द्येन भोज्यान्नेन नापक्रामेत् न नाभ्युपगच्छेत् किन्तु अभ्युपगच्छेदेव । केतनं
शक्तश्चेत् अनिन्द्येनामन्त्रितेन शक्तेन न प्रत्याख्यानं कर्तव्यमिति गौतमः। तेन निन्द्येनामन्त्रणे भो
मर्थ्ये च प्रत्याख्येयमिति गम्यते । इदमन्यफललिप्सूनां परान्नभोजनाभ्यनुज्ञामात्रम् । 'कामं प्रति
षामनिन्द्यामन्त्रणे कृते ।' इति देवलोक्तेः । तत्र परान्नभोजेऽल्पो दोषः न तु दोषसामान्याभ
तत्रापदि द्रुपदाजपः आपदाधिक्ये मनस्तापः । इति टीका । २-आहूतोपि श्राद्धकालातिक्रमं
'न सीमानमतिक्रामेच्छ्राद्धार्थं वै निमन्त्रितः । पर्यटन्सीममध्ये तु न कदाचित्प्रदुष्यति ।
ब्रह्माण्डात् सीम्नः परस्तान्न गन्तव्यम् । इति टीका ।

च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ भोक्ष्यन् करिष्यन् श्वः श्राद्धं पूर्वरात्रौ
व्यवायं भोजनं चापि ऋतावपि विवर्जयेत् ॥' इति तत्रैवाश्वलायनोक्तेश्च
नेश्वरेण तु–श्राद्धे ऋतौ गच्छतोपि न दोष इत्युक्तं तत्त्वगतिकगतित्वे ज्ञे
स्पतिः–'द्विनिशं ब्रह्मचारी स्याच्छ्राद्धकृद्ब्राह्मणैः सह । अन्यथा वर्तमानौ
निरयगामिनौ ॥ पुनर्भोजनमध्वानं भारमायासमैथुनम् ॥ श्राद्धकृच्छ्राद्धभु
मेतद्विवर्जयेत् ॥ स्वाध्यायं कलहं चैव दिवास्वापं तथैव च ॥' यत्तु श्राद्धक
पुराणसमुच्चये–'कृत्वा तु रुधिरस्रावं न विद्वान् श्राद्धमाचरेत् । एकं द्वे
विद्वान् दिनानि परिवर्जयेत् ॥' इति तन्निर्मूलम् । पृथ्वीचन्द्रोदये यम
जनमध्वानं भाराध्ययनमैथुनम् । संध्यां प्रतिग्रहं होमं श्राद्धभोक्ताऽष्ट वर्जये
संध्यानिषेधः प्रायश्चित्तात् पूर्वं ज्ञेयः । यथाहोशनाः–'दशकृत्वः पिबेदाप
श्राद्धभुग्द्विजः । ततः संध्यामुपासीत जपेच्च जुहुयादपि ॥' गौड
संध्यां परान्नं च छेदनं च वनस्पतेः । अमावास्यां न कुर्वीत रात्रिभोजनमेव च
कलहं चैव सायं सन्ध्यां दिवाशयम् । श्राद्धकर्ता च भोक्ता च पुनर्भु
येत् ॥' इति कामधेनौ वराहाद्युक्तेः ॥ श्राद्धकर्तुरपि सायंसंध्यानि
शिष्टास्तु निर्मूलत्वमाहुः । होमनिषेधस्तु स्वविषयः । 'सूतके च प्रवासे
श्राद्धभोजने । एवमादिनिमित्तेषु हावयेन्न तु हापयेत् ॥' इति छंदोगपरि
तत्रैवादित्यपुराणे–'निमन्त्रितस्तु न श्राद्धे कुर्याद्भार्यादिताडनम् ॥' च
प्रचेताः–'श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् । श्राद्धकर्ता न कुर्वी
धावनं बुधः॥' हेमाद्रौ जाबालिः–'दन्तधावनताम्बूले तैलाभ्यङ्गमभोजन
षधपरान्नं च श्राद्धकृत्सप्त वर्जयेत् ॥' इति विष्णुरहस्ये–'श्राद्धोपवासदिवसे
दन्तधावनम् । गायत्र्या शतसंपूतमम्बु प्राश्य विशुद्ध्यति ॥ पुनर्भोजनमध्
मायासमैथुनम् । दानप्रतिग्रहौ होमं श्राद्धभुक् त्वष्टवर्जयेत् ॥'

सोमोत्पत्तौ–'वनस्पतिगते सोमे यस्तु हिंस्याद्वनस्पतिम् । घोरायाम्
युज्यते नात्र संशयः ॥' एतद्विहितेध्मादिव्यतिरेकेण । 'वनस्पति गते सोमे म
कारयेत् । गावस्तस्य प्रणश्यन्ति चिरकालमुपस्थिताः॥' वनस्पतिगतस्वरूपम
चन्द्रोदये व्यासः–'त्रिमुहूर्तं वसेदर्के, त्रिमुहूर्तं वसेज्जले । त्रिमुहूर्तं वसेद्
वनस्पतौ ॥' कालिकायां वृद्धमनुः–'निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथु
प्रमत्ततां च स्वाध्यायं क्रोधाशौचे तथानृतम् ॥' केचिन्निमन्त्रणात् पूर्वं शुद्

ह्यनवकाशतः । श्राद्धं शिष्येण पुत्रेण तदान्येनापि कारयेत् ॥ नियमानाचरेत्सोपि
तांश्च वसुंधरे । यजमानोपि तान्सर्वानाचरेत्सुसमाहितः ॥' इति हेमाद्रौ वाराहो
स्त्रियस्तु पाद्मे–'मुक्तकच्छा तु या नारी मुक्तकेशी तथैव च । हसते वदते चैव नि
पितरो गताः ॥' आश्वलायनः–'श्राद्धेह्नि भोजयेद्दास्तौ न बालानपि यत्नतः ।
पिण्डदानाद्गन्धाद्यैर्नालंकुर्यात्स्वविग्रहम् ॥' वास्तौ गृहे ॥

**अथ श्राद्धवस्तूनि** । तत्रादौ कुशाः पृथ्वीचन्द्रोदये दक्षः–'सम
कुशादीनां द्वितीयः परिकीर्तितः ॥' अष्टधाभक्तदिने द्वितीयो भाग इत
तत्रैव यमः–'समूलस्तु भवेद्दर्भः पितॄणां श्राद्धकर्मणि ।

श्राद्धवस्तूनि ।

लोकान् जयति शक्रस्य सुमहात्मनः ॥' व्यासः–'तर्प
कार्याणि पितॄणां यानि कानिचित् । तानि स्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेष
शालंकायनः–'सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं
विधिवद्भवेत् ॥' शङ्खः–'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च । प्रा
विज्ञेयं पवित्रं यत्र कुत्रचित् ॥' हारीतः–पवित्रं ब्राह्मणस्यैव चतु
ङ्गुलैः ॥ एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ॥' स्मृत्यर्थसारे–'स
भवेद्द्वाभ्यां पवित्रं ग्रन्थितं नवम् ॥' रत्नावल्याम्–'द्वयोस्तु पर्वणोर्म
धारयेद्बुधः॥' हेमाद्रौ स्कान्दे–'अनामिकाधृता दर्भा ह्येकानामिकयापि व
मनामिकाभ्यां तु धार्ये दर्भपवित्रके ॥' पवित्राभावे तु तत्रैव सुमन्तुः–'
विगर्भौ तु कुशौ द्वौ दक्षिणे करे । सव्ये चैव तथा त्रीन्वै बिभृयात्सर्वकर्मसु ॥'
यनः–'हस्तयोरुभयोर्द्वौ द्वावासनेपि तथैव च ॥'दर्भग्रहणे मन्त्रमाह शङ्ख
श्विना सहोत्पन्न परमेष्ठिनिसर्गज । नुद सर्वाणि पापानि दर्भ स्वस्तिकरो
स्मृत्यर्थसारे–'हुंफट्कारेण मन्त्रेण सकृच्छित्त्वा समुद्धरेत् ॥' भारद्वा
क्रियार्थं पित्रर्थमभिचारार्थमेव च । दक्षिणाभिमुखश्छिन्द्यात्प्राचीनावीतिको
कुशाभावेऽपरार्के सुमन्तुः–'कुशः काशः शरो गुन्द्रो यवा दूर्वाऽथ वल्वजाः
मुञ्जकुन्दाश्च पूर्वाभावे परः परः ॥'काशादौ विशेषमाह शङ्खः–'काशहस्तस
स्कदाचिद्विधिशङ्कया । प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैव च ॥' पृथ्वी
यमः–'मासिमास्युद्धृता दर्भा मासि मास्येव चोदिताः ॥' षट्त्रिंशन्म
स्यादमावास्या दर्भो ग्राह्यो नवः स्मृतः ॥' गृह्यपरिशिष्टे–'ये च पिण्डा
येः कृतं पितृतर्पणम् । अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥' लघु

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे । हता मूत्रपुरीषाभ्यां तेषां त्यागो
**हेमाद्रौ**-'अन्यानि च पवित्राणि कुशदूर्वात्मकानि च । हेमात्मकपवित्रस्य
न्ति वै कलाम् ॥'

अथ हविः । **हेमाद्रौ प्रचेताः**-'कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्य
श्राद्धे हविर्निर्णयः । महायवा व्रीहियवास्तथैव च मधूलिकाः ॥ कृष्णाः श्वेता
ग्राह्याः स्युः श्राद्धकर्मणि ॥' महायवा वेणुबीजम् । मधूलि
नाला इति **हेमाद्रिः कल्पतरुश्च** । **भारते**-'वर्धमानतिलं श्राद्धमक्ष
ब्रवीत् । सर्वकामैः स यजते यस्तिलैर्यजते पितॄन् ॥' **चन्द्रिकायां**
'इष्टापूर्ते मृताहे च दर्शवृद्ध्यष्टकासु च । पात्रेभ्यस्तेषु कालेषु दे
जनम् ॥' **सायणीये**-'अगोधूमं च यच्छ्राद्धं माषमुद्गविवर्जितम् । तैलप
कृतमप्यकृतं भवेत् ॥' **हेमाद्रावत्रिः**-'अगोधूमं च यच्छ्राद्धं कृतमप्य
तत्रैव ब्राह्मे-'यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा । संतर्पयेत् पितॄन् मुद्गै
सर्षपद्रवैः ॥ नीवारैर्हरिश्यामाकैः प्रियंगुभिरथार्चयेत् ॥' **हेमाद्रौ काष्ण**
'यदिष्टं जीवतश्चासीत्तद्द्यात्तस्य यत्नतः । स तृप्तो दुस्तरं मार्गं ततो याति
**कलिकायामाश्वलायनः**-'कदल्यादिफलैः शस्तैर्मूलैरार्द्रादिकैरपि ।
दध्ना श्राद्धे संतर्पयेत् पितॄन् । कदल्याम्रफलादीनि श्राद्धे संपादयेत्सुधीः '

**हेमाद्रौ पृथ्वीचन्द्रोदये च मार्कण्डेयः**-'गोधूमैरिक्षुभिर्मुद्गैः सतीनै
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः॥विदार्या च भरुण्डैश्च तिलैः शृङ्ग
कञ्चुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि ॥ पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्त
ल्या क्षीरकाकोल्या तथा पिण्डालकैः शुभैः॥लाजाभिश्च सधानाभिस्त्रपुसैश्चारु
पाराजकाशाभ्यामिंगुदै राजजम्बुभिः॥ प्रियालामलकैर्मुख्यैः फल्गुभिश्च तिल
कुरैस्तालकंदैश्चक्रिकाक्षीरिकावचैः ॥ लोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः
पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः॥ रागखाण्डवचोष्यैश्च त्रिजातकसमन्वितैः ।
प्रीयन्ते श्राद्धेषु पितरो नृणाम्' ॥ एषां कोशहेमाद्र्यादिव्याख्यावैद्यकाद्यनु
देशभाषयानामान्युच्यंते । सतीनैः कलायैः । 'कलायस्तु सतीनकः' इत्यम
ति प्रसिद्धः । विदार्या तत्कंदेन । भरुण्डं जलजं मखाणा इति श्राद्ध
भूकूष्माण्डमित्यन्ये । शृङ्गाटकं सिंघाडा । कञ्चुकः कंचनारः । कं
'अर्शोघ्नः सूरणः कंदः' इत्यमरः । कर्कंधूः वन्यं सूक्ष्मं बदरम् । पालेवतं
आरुकं अरुई । अक्षोटं अखरोट: । काकोलीक्षीरकाकोल्यौ ...

च्चिर्भटं खर्बुजम् । सर्षपा इति दीर्घश्छान्दसः । प्रियालं चिरौंजी । फल्गु उदुम्वरम्
तिलटकं पटोलकम् । तालकन्दः कन्दविशेषः । चक्रिका तिन्तिणी विंवा । क्षीरि
खिरिणी । मोचं कदलीफलम् । लकुचं वडहरम् । मुञ्जातकं गौडदेशे प्रसिद्धम् । प
फलं गट्टा । रागखांडवः 'पिप्पलीशुण्ठियुक्तस्तु मुद्गयूषस्तु खाण्डवः । रागखाण्डव
याति शर्करासंयुतं तु तत् ॥ ' इत्युक्तः पानविशेषः । त्रिजातं लवङ्गैलापत्रकाणि
मदनरत्ने कौर्मे–'कालशाकं च वास्तूकं मूलकं कृष्णनालिका ॥ ' प्रशस्ता
तिशेषः ॥

हेमाद्रौ पृथ्वीचन्द्रोदये च वायुपुराणे–'कालशाकं महाशाकं द्रोणश
तथार्द्रकम् । विल्वामलकमृद्वीकापनसाम्रातदाडिमम् ॥ चव्यं पालिवटाक्षोटं खर्जूर
कसेरुकम् । कोविदारश्च कंदश्च पटोलं बृहतीफलम् ॥ पिप्पली मरिचं चैव एला शुण्ठी
सैन्धवम् ॥ शर्करागुडकर्पूरबदरीद्रोणपत्रकम् ॥' तथा । 'मधुकं रामठं चैव कर्पूरं गुड
च ॥ श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा ॥ ' रामठं हिंगुः । 'कसेरुः कोवि
रश्च तालकन्दस्तथा विसम् । तमालं शतकन्दश्च मध्वालुः शीतकन्दकम् ॥ क
कालशाकं च सुनिषण्णं सुवर्चलम् । मांसं शाकं दधि क्षीरं चाम्बुवेत्रांकुरस्तथा ॥
फलं कौंकणीद्राक्षा लकुचं मोचमेव च ॥ अलाबुं ग्रीवकं चारं कर्कन्धुर्मधुसाह्वय
वैकंकतं नारिकेलं शृङ्गाटकपरूषकम् ॥ पिप्पलीमरिचं चैव पटोलं बृहतीफलम् । ए
दीनि चान्यानि स्वादूनि मधुराणि च ॥ नागरं चार्द्रकं देयं दीर्घमूलकमेव च ॥' इ
तथा–'शर्कराक्षीरसंयुक्ताः पृथुका नित्यमक्षयाः ॥ ' द्रोणशाकं 'गूम' इति । प्रसि
मृद्वी द्राक्षा । आम्रातं आंवाडा इति प्रसिद्धो वृक्षः । तत्फलं च पालिवन्तं जम्बी
पालिआलमिति गौडप्रसिद्धं वा खर्जूरं खजूर इति प्रसिद्धम् । कसेरुः जलजः क
कोविदारः कञ्चनारसदृशः । तालकन्दः तालमूली । विसं भसीडम् । शतकन्दः
दरी । शालुकं सेरुकीति प्रसिद्धम् । कालेयं करालसंज्ञः शाकः । दारुहरिद्र
पृथ्वीचन्द्रोदयः । सुनिषण्णं कर्कटीसदृशं सुलटीया इति गौडप्रसिद्धम् । सु
शाकविशेषः। कट्फलं श्रीपर्णीवृक्षफलम् ।कौंकणी अम्लरसा द्राक्षा।तिन्दुकं डिण्डिस
केंदेव: तिन्दुफलं वा । ग्रीवकं फलविशेषः । चारं क्षुद्रतालम् । मधुसाह्वयं मधू
फलं वा । वैकङ्कतं चैञ्चीति गौडाख्यातम् । पुरूषकं परूसमिति प्रसिद्धम् ।
शुण्ठी । पृथ्वीचन्द्रोदये ब्राह्मे–'आम्रमाम्रातकं विल्वं दाडिमं बीजपूरकम् । 
नामलकं क्षीरं नालिकेरं परूषकम् ॥ नारङ्गकं च खर्जूरं द्राक्षानीलकपित्थक

र्इह पितामहाः ॥ खङ्गामिषं महाशल्यं मधु मुन्यन्नमेव च । लोहामि
मांसं वार्ध्रीणसस्य च ॥ निगमः-'त्रिःपिबं त्विन्द्रियक्षीणं श्वेतं वृद्ध
वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मणि ॥' वार्ध्रीणसो जरच्छाग इति
कात्यायनः-'छागोस्रमेषानालभ्य शेषाणि क्रीत्वा लब्ध्वा वा स्वयं मृ
पचेत् ॥' कौर्मे-'क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वा द्विजः । दद्य
त्तेन तदस्याक्षय्यमुच्यते ॥' दत्तस्य मांसस्याभक्षणे दोषमाह मनुः-'नियु
न्यायं यो मांसं नात्ति मानवः । स प्रेत्य पशुतां याति संभवानेकविंशति
बहुषु वचनेषु श्राद्धे मांसमधुनोः प्राशस्त्योक्तेः । 'विना मांसेन यच्छ्राद्धं
भवेत् ।' इति हेमाद्रौ देवलोक्तेः । 'यच्छ्राद्धं मधुना हीनं तद्रसैः सकलै
न्नैरपि संयुक्तं पितॄणां नैव तृप्तये ॥ अणुमात्रमपि श्राद्धे यदि न स्यात्त
नामापि कीर्तनीयं स्यात् पितॄणां प्रीतये ततः ॥' इति हेमाद्रौ ब्राह्मोक्ते
धुनोः श्राद्धे नियतत्वं गम्यते । गौडनिबन्धे मात्स्यसुमन्तू-'म
देयः क्षीरस्य च तथा दधि । न लभ्यते घृतं यत्र कुर्यात् घृतवतीजपम्
लिकायां नागरखण्डे-'कथंचिद्यदि विप्रेभ्यो न दत्तं भोजने मधु ।
दातव्याः कदाचिन्मधुना विना ॥' बृहत्पराशरस्तु मांसं निषेधति । 'य
कृत्वा मांसैस्तर्पयते पितॄन् । स विद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम्
कूपे यथा कंचिद्बाल आदातुमिच्छति । पतत्यज्ञानतः सोपि मांसेन श्रा
स एव-'सर्वथान्नं यदा न स्यात्तदैवामिषमाश्रयेत् । ब्राह्मणश्च स्वयं नाद्या
यदि ॥' भागवतेपि-'न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् । मुन्य
प्रीतिर्यथा न पशुहिंसया ॥' तथेति शेषः । अत्र केचित् । 'मुन्यन्नं ब्राह्मण
क्षत्रियवैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषां वा विरोधि यत् ॥' इति हे
स्त्योक्त्या व्यवस्थामाहुः[2] ॥

पृथ्वीचन्द्रोदयस्तु-'अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु । देवरा
कलौ पञ्च विवर्जयेत् ॥' इति निगमोक्तेः । 'वराऽतिथिपितृभ्यश्च पशूपाक
इति कलिवर्ज्येषु हेमाद्रावादित्यपुराणात् । 'मांसदानं यथा श्राद्धे

१-'उस्रो वृषो बलीवर्दः' इति कोषः । २ आहुरित्यस्वरसः । एवमपि काम
न स्यात् । 'सप्तदश वैश्यस्य सामिधेन्यः' इत्यस्य 'वैश्यस्य सप्तदशैव सामिधेन्यः'
मुपेत्य तस्य नित्यपरत्वसंभवाद्वैश्यं प्रति काम्यैकविंशतिसामिधेन्यनुवचनस्य सिद्ध

श्रमस्तथा ।' इत्युक्त्वा 'इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः' ॥ इति बृहन्ना
र्दीयेऽभिधानाच्च मांसविधिः कलिव्यतिरिक्तविषयः । कलौ मांसनिषेधानां च देशाच
रात् व्यवस्था । तथा च बृहन्नारदीये–श्राद्धं प्रकृत्य–'यथाचारं प्रदेयं तु मधुमांसादि
तथा । देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः॥अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृतः'
इति । 'यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेपि वा । यो यत्र विहितो धर्मस्तं धर्मं न विच
रयेत्' ॥ इति भृगूक्तेश्चेत्याह तन्न । होलाकाधिकरणन्यायेन देशविशेषव्यवस्थापकप
कल्पनायोगात् । निरूपितं च तत् पितामहचरणैर्मांसमीमांसायाम् इति दिक् । मनु
'संवत्सरं तु गव्येन पयसा पायसेन च । वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी
त्रिःपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् ॥ वार्ध्रीणसं तु तं प्राहुर्याज्ञिकाः श्राद्धकर्मा
क्षीरादौ विशेषमाह हेमाद्रौ सुमन्तुः–'पयो दधि घृतं चैव गवां श्राद्धेषु पावन
माहिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित् ॥' याज्ञवल्क्यः–'सन्धिन्यनिर्दशावत
गोपयः परिवर्जयेत् । औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥' हेमाद्रौ हारीत
'नवसूतायाः सप्तरात्रादित्येके । दशरात्रादित्यपरे । मासे नो पेयूषं भवतीति धर्मविदः'
एतद्रजोभावपरम् । देवलः–'अजाविमाहिषीणां तु पयः श्राद्धेषु वर्जयेत् । विकारान्
सश्चैव माहिषं तु घृतं हितम् ॥' तत्रैव ब्राह्मे–'माहिषं चामरं मार्गमाविकैकशफोद्भ
स्त्रैणमौष्ट्रं पाचितं च दधि क्षीरं त्यजेद् घृतम् ॥ सगुडं मरिचाक्तं तु तथा पर्युषितं द
दीर्णं तक्रमपेतं च नष्टास्वादं च फेनवत् ॥' माहिषापवादोऽपरार्के ब्राह्मे–'देयं तत्र
सद्यस्कं नवनीतादनुद्धृतम् । आरण्यमाहिषीक्षीरं शर्कराद्युतिसंयुतम् ॥ मध्वक्तं तु
चैव दद्यात्तदमृतं यतः ॥' द्युतिः क्षीरशरः । श्राद्धकौमुद्यां चैवम् । यद्यपि याज्ञ
ल्क्येन–'अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् । अस्नेहा अपि गोधूमयवगो
विक्रियाः ॥' इति पर्युषितं दध्यादि भोज्यमुक्तम् तथापि गुडमरीचाक्तस्य पर्युषि
षेधोऽत्रोच्यत इति हेमाद्रिः । तत्रैव ब्राह्मे–'कालशाकं तन्दुलीयं वास्तुकं मूलकं त
शाकमारण्यकं चैव दद्याच्छ्राद्धेषु नित्यशः ॥' तन्दुलीयं सूक्ष्मपत्रमिति हेमा
महाराष्ट्राणां माठ इति प्रसिद्धम् । आरण्यकं फांजीचूचादि । तत्रैव 'दाडिमं म
चैव नागरार्द्रकतिन्तिणीः । आम्रातकं जीरकं च कुवरं चैव योजयेत् ॥' म
पिप्पली । नागरं शुण्ठी । कुवरं कुस्तुंवरं धणिया इति प्रसिद्धम् । वायवीये–
स्त्यस्य शिखास्ताम्राः काषायाः सर्व एव च ॥' शिखा नवपल्लवाः । प्रभासख

१–मतान्तरमाह–कलाविति । २–होलाकादि क्वचिद्देशे क्रियते ( क्वचित्तु नेति देश

'आरामस्य तु सीमन्ताः कलापाः सर्व एव च' । सीमन्ताः नवपल्लवाः ।
'तमालं शतकन्दं च मध्वालुं शीतकन्दली' । मध्वालुः मोहलकन्दः । शी
रातालु इति प्रसिद्धम् ॥

अथ वर्ज्यम् ॥ मार्कण्डेयपुराणे-'यच्चोत्कोचादिना प्राप्तं पतिताद्यदु
अन्यायकन्याशुल्कार्थं द्रव्यं चात्र विगर्हितम् ॥ पित्रर्थं मे
त्युक्त्वा यच्चाप्युपाहृतम्' । चन्द्रोदये शङ्खः-'भूस्तृणं

श्राद्धे वर्ज्यहविः ।

शिग्रूपालङ्कीमृचुकं तथा । कूष्माण्डालाबुवार्ताककोविदारांश्च वर्जयेत् । पिप्पल
चैव तथा वै पिण्डमूलकम् । कृतं च लवणं सर्वं वंशाग्रं च विवर्जयेत् ॥ राजमा
षांश्च कोद्रवान् कोरदूषकान् । लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ।
काश्मीरदेशे प्रसिद्धम् । सुरसा निर्गुण्डीति माधवः । तुलसीति पृथ्वीचन्द्रो
सा च भक्ष्यत्वेन निषिद्धा न पुष्पत्वेनेति गौडाः । पालंकी पालक इति
मृचुकं जलजः शाकः । समुकम् इति पाठे खदिरशाक इति हेमाद्रिः । म
द्र्णीति हेमाद्रिः । कृतं लवणं सांभरभिन्नम् । 'सैन्धवं लवणं
मानससम्भवम्' । 'यच्च सामुद्रिकं भवेत्' इति शूलपाणौ पाठः । 'प
ह्येते प्रत्यक्षे अपि नित्यशः ।' इति वायवीयोक्तेः । मानसं साम्भरम्
भविष्यम्-'तर्जन्या दन्तकाष्ठं च प्रत्यक्षं लवणं तथा ।' इति । तत्र क्षारलव
प्रसिद्धं निषिद्धम् । 'भुक्त्वा तु क्षारलवणं त्रिरात्रं तु वने वसेत् ।' इति ब्राह्
शूलपाणिः । क्षीरलवणमिति पाठात् क्षीरमिश्रं लवणं निषिद्धमिति वाच
राजमाषाः रतरा इति प्रसिद्धाः । कोरदूषकः चणकोद्रवः । चन्द्रिकायां
'पिण्डालकं च तुण्डीरं करमर्दं च नालिकम् । कूष्माण्डं बहुबीजानि श्राद्धे द
त्यधः ॥ पिण्डालकं महाराष्ट्रेषु पेण्डरमिति प्रसिद्धम् । तुण्डीरं बिम्बीफलमि
वः । करमर्दं करवन्दमिति प्रसिद्धम् । तत्रैव-'विडालोच्छिष्टमाघ्रातं श्राद्धे
वर्जयेत् । कूष्माण्डं महिषीक्षीरमाढक्यो राजसर्षपाः ॥ चणका राजमाषाश्
श्राद्धं न संशयः' ॥

वृद्धपराशरः-'करीरफलपुष्पाणि विडङ्गमरिचानि च । जम्भारिकासजम
पक्वं बीजपूरकम् ॥ जम्ब्वलाबूनि पिप्पल्यः पटोलं पिण्डमूलकम् । मसूराश्च
श्राद्धे दत्त्वा पतत्यधः ॥' जम्बूः सूक्ष्मा । माधवीये चतुर्विंशतिमते-'य
कुलित्थांश्च वर्जयन्ति विपश्चितः ॥' यावनाला जोंधला । अत्र यानि चणकादी

गोधूमैश्च तिलैर्मुद्गर्माषैः प्रीणयते पितॄन् ॥ इति । 'गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैर
इति हेमाद्रौ कौर्मविष्णुधर्मादिविरोधः स्यात् । पिप्पलीमरिचादेस्तु प्रत्यक्षस्य नि
धो न त्वन्यद्रव्यामिश्रस्य 'सौवीरतिक्तैर्लवणादिभिस्तु पाकस्य सिद्धिर्महतीहयेस्तु । त
जपूरान् मरिचादियोगात्सिद्धं प्रदेयं न तु दुष्यतीह ॥' इति पृथ्वीचंद्रोदये वृद्धप
शरोक्तेः । तत्रैव–'दातुश्च यस्मिन्मनसोभिलाषः श्रद्धा भवेद्यत्र च दीयमाने । श्रा
देयं विधिवत्तदेव तदत्तमक्षय्यमिति ब्रुवन्ति ॥' एतन्निषिद्धेतरविषयम् । चन्द्रिकायां
'कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्माणि। न वर्जयेत् तिलांश्चैव मुद्गमाषांस्तथैव च
मात्स्ये–'मसूरशणनिष्पावराजमाषकुसुम्भिकाः । पद्मबिल्वार्कधत्तूरपारिभद्राटरूष
न देयाः पितृकार्येषु पयश्चाजाविकं तथा । कोद्रवोदारवरककपित्थमधुकातसी ॥
न्यपि न देयानि पितृभ्यः श्राद्धमिच्छता ॥' निष्पावाः वल्लाः । यत्तु मार्कण्डेयः–
यंगवः कोविदारा निष्पावाश्चात्र शोभनाः।' इति तत्र निष्पावः श्वेतशिम्बीति दान
गरे श्राद्धप्रकाशे चोक्तम् । बिल्वं च रक्तं निषिद्धम् । 'जम्बीरं रक्तबिल्वं च
स्यापि फलं त्यजेत् ।' इति ब्राह्मोक्तेः । 'पारिभद्रो निम्बतरुः' इत्यमरः । रक्तम
इति हेमाद्रिः । आटरूषो वासा तत्पुष्पम् । उदारः काञ्चनारः । मधुकं ज्येष्ठीमधु
चन्द्रिका । वरका वनमुद्गाः ॥

हेमाद्रौ ब्रह्माण्डे–'आसनारूढमन्नाद्यं पादोपहतमेव च । अमेध्यैर्जंगमैः स्पृष्टं
पर्युषितं च यत् ॥ द्विःस्विन्नं परिदग्धं च तथैवाग्रावलेहितम् । शर्कराकीटपाषाणैः
यच्चाप्युपद्रुतम् ॥ पिण्याकं मथितं चैव तथापि लवणं च यत् । सिद्धाः कृताश्च ये भ
प्रत्यक्षलवणीकृताः । वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि॥' द्विःस्विन्नं यत्स
केन भक्ष्यमपि हिंगुजीरकादिसंस्कारार्थं पुनः पच्यते, तद्वर्ज्यम् । यत्तु तिक्तशाकान्न
रादि द्विःपाकेनैव भक्षणार्हं, तन्न निषिद्धम् । अग्रावलेहितमास्वादितपूर्वं पर्युषितस्य
निषेधेपि पुनर्वचनम् । 'अपूपाश्च करम्भाश्च धाना वटकसक्तवः । शाकं मांसं म
सूपं कृसरमेव च ॥ यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुतम् । सर्वं पर्युषितं भोज्यं
चेत्परिवर्जयेत् ।' इति माधवीये यमोक्तवटकादेरपि पर्युषितस्य निषेधार्थमि
न्द्रिकादयः । वर्ज्येषु विश्वामित्रः–'कपित्थं कुरुकं चैव नारिकेलं च पत्ति
जम्बूफलादि पक्वं च पिण्याकं तन्दुलीयकम् ॥' हेमाद्रौ षट्त्रिंशन्मते–'वर्ज्य
टकाः श्राद्धे राजमाषास्तथैव च॥' मर्कटकाः लाका इति प्रसिद्धाः । पैठीनसिः–
कं नलिकापोतकुसुम्भाश्मन्तकानि च । शाकानामभक्ष्याः' इति । पोतं पो

रुसा इति, **महाराष्ट्रेषु** राजगिरा इति च प्रसिद्धम् । कलम्बिका वेण्वाकृ
तत्रैव 'गान्धारिकापटोलानि श्राद्धकर्मणि वर्जयेत् ॥' गान्धारिका तन्दुल
**चन्द्रिका** । जवासाख्या दुरालभा' इति **कैदेवः** । **भारते**–'हिंगुद्रव्येषु शाकेषु
लशुनं तथा । कुकुण्डकान्यलाबूनि कृष्णं लवणमेव च' । पुनरलाबुग्रहणमुभयाल
धार्थमिति **पृथ्वीचन्द्रः** । कुकुण्डकं वर्तुलच्छत्राकम् । **तत्रैव**–'कुस्तुम्बुरुं क
वर्जयेदाम्लवेतसम्' ।

**हेमाद्रौ ब्राह्मे**–'वार्ताकं पञ्चशिम्बं च लोमशानि फलानि च । कलिङ्गं
च वीणाकं वृतचारकम् ॥ कपालं काचमारीचे करञ्जं पिण्डमूलकम् । गृञ्जनं
चैव गाजरं जीवकं तथा ॥' वृन्ताकं श्वेतम् । 'कण्डूरां श्वेतवृन्ताकं कूष्म
विवर्जयेत् ।' इति **देवलोक्तेः** । तेन कृष्णस्यानिषेध इति **चन्द्रिकामाध**
वस्तुतस्तु सदा श्वेतनिषेधात् पुनः श्राद्धे निषेधो व्यर्थः । तेन भक्ष्यस्य कृष्ण
स्यापि निषेधार्थमिदमिति वयम् । कण्डूरा कपिकच्छूः । कुंभाण्डं वृत्तालाबुः ।
शिम्बं वल्लमसूरराजमाषमटकुलित्थाः । लोमशानि कपित्थानि । रक्तचारं लोहि
फलम् । वीणाकं कृष्णदीर्घकर्कटी । घृतचारकं चिरस्थितचारफलम् । चा
प्रसिद्धम् । कपालं नारिकेलम् । काचं कचूवृक्षफलम् । मारीचं आर्द्रमरीचानि
पलाण्डुभेदः पश्चिमदिशि प्रसिद्धः । न तु गाजरम् । तस्य पृथगुक्तेः **हेमाद्रि**
गृञ्जनं गाजरमेवोक्तम् । **गौडश्राद्धकौमुद्यामप्येवं** तच्चिन्त्यम् । चुंक्रिका
लशुक्तं पानकम् । **चन्द्रिकायां हारीतः**–'न वटप्लक्षोदुम्बरशेलुदधित्थनीपम
ज्ञानि भक्षयेत् ॥' शेलुः भोकरसंज्ञः । दधित्थं कपित्थं **स्मृतिसारे**–'क्षीरे तु
दत्त्वा उच्छिष्टेपि च यद् घृतम् । स्नानं रजकतीर्थेषु ताम्रे गव्यं सुरासमम् ॥'
**निबन्धसागरे स्मृतिः**–'नारिकेरोदकं कांस्ये ताम्रपात्रे स्थितं मधु ।
ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥' 'ताम्रपात्रे घृतं मांसं पञ्चगव्यं घृतेतरत् ।
तु गवां मांसं दधि मद्यं पयो रजः ॥ द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि ।
नुद्धृतसारं च ताम्रपात्रे न दुष्यति ॥'

**अथ जलम्** । **याज्ञवल्क्यः**–'शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।

श्राद्धे जलनिर्णयः ।

जलमुक्तं **हेमाद्रौ ब्रह्माण्डे**–'दुर्गन्धि फेनिलं क्षारं पङ्किलं
लोदकम् । न भवेद्यत्र गोतृप्तिर्नक्तं यच्चाप्युपाहृतम् ॥ यन्न स

१–स च 'वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकां पिण्डमूलकम् । करञ्जं येपि चान्ये वै रसगन्धोत्कटा

त्स्पृष्टं यच्चाभोज्यनिपानजम् । तद्वर्ज्यं सलिलं तात सदैव श्राद्धकर्मणि ॥' नि
जलाशयः । **शुद्धितत्त्वे शङ्खः**–स्नानमाचमनं दानं देवतापितृतर्पणम् । शूद्रो
कुर्वीत तथामेध्याद्विनिःसृतैः ॥' **हेमाद्रावादित्यपुराणे**–'चिरं पर्युषितं वापि
स्पृष्टमथापि वा । जाह्नव्याः स्नानदानादौ पुनात्येव सदा पयः ॥' **कात्यायनः**–
**निशि न गृह्णीयान्न पिवेच्च कदाचन** । उद्धृत्याग्निमुपर्यग्नेर्धाम्नो धाम्न इतीरयेत
रजोदोषे तु प्रागुक्तं **नारदीये**–'त्यजेत्पर्युषितं पुष्पं त्यजेत्पर्युषितं जलम् । न
ज्जाह्नवीतोयं तुलसीविल्वपङ्कजम् ॥'

अन्यान्यपि **पृथ्वीचन्द्रोदये मात्स्ये**–'मध्याह्नः खड्गपात्रं च तथा नेप
म्बलः । रौप्यं दर्भास्तिलागावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहु
सन्तापकारिणः । अष्टावेते यतस्तस्मात्कुतुपा इति विश्रुताः ॥' **ब्राह्मे**–'यतिस्त्रि
करुणा राजतं पात्रमेव च । दौहित्रं कुतुपः कालश्छागः कृष्णाजिनं तथा ॥'
नीति शेषः । दौहित्रं खड्गपात्रमिति **कल्पतरुः** । **अपरार्के स्मृत्यन्तरे**–'
दुहितुश्चैव खड्गपात्रं तथैव च । घृतं च कपिलाया गोर्दौहित्रमिति कीर्तितम् ॥'
**ण्डे**–'अमावास्यागते सोमे या तु खादति गौस्तृणम् । तस्या गोर्यद्भवेत् क्षीरं त
मुदाहृतम् ॥' **स्मृतिसंग्रहे**–'उच्छिष्टं शिवनिर्माल्यं वान्तं च मृतकर्पटम् ।
सप्त पवित्राणि दौहित्रः कुतुपस्तिलाः ॥' उच्छिष्टं वत्सस्य दुग्धमित्यर्थः । शिवनि
गङ्गोदकम् । वान्तं मधु । मृतकर्पटं तसरी पट्टम् ।

तिलनिर्णयः ।

**तिलेष्वापस्तम्बः**--'अटव्यां ये समुत्पन्ना अकृष्टफलितास्तथा । ते वै श्राद्धे
स्युस्तिलास्ते न तिलास्तिलाः ॥' अभावे ग्राम्याः ॥ 'गौराः कृष
थारण्यास्तथैव त्रिविधास्तिलाः ।' इति **ब्राह्मोक्तेः** ।

श्राद्धवर्ज्यानि ।

**अथ वर्ज्यानि चन्द्रिकायां यमः**–'कुक्कुटो विड्वराहश्च काकश्चाथ विडा
वृषली पतिश्च वृषलः षण्ढो वीरा रजस्वला । एते तु श्राद्धव
वर्जनीयाः प्रयत्नतः ॥ खञ्जः काणः कुणिः श्वित्री दातुः प्रेष्यकर
न्यूनाङ्गोप्यतिरिक्ताङ्गस्तमप्यपनयेत्ततः ॥' **वायवीये**–'अन्नं पश्येयुरेते तु यदि वै
व्ययोः । उत्स्रष्टव्यं प्रधानार्थं संस्कारस्त्वापदि स्मृतः ॥' **सुमन्तुः**–'चाण्डाला
तमन्नमभोज्यमन्यत्र मृद्भस्महिरण्योदकस्पर्शात् ॥' तत्रैव **जमदग्निः**–'शुद्ध
कूष्माण्डचः पावमान्यस्तरत्समाः । पूतेन वारिणा दर्भैरन्नदोषमपानुदत् ॥' **चन्द्रि**
'पादकोपहतौ कृतं त्रिदशकांबरं तथा । रक्तपुष्पं च मार्जारं श्राद्धभूमौ विवर्ज

निर्णयदीपे-'घण्टानिनादो हयसंनिधानं शम्बूकशंखं कदलीदलं च। उन्मत्त
यारिजानि श्राद्धस्य वैगुण्यकराण्यमूनि' हयारिजं महिषीक्षीरादि ॥

अथ श्राद्धदिनकृत्यम् । चन्द्रोदये उशनाः-'गोमयोदकैर्भूमिम
कुर्यात् ॥' पराशरः-'काञ्जिकं दधि तक्रं च शृतं वाशृत
पूर्वमेव न दातव्यमेकोद्दिष्टेथ पार्वणे ॥' हेमाद्रौ पराशरः
ग्निशिशुदेवानां ब्रह्मचारितपस्विनाम्।तावन्न दीयते किंचिद्यावत्पिण्डान्न निर्वपेत्'।
'तिलानवकिरेत्तत्र सर्वतो बन्धयेदजान् ॥' तत्रैव देवलः-'तथैव यन्त्रितो दा
स्नात्वा सहाम्बरः । आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ॥' अत्रात्मनेपदा
पाकः कार्यः । अशक्तौ पत्न्या तदभावे बान्धवैः । 'ततस्तु निपपाचाशु सीता
न्दिनी।' इति पाद्मलिङ्गादिति हेमाद्रिः ॥ श्राद्धदीपकलिकायाम
यनः-'समानप्रवरैर्मित्रैः सपिण्डैश्च गुणान्वितैः । कृतोपकारिभिश्चैव पाकका
स्यते ॥' व्यासः-'गृहिणी चैव सुस्नाता पाकं कुर्यात्प्रयत्नतः । निष्पन्नेषु च
पुनः स्नानं समाचरेत् ॥' पृथ्वीचन्द्रोदये ब्राह्मे-'रजस्वलां च पाखण्डां
पतितां तथा । त्यजेच्छूद्रां तथा वन्ध्यां विधवांचान्यगोत्रजाम् ॥ व्यङ्गकर्णीं च
स्नातामपि रजस्वलाम् । वर्जयेच्छ्राद्धपाकार्थममातृपितृवंशजाम् ॥' मातृपितृवंश
त्यजेदित्यर्थः ॥ स्मृतिसारे-'न पाकं कारयेत्' पुत्रीमन्यां वाप्यन्यगोत्रजाम्
वन्ध्यां च गर्भघ्नीं गर्भिणीं चैव दुर्मुखिम् ॥

पाकभाण्डानि तु हेमाद्रौ नागरखण्डे-'सौवर्णान्यथ रौप्याणि कांस्यत
वानि च । मार्त्तिक्यान्यपि भव्यानि नूतनानि दृढानि च ॥' तत्रैव आदित्यपु
'पचेदन्नानि सुस्नातः पात्रेषु शुचिषु स्वयम् । स्वर्णादिधातुजातेषु मृन्मयेष्वपि वा
अच्छिद्रेष्वविलिप्तेषु तथानुपहतेषु च । नायसेषु न भिन्नेषु दूषितेष्वपि कर्हिचित्
कृतोपयोगेषु मृन्मयेषु न तु क्वचित् ॥' वायुपुराणे-'न कदाचित्पचेदन्नमयःस्
पैतृकम् । अयसो दर्शनादेव पितरोपि द्रवन्ति हि ॥ कालायसं विशेषेण निन्दन्ति
कर्माणि । फलानां चैव शाकानां छेदनार्थानि यानि तु ॥ महानसेपि शस्त्राणि ते
हि सन्निधिः । इष्यते नेतरस्यात्र शस्त्रमात्रस्य दर्शनम् ॥ श्राद्धदेशे तु विदुषा
तृप्तिमिच्छता । महानसेपि युक्तानामपि कार्यं न दर्शनम्।' तत्रैव-'पचमानस्तु भ
भक्त्या ताम्रमयेषु च । समुद्धराति वै घोरात् पितॄन् दुःखमहार्णवात् ॥ तैजसानामभ
पिठरे मृन्मयेपि च । नवे शुचौ प्रकुर्वीत पाकं पितृर्थमादरात् ॥'

दारुभिः ॥' **यमः**—'विवाहे प्रेतकार्ये च मातापित्रोः क्षयेऽहनि । नवभाण्डानि कु
यज्ञकाले विशेषतः ॥'

**अथ पाकाग्निः । हेमाद्रौ प्रजापतिः**—'औपासनेनान्नसिद्धिरग्नौकरणमेव च

श्राद्धे पाकाग्निनिर्णयः। **पृथ्वीचन्द्रोदयेऽङ्गिराः**—'शालाग्नौ तु पचेदन्नं लौकिके व
नित्यशः । यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते ॥' **मनु**
'वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्च यज्ञविधानं च पक्तिं चान्वाहिकीं द्विज
श्राद्धस्य गृह्यत्वं चोक्तम**परार्केण** ॥ अत्र विशेषः **कर्मप्रदीपे**—'प्रातर्होमं तु नि
समुद्धृत्य हुताशनात् । शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥ पाकान्तेऽग्निं तमा
गृह्याग्नौ तु पुनः क्षिपेत् । ततोऽस्मिन्वैश्वदेवादि कर्म कुर्यादतन्द्रितः ॥' तदभावे लौकि
'ततः पचेयुरन्नानि निर्वापानन्तरं शनैः । वैवाहिकेऽग्नावन्यत्र लौकिके वापि संयतः ॥
**कलिकायां संग्रहोक्तेः** । पित्रर्थं निर्वापं कृत्वेत्यर्थः । अत एव **हेमाद्रौ** व
**पुराणे**—'पित्रर्थं निर्वपेद्भूमौ कूर्चे वा दर्भसंस्कृते ॥' **तत्रैव पाद्ममात्स्ययोः**—'
मान्निर्वपेत्पैत्रं चरुं वा सममुष्टिभिः । पितृभ्यो निर्वपामीति सर्वं दक्षिणतो न्यसेत्
चरुग्रहणान्नशाकादाविति **हेमाद्रिः** । पिण्डपितृयज्ञार्थपाकविषयोऽयं निर्वाप इ
युक्तम् । अयं चेतरेषामग्निः । **आश्वलायनानां** तु 'गुरुणाभिमृता अन्यतोवा
यमाणा अमावास्यायां शान्तिकर्म कुर्वीरन्' इत्यादिसूत्रेण पचनाग्नेरत्यागमुक्त्वा 'इ
यमितरो जातवेदाः' इत्यर्धर्चेन, 'शमीमयीभ्यामरणिभ्यामग्निं मन्थेत्स पचनाग्निर्भ
इति सूत्रे वृत्तौ चोक्तेः । पचनाग्नावेव पाकः । **बौधायनेनाप्युक्तम्** । 'आहृतप
ग्निमौपासनं वाभिप्रव्रजन्ति' इति । स्मार्ताग्नौ पाकस्त्वन्यशाखाविषय इति केचि[1]
वस्तुतस्तु पूर्वोक्तस्य सर्वाधानविषयत्वं युक्तम् । शिष्टाचारेऽपि न पचनो दृश्यते । अ
**विलायामपि** सर्वाधानपक्षे वैश्वदेवश्राद्धं च पचने कुर्यात् । अन्यथौपासने इत्युक्त
**अग्नौकरणं** तु **प्रयोगपारिजाता**दिभिराब्दिकादिसर्वश्राद्धेषु पिण्डपितृयज्ञव्याति

---

१—अस्य 'इति केचित्' इत्यत्रान्वयः । २—येषां सूत्रे औपासनाग्नौ नित्यः पाव
श्राद्धपाकोऽपि तत्रैवेत्यर्थः ॥ ३—गृह्यकारैरुक्तमष्टकापार्वणश्राद्धहोमादि गृह्याग्निसाध्यं गृह्यम् । न
गृहं शाला तत्रोक्तं वास्तुकर्ममात्रं गृह्यम् । न त्वष्टकाहोमादीति वाच्यम् । तावन्मात्रगृहे मानाभा
वचनवैयर्थ्यात् । नापि गृहं दाराः तत्रोक्तं गृह्यमिति वाच्यम् । गृहीत्यनेन गतत्वात् । पञ्चयज्ञ
गृही कुर्यादिति योजना, न तु वैवाहिकेऽग्नौ पञ्चयज्ञविधानं कुर्यादिति । वैश्वदेवस्य गृह्यकर्मत्वेन त
संबन्धस्य सिद्धेः । पञ्चानामनग्निसाध्यत्वाच्च । आन्वाहिकीं नित्यां पक्तिं पाकं च तदग्नौ कु

केर्लौकिके पचने वा पाके कृतेपि गृह्याग्नौ पक्वचरुणैव कार्यमिति प्रतिभाति । म
रत्नेप्येवम् । विधुरोत्सन्नाग्न्यादेस्तु पृष्ठोदिविविधानेनाग्निसंपादनमित्युक्तम् । हरि
भाष्ये इति पाकाग्निः ॥

श्राद्धकृत्यनिर्णयः ।

**चन्द्रिकायां मार्कण्डेयः**—'अह्नः षट्सु मुहूर्तेषु गतेषु प्रयतान्द्विजान् । प्र
प्रेषयेत्तेषां प्रदायामलकोदकम् ॥' **देवलः**—'ततो निवृत्ते म
कृत्तरोमनखान् द्विजान् । अभिगम्य यथान्यायं प्रयच्छेद्दन्तधावन
तैलमभ्यञ्जनं स्नानं स्नानीयं च पृथग्विधम् । पात्रैरौदुम्बरैर्दद्याद्वैश्वदेविकपूर्वकम
औदुम्बरैस्ताम्रमयैः । 'अत्र क्षौरामलकस्नानादि निषिद्धतिथ्यादिव्यतिरिक्तविषय
इति **हेमाद्रिर्माधवश्च** । यत्तु **चन्द्रिकायां प्रचेताः**—'तैलमुद्वर्तनं स्नानं त
त्पूर्वाह्ण एव च । श्राद्धभुग्भ्यो नखश्मश्रुच्छेदनं तु न कारयेत् ॥' इति तन्निषिद्धति
दिविषयम् । निषिद्धतिथ्यादि तु प्रागुक्तम् । अभ्यङ्गे तु **कलिकायां कात्याय**
'तैलमुद्वर्तने देयं ब्राह्मणेभ्यः प्रयत्नतः । तैरभ्यङ्गश्च कर्तव्यो वर्ज्यकालं न चिन्तयेत
**अपरार्के प्रचेताः**—'स्नातोधिकारी भवति दैवे पित्र्ये च कर्मणि । श्राद्धकृच्छुक्लव
स्यान्मौनी च विजितेन्द्रियः ॥' **हेमाद्रौ जाबालिः**—'ताम्बूलं दन्तकाष्ठं च
स्नानमभोजनम् । रत्यौषधं परान्नानि श्राद्धकर्ता विवर्जयेत् ॥' वस्त्रे विशेषमाह
भृगुः—'नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः । द्विकच्छोनुत्तरीयश्च अकच्छो
एव च । नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटः स्मृतः । नग्नो द्विगुणवस्त्रः स्यान्नग्नो
पटः स्मृतः ॥ नग्नस्तु स्निग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथा ॥'

ततः कर्ता ऊर्ध्वपुण्ड्रं कुर्यात् । 'जपे होमे तथा दाने स्वाध्याये पितृकर्मणि
तत्सर्वं नश्यति क्षिप्रमूर्ध्वपुण्ड्रं विना कृतम् ॥' इति **हेमाद्रावुक्तेः** ॥ 'यज्ञो
जपो होमः स्वाध्यायः पितृकर्म च । वृथा भवति विप्रेन्द्र ऊर्ध्वपुण्ड्रं विना कृतम्
इति **बृहन्नारदीयात्** ॥ 'ऊर्ध्वं च तिलकं कुर्यात् दैवे पित्र्ये च कर्मणि ।'
**वृद्धपराशरोक्तेश्च** ॥ अन्ये तु—'ऊर्ध्वपुड्रं द्विजातीनामग्निहोत्रसमो विधिः । श्रा
काले तु संप्राप्ते कर्ता भोक्ता च तत्त्यजेत् ॥ वामहस्ते च दर्भास्तु गृहे रङ्गावलिं तथ
ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः ॥' इति **संग्रहोक्तेः** । ऊर्ध्वपुण्ड्रं त्रिपु
वा चन्द्राकारमथापि वा । श्राद्धकर्ता न कुर्वीत यावत्पिण्डान्न निर्वपेत् ॥'
**विश्वप्रकाशे** वचनाच्च न कार्यमित्याहुः । अत्राचाराद्व्यवस्था । अत एव बृ
न्नारदीये—'ऊर्ध्वपुण्ड्रं च तुलसीं श्राद्धे नेच्छन्ति केचन ।' इति । ऊर्ध्वपुण्ड्रविधि
विप्रविषयः । निषेधः कर्तृपर इति ...

पुण्ड्रं त्रिपुण्डम् । 'ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् । निराशाः
यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्' ॥ इति बृहत्पराशरोक्तेः । भोक्तुस्तिर्यग्लेप
त्येव । 'वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा । तिर्यगप्यूर्ध्वपुण्ड्रं वा ध
प्रयत्नतः ॥' इति व्यासोक्तिरित्याह । पृथ्वीचन्द्रोदये ब्राह्मे–'सदर्भेण तु
यः कुर्यात्तिलकं बुधः । आचम्य स विशुद्ध्येत दर्भत्यागेन चैवहि ॥' श्राद्ध
कालमाहापरार्के गौतमः–'आरभ्य कुतुपे श्राद्धं कुर्यादारोहणं बुधः । विधिज्ञो
मास्थाय रोहिणं तु न लंघयेत् ॥' एतदेकोद्दिष्टे । पार्वणे तूक्तं मात्स्ये–
मुहूर्तात्कुतुपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्तत्स्वधाभवनमिष्यते ॥'
'मध्याह्ने सर्वदा यस्मान्मन्दीभवति भास्करः । तस्मादनन्तफलदस्तत्रारम्भो विशिष

अथ श्राद्धपरिभाषा । चन्द्रिकायां कात्यायनः–'दक्षिणं पातयेज्जानुं
परिचरन् सदा । पातयेदितरं जानुं पितॄन् परिचरन् स

श्राद्धपरिभाषानिर्णयः । बौधायनः–'प्रदक्षिणं देवानां पितॄणामप्रदक्षिणम् । देवान

दर्भाः पितॄणां द्विगुणास्तथा ॥' पृथ्वीचन्द्रोदये शंखः–'आवाहनार्घ्यसंकल्पे
दानान्नदानयोः । पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्मणि ॥ अक्षय्यासनयो
गोत्रं नाम प्रकाशयेत् ॥' तत्रैव परिशिष्टे–'क्षणे च पिण्डदाने च गन्ध
तथा । संकल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ॥ अन्नार्घ्यदानाद्यन्तेषु गो
च कीर्तयेत् ॥' कलिकायां संग्रहे–'आसनावाहने पाद्ये अन्नदाने तथै
अक्षय्ये पिण्डदाने च षट्सु नामानि कीर्तयेत् ॥' मात्स्ये–'संम्बन्धं प्रथम
गोत्रं नाम तथैव च । पश्चाद्रूपं विजानीयात् क्रम एष सनातनः ॥' तत्रैव 'सव
वक्तव्यं गोत्रं सर्वत्र धीमता । सकारः कुतपो ज्ञेयस्तस्माद्यत्नेन तं वदेत् ॥' यथा
पसगोत्रेति । 'पराशरसगोत्रस्य वृद्धस्य तु महात्मनः । भिक्षोः पञ्चशिखस्याहं शि
मधार्मिकः ॥' इति मोक्षधर्मेषु प्रयोगाच्च । तेन गोत्रसगोत्रयोः पर्याय
त्वाभेदाद्व्यवस्थेति शूलपाणिः । एतद्येषामाम्नातं तेषामेव । हेमाद्रौ
चेताः–'गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि । गोत्रस्तु तर्पणे प्रोक्त ए
न मुह्यति ॥ सर्वत्रैव पितुः प्रोक्तः पिता तर्पणकर्मणि । पितुरक्षय्यकाले
संकल्पने तथा ॥ शर्मन्नर्घ्यादिके कार्यं शर्मा तर्पणकर्मणि । शर्मणोऽक्षय्य
पितॄणां दत्तमक्षयम् ॥' स्वरान्तं संबुद्ध्यन्तमिति हेमाद्रिः । तत्रैव चन्द्रिक
स्मृत्यन्तरे–'गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते । यस्मादाह श्रुतिः स
कश्यपसम्भवाः ॥' यत्तु सत्याषाढः–'अथाज्ञातबन्धोः पुरोहितगोत्रेणाचा
वति तद्वैवाहपरम् । नामोच्चारणे विशेषमाह हेमाद्रौ बौधायनः–'शर्मान्तं ब्राह्म
वर्मान्तं क्षत्रियस्य तु । गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥' पित्रादिनाम

त्रैव-'पृथिवीवत्पितावाच्यस्तात्पिताचान्तरिक्षवत्।अभिधानापरिज्ञाने दिविषत्प्रपिताम पित्रादीनां नाम यदा पुत्रैर्न ज्ञायते तदा ॥' **आपस्तम्बसूत्रेप्येवम्** । एतदन्यश परम्। **आश्वलायनानांतूक्तं तत्सूत्रे**-'यदि नामान्यविद्वांसस्तत्पितृपितामहप्रपिता ऽपित्रूयात् ॥' तत् **कारिकापि**-'नामानि चेन्न जानीयात्तत्तेत्यादि वदेत्क्रमात् तत्तेति सम्बन्धमात्रपरम् । तेन पितृव्यादावपि तथेति **गौडाः**।स्त्रीणां दान्तं नाम ज्ञे 'दान्तं नाम स्त्रीणाम्' इति **पृथ्वीचन्द्रोदये गोभिलोक्तेः** । केचिद्देवीशब्दान्तमा अन्ये तु देवी दा इति द्वयोः समुच्चयमाहुः ॥

**हेमाद्रौ नारायणः**-'विभक्तिभिस्तु यत् किञ्चिद्दीयते पितृदेवते । तत्सर्वं स ज्ञयं विपरीतं निरर्थकम् ॥' **चन्द्रिकास्मृत्यर्थसारयोश्च नारदीये**-'अक्षय्यासन षष्ठी द्वितीयावाहने तथा । अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः ॥' **व्यासः**-चतुर्थी चासने नित्यं संकल्पे च विधीयते । प्रथमा तर्पणे प्रोक्ता सम्बुद्धि जगुः इति ।अत्र शाखाभेदाद्व्यवस्थेति **हेमाद्रिः** । **हेमाद्रौ भृगुः**-'अर्घ्यावने पिण्डमन्नं प्रत्यवनेजनम् । सम्बुद्धिं तत्र कुर्वीत शेषे षष्ठी विधीयते ॥' तत्रैव मातुर्वि **नागरखण्डे**-'मातर्मात्रे तथा मातुरासने कल्पने क्षणे । गोत्रे गोत्रायै गोत्रायाः माद्या विभक्तयः' ॥

**हेमाद्रौप्रभासखण्डे**-'यज्ञोपवीतिना कार्यं दैवं कर्म प्रदक्षिणम् । प्राचीनावीति कार्यं पितृकर्माप्रदक्षिणम् ॥' अनुपनीतस्त्रीशूद्रादेस्तूत्तरीयेणैव सव्यापसव्ये ज्ञेये । तर पवीतस्थानीयत्वात् ॥ 'अपसव्यं क्रमाद्वस्त्रं कृत्वा कश्चित्सगोत्रजः ।' इति **ब्राह्माच्चे वाचस्पतिः** । यत्तु **केचित्** 'सदोपवीतिनां भाव्यम्' इत्यस्य पुरुषार्थत्वात् । प्रा नावीतिकालेऽप्युपवीतान्तरेण तत्कार्यमेवेति तन्न विशेषेण बाधात् **जमदग्निः**-'सू स्तोत्रजपं त्यक्त्वा पिण्डाघ्राणं च दक्षिणाम् । आह्वानं स्वागतं चार्घ्यं विना च परि णम् ॥ विसर्जनं सौमनस्यमाशिषां प्रार्थनं तथा । विप्रप्रदक्षिणां चैव स्वस्तिवाच विना ॥ पितॄनुद्दिश्य कर्तव्यं प्राचीनावीतिना सदा ॥' **हेमाद्रौ संग्रहे**-'आदौ विप्रां शौचान्तेभ्यर्चने विकिरे कृते । पिण्डानप्यर्चयित्वा च विसर्ज्य ब्राह्मणांस्तथा ॥ आ मेच्छ्राद्धकर्ता च स्थानेष्वेतेषु सप्तसु । आद्यन्तयोर्द्विराचामेच्छेषेषु तु सकृत्सकृत् तत्रैव 'श्राद्धारम्भेऽवसाने च पादशौचार्चनान्तयोः । विकिरे पिण्डदाने च षट्स्वाचम मिष्यते ॥' **आश्वलायनः**-'दानाध्ययनदेवार्चाजपहोमव्रतादिकान् । न कुर्याच्छ्रा

१-'विशिखो व्युपवीतिश्च यत्करोति न तत्कृतम् ।' इति कर्मार्थत्वोक्तेरितिभावः । २-शूद्र 'न शिखी नोपवीती स्यान्नोच्चरेत्संस्कृतां गिरम् ।' इति निषेधेपि कर्मार्थमुपवीतमावश्यकम् । 'वि

दिवसे प्राग्विप्राणां विसर्जनात् ॥' एतन्नित्यवर्ज्यमिति वोपदेवः । इदं विष्णुमिन्नदे परम् ॥ 'विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् । पितृभ्यश्चापि तद्देयं तदानन्त्या कल्पते ॥ पितृशेषं तु यो दद्याद्धरये परमात्मने । रेतोधाः पितरस्तस्य भवन्ति क्लेशभ गिनः ।' इति स्कान्दात् । 'पितरः सर्वे मनुष्या विष्णुनाशितमश्नंति ।' इति श्रुतेः 'यः श्राद्धकाले हरिभुक्तशेषं ददाति भक्त्या पितृदेवतानाम् । तेनैव पिण्डांस्तुलसीविमि श्रानाकल्पकोटिं पितरस्तु तृप्ताः ॥' इति ब्राह्मोक्तेश्चेति श्रीधरस्वामिनृसिंहपा चर्यादयः । एतत्सर्वं निबन्धविरोधान्निर्मूलम् ॥

अत्र विशेषो हेमाद्रौ विष्णुधर्मे–'श्राद्धानि तु समभ्यर्च्य नृवाराहं जनार्दनम् शिवपुराणे–'पूजयित्वा शिवं भक्त्या पितृश्राद्धं प्रकल्पयेत् ॥' पूर्वनिषेधस्तु विहिता न्नपरः । तथा हेमाद्रौ–' दैव्यर्चादक्षिणाङ्गादिः पादजान्वंसमूर्धनि । शिरोंसजानुपा वामाङ्गादि च पैतृकम् ॥' कलिकायां स्मृत्यन्तरे–'श्राद्धारम्भे तु ये दर्भाः पाद चे विसर्जयेत् । अर्चनादौ तु ये दर्भा उच्छिष्टान्ते विसर्जयेत् ॥ मार्जनादौ तु ये द पिण्डोत्थाने विसर्जयेत् । उत्थानादौ तु ये दर्भा दक्षिणान्ते विसर्जयेत् ॥ प्रार्थनादौ ये दर्भा नमस्कारे विसर्जयेत् ॥' ऊहमाह विष्णुः–'मातामहानामप्येवं श्राद्धं कुर्या चक्षणः । मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥' यथान्यायमिति यत्र बहुव नान्तः पितृशब्दस्तत्र सर्वपितृवाचित्वान्नोहः । तत्रापि 'शुन्धन्तां पितरः' इत्य एव । सर्वपितृवाचित्वे उत्तरमन्त्रद्वयवैयर्थ्यात् । बहुवचनं तु नोह्यते । प्रकृत समर्थत्वात्पाशानितिवत् । ऋगन्ते च नोहः । तस्मादृचं नोहेदिति निषेधात ऐकोद्दिष्टेप्येवम् । प्रेतैकोद्दिष्टे तु 'एकवन्मन्त्रानूहेतैकोद्दिष्टे' इति विष्णूक्तेरूहः । बहुवचनस्याप्यूहो वचनात् । वृद्ध्यादौ तु विशेषं वक्ष्यामः । शेषाणामिति पितृव्याद द्दिष्टे आवाहनादिमन्त्रवर्ज्यं कार्यमिति कल्पतरुः । ऊहयोग्यपितृपदवान्मन्त्र एव न प्रयोज्यः । न तूहः । नापि पितृपदरहितः प्रयोज्य इति शूलपाणिः । अर्था चोक्तं प्राक् । बह्वृचकारिकापि–'अर्घ्यप्रदानमन्त्रे तु मात्रादिपदमावपेत् । शुन्ध मिति पित्रादौ मात्रादिपदमावपेत्' ॥ 'मातृश्राद्धे पिण्डदाने' 'ये च त्वामत्रानु' इ नोह इति वृत्तिकृत् । तथा । 'मातुः श्राद्धेप्यनूहेन कुर्यात्पिण्डानुमन्त्रणम् । दशव मुपस्थानं तद्वत्कार्यमिति स्थितिः ॥ प्रवाहणमनूहेन तद्वत्पाशनमिष्यते ॥' तथ

१–प्रकृत्यर्थसमवेतार्थकबहुवचनस्य विकृतावविकृतस्यैव प्रयोग इति पाशाधिकरणसिद्धान्त

'आयन्तुनस्तिलोसीति उशन्तस्त्वेति यानि तु । अनूह्यः पितृशब्दोत्र पितृसामान्यवाचकः' आपस्तबानां तु वक्ष्यते ॥

**हेमाद्रौ मार्कण्डेयः**—'स्नातः स्नातान् समाहूतान् स्वागतेनार्चयेत् पृथक् ॥' **कालिकायां नारदीये**—'प्रायश्चित्तविशुद्धात्मा तेभ्योऽनुज्ञां प्रगृह्य च । दद्याद् ब्रह्मदण्डार्थं हिरण्यं कुशमेव च ॥' **तत्रैव संग्रहे**—'तिथिवारादिकं ज्ञात्वा संकल्प्य च यथाविधि । प्राचीनावीतिना कार्यं सर्वं संकल्पनादिकम् ॥ सम्बन्धं प्रथमं ब्रूयान्नामगोत्रे तथैव च । वस्वादिरूपतां चापि स्वपितॄणामनुक्रमात् ॥' **पृथ्वीचन्द्रोदये नारदीये**—'श्राद्धार्थं समनुप्राप्तान् विप्रान् भूयो निमन्त्रयेत् ॥' **आपस्तम्बस्तु**—'पूर्वेद्युर्निमन्त्रणं परेद्युर्द्वितीयं तृतीयमामन्त्रणम्' इत्याह । यूयं मया निमन्त्रणीया इति निवेदनरूपं आद्यम् । तद्विधिमाह **शौनकः**—'गृहीत्वामुकसंज्ञस्यामुकगोत्रस्य चामुके । श्राद्धे तु वैश्वदेवार्थं करणीयः क्षणस्त्वया ॥ इत्येवं श्राद्धकृद्ब्रूयादोंतथेति वदेत्तु सः । श्राद्धस्य कर्ता स ब्रूयात्तं प्राप्नोति भवानिति ॥ स वदेत् प्राप्नवानीति इतरस्तं प्रति द्विजः ॥' दैवे पार्वणे पुरूरवार्द्रवौ वाच्यौ । 'पित्रादेरप्यनेनैव वृणीत विधिना द्विजान्' । ततः कर्ता बह्वृचोऽनाहिताग्निः पिण्डपितृयज्ञं परिस्तरणादीध्माधानान्तं कुर्यात् । 'अर्धाधानिनोप्येवम्' इति **प्रयोगपारिजाते परिशिष्टे च** । **भाष्यकारमते** आब्दिकेप्येवम् । **वृत्तिकारमते** नेदम् ॥

**हेमाद्रौ शम्भुः**—'सम्मार्जितोपलिप्ते तु द्वारि कुर्वीत मण्डले । उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम् ॥' **व्याघ्रः**—'उत्तरेक्षतसंयुक्तान् पूर्वाग्रान् विन्यसेत् कुशान् । दक्षिणे दक्षिणाग्रांस्तु सतिलान् विन्यसेत् कुशान् ॥' तत्रैव **बौधायनः**—'चतुरस्रं त्रिकोणं च वर्तुलं चार्धचन्द्रकम् । कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥' तत्रैव **लौगाक्षिः**—'हस्तद्वयमितं कार्यं वैश्वदेविकमण्डलम् । दक्षिणे च चतुर्हस्तं पितॄणामंघ्रिशोधने ॥' **कालिकायां संग्रहे** तु—'प्रादेशमात्रं देवानां चतुरस्रं तु मण्डलम् । त्यक्त्वा षडंगुलं तस्माद्दक्षिणे वर्तुलं तथा ॥' इत्युक्तम् । यत्तु **स्मृत्यन्तरे**—'गर्तः पञ्चांगुलो विप्रे जानुमात्रो महीभुजि । प्रादेशमात्रो वैश्ये च साधिकः स तु शूद्रके ॥ तिर्यगूर्ध्वप्रमाणेन व्याख्यातो दैवपित्र्ययोः । चतुरस्रं वर्तुलं च कथितं गर्तलक्षणम् ॥ पादप्रक्षालनं प्रोक्तमुपवेश्यासने द्विजान् । तिष्ठंश्चेत् क्षालनं कुर्यान्निराशाः पितरो गताः ॥' इति तत्समूलत्वे मण्डलाग्रे पृथक् ज्ञेयम् । तत्र गोमये **हेमाद्रौ भृगुः**—'अत्यन्तजीर्णदेहाया वन्ध्यायाश्च विशेषतः । आर्ताया नवसूताया न गोर्गोमयमाहरेत् ॥' **मात्स्ये**—

त्पादौ भार्यास्त्रावितवारिणा ॥' तथा–'श्राद्धकाले यदा पत्नी वामे नीरप्रदा भवेत् आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥' तत्रैव–'नाधः प्रक्षालयेत्पादौ कर्ता पित्र दिकर्मसु ॥' पाद्यानन्तरमर्घ्यमपि दद्यादिति हेमाद्रिः । तत्रैव लौगाक्षिः–'मण् लादुत्तरे देशे दद्यादाचमनीयकम्' ॥ तत्रैव–'विधाय क्षालनं तेषां द्विराचमनमिष्यते स्वयं चापि द्विराचामेद्विधिज्ञः श्रद्धयान्वितः ॥' हेमाद्रौ नारदीये–'यत्राचमन रीणि पादप्रक्षालनोदकैः । संगच्छन्ते बुधाः श्राद्धमासुरं तत्प्रचक्षते ॥'

हेमाद्रौ व्यासः–'सव्येनैवासनं धृत्वा दक्षिणे दक्षिणं करम् । व्याहृतीभिः समस्त भिरासनेषूपवेशयेत् ॥ 'समाध्वम्' इति चैवोक्त्वा दक्षिणं जानु संस्पृशन् । 'आस्यता इति तान्ब्रूयादासनं संस्पृशन्नपि ॥' हेमाद्रौ शातातपः–'द्वौ दैवेथर्वणौ वि प्राङ्मुखावुपवेशयेत् । पित्र्ये तूदङ्मुखांस्त्रींश्च बह्वृचाध्वर्युसामगान् ॥' याज्ञवल्क्य 'द्वौ दैवे प्राक्त्रयः पित्र्ये उदगेकैकमेव वा ॥' यत्तु हेमाद्रौ हारीतः–'दक्षिणाग्र प्राङ्मुखान् भोजयेत् । उदङ्मुखानित्येके' इति तन्मैत्रायणीयविषयम् । 'प्राङ् खान् भोजयेदुदङ्मुखानित्येके' इति तत्परिशिष्टात् विकल्प इति हेमाद्रि माधवीये यमः–'भिक्षुको ब्रह्मचारी वा भोजनार्थमुपस्थितः । उपविष्टेष्वनुप्र कामं तमभिभोजयेत् ॥' कौर्मे–'अतिथिर्यस्य नाश्नाति न तच्छ्राद्धं प्रचक्षते' । नियमो माधवीये–'पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः । उच्छिष्टोच्छिष्टसंस वर्जयन्तः परस्परम् ॥'

तत्रासनानि । पृथ्वीचन्द्रोदये यमः–'आसनं कुतुपं दद्यादितरद्वा पवित्रक हेमाद्रौ चमत्कारखण्डे–'पितॄणां घटितं हैमं राजतं वापि चासनम् । येन ताम्र दत्तमासनं पितृकर्मणि ॥ स वै दिव्यासनारूढो न हि प्रच्यवते दिवः ॥' हेमा नागरखण्डे–'अयः शंकुमयं पीठं प्रदेयं नोपवेशने ॥' कालिकायां संग्रहे–' दुकूलं नैपालमाविकं दारुजं तथा । तार्णं पार्णं बृसीं चैव विष्टरादि च विन्यसेत् अग्निदग्धान्यायसानि भग्नानि च विवर्जयेत् ॥' हेमाद्रौ छागलेयः–'पश्चाद्भागा क्रम्य प्राच्यां पंक्तिर्यथा भवेत् । दक्षिणासंस्थिता ह्येषा पितॄणां श्राद्धकर्मणि पुलस्त्यः–'श्रीपर्णी वारुणी क्षीरी जम्बुकाम्रकदम्बकम् । सप्तमं बाकुलं पीठं पि दत्तमक्षयम् ॥' संग्रहे–'शमी च काश्मरी शेलुः कदम्बो वारुणस्तथा । पञ्चासन शस्तानि श्राद्धे देवार्चने तथा ॥' कारिका–'द्वौ दैवे प्राङ्मुखौ पित्र्ये त्रीन्विप्रा

कटिदेशे तु तिलैः सह कुशत्रयम् ॥' यत्तु **कातीयम्**-'नीवी कार्या द
कुक्षौ कुशैः सह ।' इति तद्वृद्धिश्राद्धे । 'पितॄणां दक्षिणे पार्श्वे विपरीता तु दै
**स्मृत्यन्तरात्** । वामे दक्षिणे वेत्याचाराद्व्यवस्थेति **मदनपारिजाते** ॥

**आचार्यः**-'प्राणायामत्रयं कृत्वा गायत्रीस्मरणं तथा । श्राद्धं कर्तास्मीति
वाच्यं कुरुष्व च ॥' **ब्राह्मे**-'ततस्तिलान्गृहे तस्मिन्विकिरेच्चाप्रदक्षिणम्
परया युक्तो जपेदपहता इति ॥' **स्मृत्यर्थसारे**-'अपहता इति तिलान्विकी
मित्यृचा प्रोक्षेत् ॥' **पराशरः**-'तद्विष्णोरिति मन्त्रेण गायत्र्या च
प्रोक्षयेदन्नजातं तु शूद्रदृष्ट्यादिशुद्धये ॥' **हेमाद्रौ ब्रह्माण्डे**-'श्राद्ध
ध्यात्वा ध्यात्वा देवं गदाधरम् । वस्वादींश्च पितॄन् ध्यात्वा ततः श्रा
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च । नमः स्वाहायै स्वधायै नित्यमे
आदिमध्यावसानेषु त्रिरावृत्तं जपेद्बुधः । पितरः क्षिप्रमायांति राक्षसाः प्रद्र
तत्रैव **स्कान्दे**-'तिला रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान् । पङ्क्तिं वै श्रो
तिथिः सर्वरक्षकः ॥' **वसिष्ठः**-'शुद्धवतीभिः कूष्माण्डीभिः पावमानीभि
प्रोक्षयेत् ॥' इति ।

अथ **देवार्चा** । तत्र प्रत्युपचारमाद्यन्तयोरपो दद्यादित्युक्तं **वृत्तौ स्
च हेमाद्रौ ब्राह्मे**-'आसनेष्वासनं दद्याद्वामे वा दक्षिणेपि वा । पितृकर्मणि
दद्यात्तु दक्षिणे ॥' **प्रचेताः**-'आसनेष्वासनं दद्यान्नतु पाणौ कदाचन ।
मन्त्रेण गृह्णीयुस्ते तु तान्कुशान् ॥' धर्मोसीति मंत्रोऽन्यत्र द्रष्टव्यः ।
दर्भानादाय हस्ताभ्यां गृहीत्वा दक्षिणे करे । दैवे क्षणः क्रियतां तु निरंगुष्ठं
ओंतथेति द्विजा ब्रूयुस्ते प्राप्नोतु भवान् इति ॥ कर्त्ता ब्रूयात्ततो विप्रः प्रा
वदेत् ॥' **पृथ्वीचन्द्रोदये बृहन्नारदीये**-'यवैर्दर्भैश्च विश्वेषां देवानामि
दत्त्वेति भूयो दद्याद्वै दैवे क्षण इति क्षणम् ॥' 'तच्च षष्ठ्या चतुर्थ्या वा
स एव । 'ततोर्घ्यं कल्पयेत्' इति मन्वादयः । **शौनकजयन्ताभ्या
देवार्चनस्योक्तेः । 'आश्वलायनानां देवेऽर्घ्यदानं न' इति बोपदेवस्तन्न ।
**योगपारिजातविरोधात्** । वृद्धिश्राद्धे तु देवेप्यर्घ्यं दद्यात् । 'देवेभ्यो
दिहार्घ्यं श्रुतिचोदनात् ।' इति **शौनकोक्तेः** ।

**अथार्घ्यपात्रम्** । **पृथ्वीचन्द्रोदये मात्स्यपाद्मयोः**-'पात्रं वनस्प
पर्णमयं पुनः । जलजं वापि कुर्वीत तथा सागरसम्भवम्

तथा । यज्ञियं च समं वापि अर्घ्यार्थं पूरयेद्बुधः ॥' अत्र विप्रैकत्वद्वित्वचतुष्ट्वा
र्घ्यपात्रे द्वे एव । मानवसूत्रे तु–'द्वे वैश्वदेविके त्रीणि पित्र्ये एकैकमुभयत्र च'
क्तम् । तदेकविप्रपरं पात्रालाभपरं चेति हेमाद्रिः । मदनरत्ने तु दैवे एकपात्रमु
पृथ्वीचन्द्रोदयोपि 'पैत्रिकपात्राणि द्वे द्वे वैश्वदेविके ।' इति बृहत्पाराशरो
एवेत्याह । बह्वृचानां तु दैवे विप्रद्वित्वेप्येकमर्घ्यपात्रमर्धशो दद्यादित्युक्तं परा
प्रयोगपारिजाते च । कलिकायां हारीतः–'दत्तमक्षय्यतां याति खाड्ग
तु यत्कृतम् ॥' वृद्धमनुः–मृन्मयं दारुजं पात्रमयःपात्रं च यद्भवेत् । राजतं
कार्ये शिलापात्रं च वर्जयेत् ॥' पुराणसमुच्चये–'मृत्स्नाभवं तथा कांस्यमारक्त
संभवम् । त्रपुसीसलोहभवं सदा पात्रं विवर्जयेत ॥' तत्रैव–'अष्टाङ्गुलं भवेत्पा
तॄणां राजतं शुभम् । दशांगुलं तु देवानां सौवर्णं शक्तितः कृतम् ॥ स्थापयेदर्घ्यप
न्युब्जे तत्र कुशोपरि । द्वेद्वे पवित्रे विधिवत्पात्रयोश्चोपरि क्षिपेत् ॥ यज्ञपा
'पवित्रेस्थेति मन्त्रेण पवित्रे छेदयेत्तु ते । ओषधीमन्तरे कृत्वा अंगुष्ठांगुलिपर्वण
स्फ्येन काष्ठेन लोहेन न मृन्मयनखादिभिः ॥' वसिष्ठः–'तूष्णीं प्रोक्ष्याम्भस
कुर्यादूर्ध्वं बिले ततः । पूरयेत्पात्रयुग्मं तु कृत्वोपरि पवित्रके ॥'

वृद्धपराशरः–'पात्रद्वयमथार्घ्यार्थं तैजसं चैकवस्तुनः । प्राङ्मुखोमरतीर्थेन
देव्युदकं क्षिपेत् ॥ यवोसीति यवांस्तत्र तूष्णीं पुष्पाणि चन्दनम् ॥' मानव
सुमनसः प्रक्षिप्योत्पूययवान्प्रक्षिप्य' इति । यवोसीति मन्त्रः पाद्मे–'यवोसि धा
वा वारुणो मधुमिश्रितः । निर्णोदः सर्वपापानां पवित्रमृषिभिः स्मृतः ॥' 'राजो वा
मधुसंयुतः' इति परिशिष्टपाठः । गोभिलेन तु–'यवोसि सोमदैवत्यः' इ
मन्त्रोऽत्र स्वाहायुक्तः उक्तः । हेमाद्रौ यमः–'यवहस्तस्ततो देवान् विज्ञ
हनं प्रति । आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा' वृद्धपराशरः–'ततः
न्यस्य विप्रदक्षिणजानुनि । देवानावाहयिष्येहमिति वाचमुदीरयेत् । आवाहयेत्य
विश्वेदेवास आगत । विश्वेदेवाः शृणुतेममिति मन्त्रद्वयं पठेत् ॥' श्राद्धविशेषे
वानामज्ञाने हेमाद्रौ बृहस्पतिः–'उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः ।
च्चारणीयस्तैर्मन्त्रः श्रद्धासमन्वितैः ॥ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः
विहिताः श्राद्धे सावधाना भवन्तु ते ॥' इदं चावाहनमर्घ्यपात्रासादनात् प्राक् हेमा
क्तम् । तत्र कातीयैः प्राकार्यं तथैव तत्सूत्रात् । अन्यैस्तदुत्तरम् । पृथ्वीचन्द्रोदये
'सयवं पुष्पमादाय चरणादिशिरोन्तकम् । अर्चेतेत्यर्चनं कुर्यादन्तरे चोदकं तथा ॥'

स्वाहार्घ्या इति विन्यसेत् ॥' **गार्ग्यः**–'दत्त्वा हस्ते पवित्रं च कृत्वा पूजां च पादतः या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत् ॥' **संग्रहे**–'विश्वेदेवा इदं वोऽर्घ्यमिति दा समादिशेत् ।' तदन्ते स्वाहा नम इति वाच्यम् । 'या दिव्या इति मन्त्रेण स्वाहाका नमोन्तकम् ।' इति **हेमाद्रौ नागरखण्डात्** । **आथर्वणसूत्रन्तु**–'पाद्यमर्घ्यमाच मनीयमिति द्विजकरे निनयेत् ।' इत्यस्यैव त्रयमुक्तम् । **गभस्तिः**–'अर्घ्यं च पिण्ड दानं च स्वस्त्यक्षय्ये तथैव च । गन्धपुष्पादिकं सर्वं हस्तेनैव तु दापयेत् ॥' प्रतिवि यादिव्येत्यावृत्तिः । बह्वृचानां त्वनेन दत्तार्घ्यानुमन्त्रणम् । ततः पात्रं दक्षिणे देवेभ्य स्थानमसीति न्युब्जमुत्तानं वा कार्यमिति **गारुडे** उक्तम् । एतदापस्तम्बान नियतमन्येषां न ॥

**हेमाद्रौ विष्णुधर्मे**–'गन्धैः पुष्पैश्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः । अर्चयेद्ब्राह्मणा शक्त्या श्रद्दधानः समाहितः ॥' **पृथ्वीचन्द्रोदये मार्कण्डेयः**–'चन्दनागरुकर्पूरकुंकु मानि प्रदापयेत्' **विष्णुः**–'चन्दनकुंकुमकर्पूरागरुपद्मकान्यनुलेपनाय ।' इति । **व्यास**–'अपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।' **कलिकायां स्मृतिः**–'गन्धद्वारेति वै गन्ध मायने ते च पुष्पकम् । धूरसीत्यमुना धूपमुद्दीप्यस्वेति दीपकम् ॥ युवं वस्त्राणि मन्त्रे वस्त्रं दद्यात्प्रयत्नतः । आसने स्वासनं ब्रूयादर्घ्यैस्त्वर्घ्यं द्विजोत्तमः ॥ सुगन्धिश्च सुपु ष्पाणि सुमाल्यानि सुधूपकः । सुज्योतिश्चैव दीपे तु स्वाच्छादनमिति क्रमः ॥ विप्राणां गन्धेन वर्तुलं त्रिपुण्ड्रं वा न कार्यम् । **हेमाद्रौ देवलः**–'ललाटे पुण्ड्र दृष्ट्वा स्कन्धे मालां तथैव च । निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥ पुण्ड्रकंवर्तुलमित्यपरार्के **मदनरत्ने** च–'पुण्ड्रं त्रिपुण्ड्रं वर्तुलमर्धचन्द्रं च' ॥ 'ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम् ॥ ऊर्ध्वं च तिलकं कुर्याद्दैवे पित्र्ये च कर्मणि । निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम् ॥' इति **वृद्धपराशरोक्ते**स्तिर्यग्लेपो भवत्येव । 'वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा । तिर्यगप्यूर्ध्वपुण्ड्रं व धारयेत्तु प्रयत्नतः ॥' इति **व्यासोक्तेरिति पृथ्वीचन्द्रः** । यत्तु **बृहन्नारदीये**–'ऊर्ध्वपुण्ड्रं च तुलसीं श्राद्धे नेच्छन्ति केचन' इति तत्कर्तृपरम् । **हेमाद्रौ ब्राह्मे**–'पूतिकं मृगनाभिं च रोचनं रक्तचन्दनम् । कालेयकं तूग्रगन्धं तुरुष्कं चापि वर्जयेत् ॥' कस्तूर्या विकल्प इति **हेमाद्रिः** । **वृद्धशातातपः**–'पवित्रं तु करे कृत्वा य समालभते द्विजान् । राक्षसानां भवेच्छ्राद्धं निराशैः पितृभिर्गतैः ॥' पुष्पं तु **ब्राह्मे**–जातीचम्पकलोध्राश्च मल्लिका बाणबर्बरी । चूताशोकाटरूषं च तुलसीशतपत्रकम् । कुब्जकं तगरं चैव भृङ्गमारण्यकेतकी । [illegible]

द्भवानि सर्वाणि कुसुमानि च चम्पकम् ॥' तत्रैव वृद्धमनुः—'न नियुक्तः शिखाव
माल्यं शिरसि धारयेत् ।'

श्राद्धे वर्ज्यपुष्पाणि ।

**वर्ज्यानि पृथ्वीचन्द्रोदये भविष्ये**—'केतकीं तुलसीपत्रं बिल्वपत्रं च वर्जयेत
द्रोणं च करवीरं च धत्तूरं किंशुकं तथा ॥' **माधवीये स्मृत्यर्थस**
च तुलसी निषिद्धा । तुलसीनिषेधो निर्मूल इति **हेमाद्रिः** । सम्
त्वेऽपि पिण्डपरः । 'तुलसीगन्धमाघ्राय पितरस्तुष्टमानसाः । प्रयान्ति गरुडारूढास्तत
चक्रपाणिनः॥' इति **प्रयोगपारिजाते पाद्मोक्तेरिति बोपदेवः** । **वृद्धपराशर**
'न जातीकुसुमैर्विद्वान्बिल्वपत्रैश्च नार्चयेत् । जपादिकुसुमं झिण्टी रूषिकासकुरण्टिका
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥' **हेमाद्रौ शङ्खः**—'उग्रगन्धीन्यगन्धी
चैत्यवृक्षोद्भवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च॥जलोद्भवानि देयानि रक्त
न्यपि विशेषतः॥' **अङ्गिराः**—'न जातीकुसुमानि दद्यान्न कदलीपत्रम्' ।इति जात्यां विक
इति **हेमाद्रिः**—निषेधः पिण्डविषयः । 'कुन्दं शंभौ च नो दद्यान्नोन्मत्तं गरुडध्वजे
पिण्डे जातीं च नो दद्याद्देवीमर्केण नार्चयेत् ॥' इति **वृद्धयाज्ञवल्क्योक्तेरिति बोपदे**
**स्मृतिसारे**—'आगस्त्यं भृङ्गराजं च तुलसी शतपत्रिका । चम्पकं तिलपुष्पं च ष
पितृवल्लभाः ॥ केतकीं करवीरं च बकुलं कुन्दकं तथा । पाटलां चैव जातीं च श्र
यत्नेन वर्जयेत् ॥ केचित्पिण्डे तुलसीमाहुः। 'पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीद
प्रीणिताः पितरस्तैस्तु यावच्चन्द्रार्कमेदिनी ॥ ' इति **मार्कण्डेयोक्तेः** ।

**धूपस्तत्रैव विष्णुधर्मे**—'धूपस्तु गुग्गुलुर्देयस्तथा चन्दनसारजः । अगरुश्च सक
स्तुरुष्कस्त्वक्तथैव च ॥' **विष्णुः**—घृतमधुयुक्तं गुग्गुलुं श्रीखण्डदेवदारुसरल
दद्यात् ॥ ' इति । तत्रैव **देवलः**—'ये हि प्राण्यंगजा धूपा हस्तवाताहताश्च ये । न
श्राद्धे नियोक्तव्या ये च केचोग्रगन्धयः ॥ घृतं न केवलं दद्याद्घृष्टं वा तृणगुग्गुलुम
**दीपमाह विष्णुः**—'घृतेन दीपो दातव्यस्तिलतैलेन वा **पुनः** । वसामेदोद्भवं दीपं प्र
त्नेन विवर्जयेत् ॥ ' **वस्त्रं ब्राह्मे**—'कौशेयं क्षौमकार्पासं दुकूलमहतं तथा । श्राद्धे
तानि यो दद्यात्कामानाप्नोति चोत्तमान् ॥ ' **हेमाद्रौ ब्रह्मवैवर्ते**—'यज्ञोपवीतं दात
वस्त्राभावे विजानता । पितृभ्यो वस्त्रदानस्य फलं तेनाश्नुतेऽखिलम् ॥ ' **तत्रैव पा**
'निष्क्रयो वा यथाशक्ति वस्त्राभावे प्रदीयते ॥ ' **अन्यान्यपि च देयानि** । त

श्राद्धदेयवस्तुनिर्णयः ।

**कालिकापुराणे**—'धात्वादिनिर्मिता रम्या दीपिकाः श्राद्धकर्मणि
पितॄनुद्दिश्य यो दद्यात्स भवेद्भाजनं श्रियः ॥ यो धूपपात्रदानं तु प

कञ्चुकं तथोष्णीषं पितृभ्यः प्रतिपादयेत् । ज्वरोद्भवानि दुःखानि स कदाचिन्न पश्य
स्त्रीणां श्राद्धे तु सिन्दूरं दद्युश्चण्डातकानि च । निमन्त्रिताभ्यः स्त्रीभ्यो ये ते
सौभाग्यसंयुताः ॥' **हेमाद्रावादित्यपुराणे** ॥ 'न कृष्णवर्णं दातव्यं नापि काप
संभवम् । पितृभ्यो नापि मलिनं नोपयुक्तं कदाचन ॥ न च्छिद्रितं नापदशं न धौतं व
णापि च' । कार्पासनिषेधोन्यसंभवे । **तत्रैव** 'पितॄन् सत्कृत्य वासोभिर्दद्याद्यज्ञोपव
कम् । यज्ञोपवीतदानेन विना श्राद्धं तु निष्फलम्' ॥ एतद्यतिस्त्रीशूद्रश्राद्धेपि देयं
**हेमाद्रिः**॥

तत्रैव **नृसिंहपुराणे**–कमण्डलुं ताम्रमयं श्राद्धेषु प्रददाति यः । काष्ठेन नि
वापि नारिकेलमथापि वा ॥ दद्यात् कमण्डलुं श्राद्ध स श्रीमानभिजायते । यो मृ
काविरचिताञ्श्राद्धेषु च घटाञ्शुभान् ॥ प्रदद्यात्करकान्वापि सोऽक्षयं विंदते सुख
तत्रैव–'उपानच्छत्रवस्त्राणि भुक्तिपात्रं कमण्डलुम् । शयनासनयानानि दर्पण
नानि च ॥ अन्नं सुसंस्कृतं गन्धांस्ताम्बूलं दीपचामरम् । पितृभ्यो यः प्रयच्छेत्तु वि
लोकं स गच्छति ॥' **सौरपुराणे**–'चामरं तालवृन्तं च श्वेतच्छत्रं च दर्पणम् । द
पितॄणामेतानि भूमिपालो भवेदिह ॥' तत्रैव **नान्दिपुराणे**–'अलंकाराः प्रदातव्या य
शक्ति हिरण्मयाः । केयूरहारकटकमुद्रिकाकुण्डलादयः ॥' **तथा** 'स्त्रीश्राद्धेषु प्र
स्युरलंकारास्तु योषिताम् । मञ्जीरमेखलादामकर्णिकाकंकणादयः ॥ आदर्शव्यजन
त्रशयनासनपादुकाः । मनोज्ञाः पट्टवासाश्च सुगन्धाश्चूर्णमुष्टयः ॥ अंगारधानिकाः
योगपट्टाश्च दृष्टयः ॥ कटिसूत्राणि रौप्याणि मेखलाश्चैव कम्बलाः ॥ कर्पूर
भाण्डानि ताम्बूलायतनं तथा । भोजनाधारयन्त्राणि पतद्ग्राहांस्तथैव च । तथाञ्ज
लाकाश्च केशानां च प्रसाधनम् । एतान् दद्यात्तु यः सम्यक् सोऽश्वमेधफलं लभेत्
**स्कान्दे**–'सौवर्णं राजतं वापि कांस्येनाप्यथ निर्मितम् । दत्त्वा भोजनपात्रं तु स
भवति भूतले ॥' **वामनपुराणे**–'वन्दीकृतास्तु ये केचित्स्वयं वा यदि वा परैः ।
केनाप्युपायेन यस्तान्मोचयते नरः ॥ पितरस्तस्य गच्छन्ति शाश्वतं पदमव्यय
**पराशरः**–'वाचयेत्परिपूर्णत्वं वासो दत्त्वा विधानतः ।'

**नारदीये**–'देवैश्च समनुज्ञातो यजेत्पितृगणं त्वथ' । तत्र पित्र्ये आसनाद्यशेष
नकाण्डे वैश्वदेविकं ज्ञेयम् । विशेषस्तूच्यते । 'तत्रासने द्विगुणभुग्नाःकुश
अत्रावाहनमासनात्पूर्वं वार्घ्यपूरणोत्तरं वाग्नौकरणोत्तरं वेति स्मृतिषु पक्षा उक्त
एषां शाखाभेदेन व्यवस्था । द्वितीयपक्ष एव बहुसंमतः । **तत्रार्घ्यमाहाश्वलाय**

न तत् । तदेव हस्तघटितं दैविकं केवलं तथा ॥' इति च्छन्दोगपरिशिष्ट
अन्यान्यपि पात्राणि पूर्वमुक्तानि । **मनुः**–'अन्नाभावे द्विजाभावे यद्येको ब्रा
भवेत् । पात्राण्यासादयेत्त्रीणि नतु ब्राह्मणसंख्यया ॥' दत्तकादेः कर्तुर्हि पितृत्वाद
वचनात् । त्रीण्येव पात्राणीति **हरिहरः** । **माधवीये बैजवापः**–'अर्घ्ये पि
त्रीण्येव कुर्यात्पात्राणि धर्मवित् । एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि ॥' **हेम**
**वप्येवम्** । अत्रानुमन्त्रणं सकृत् । तिलोसीत्यस्य प्रतिपात्रमावृत्तिः पितृशब्दस्यानूह
वृत्तिकृत् ॥ दर्भश्च त्रिगुणं पवित्रम् । 'तिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पा
एकोद्दिष्टे शलाकैकां निधायोदकमाहरेत् ।' इति **हेमाद्रौ चतुर्विंशतिमत**
तत्रैव **विष्णुः**–'दक्षिणाग्रदर्भेषु दक्षिणापवर्गचमसेषु पवित्रान्तर्हितेष्वप आसिञ्चे
न्नो देवीति मन्त्रेण जलसेचनं बह्वृचभिन्नविषयम् ॥' अत्रास्मिन्पक्षे प्रति
मन्त्रावृत्तिः ॥

**कारिकायाम्**–'गन्धपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ ॥' **ब्राह्मे**–'जलं
दधि घृतं तिलतण्डुलसर्षपान् । कुशाग्रमधुपुष्पाणि दत्त्वाचामेत्ततः स्वयम् ॥'
**कर्ण्यः**–'ततोर्घ्यपात्रसंपत्तिं वाचयित्वा द्विजोत्तमान् । तदग्रे चार्घ्यपात्राणि स्व
इति विन्यसेत् ॥' ततस्तिलहस्तो विप्रसव्यजानौ दक्षिणकरं न्यस्यावाहनं पृच्
अत्र गोत्रसम्बन्धनामानि द्वितीयान्तत्वं च प्रागुक्तम् । **बैजवापगृह्ये**–'तिष्ठन्
नावाहयिष्यामीत्यामन्त्र्य ॥' **कौर्मे**–'अपसव्यं ततः कृत्वा पितॄणां दक्षिणामु
आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः ॥ आवाह्य तदनुज्ञातो जपेदायन्तु नस्
अत्र सव्यस्यापि प्रागुक्तोविकल्पः । अत्राद्यमन्त्रावृत्त्याऽस्मत्पितरममुकशर्माणममु
वसुरूपमावाहयामीत्युक्त्वा मूर्धादिपादान्तं तिलान्विकीर्यायन्तु न इति सर्वान्ते सकृ
इति **निबन्धाः** । अत्रोपवेशनसंवेशनपाद्यार्घ्याचमनीयान्यपि **हेमाद्रिणा**
तान्यथर्ववेदिनां नियतानि नान्येषाम् ॥ तेषां च प्रपितामहादिपित्रन्तं प्राति
सर्वः प्रयोगः ॥

**वाराहे**–'गन्धपुष्पार्चनं कृत्वा दद्याद्धस्ते तिलोदकम् ॥' **गार्ग्यः**–'शिरस्त
तो वापि सम्यगभ्यर्चयेत्ततः ॥' 'ततः स्वधार्घ्या इति पितृपितामहादिविप्राग्रे
निवेदयेत् ।' इति **कारिकायां वृत्तौ च** । **आश्वलायनः**–प्रसव्येनेतरपा
ष्ठान्तरेणोपवीतित्वाद्दक्षिणेन वा सव्योपगृहीतेन पितरिदं ते अर्घ्यं पितामहेदं ते अर्
तामहेदं ते अर्घ्यमित्यप्पूर्वं ताः प्रतिग्राहयिष्यन् सकृत्सकृत्स्वधाअर्घ्या इति प्रसृष्टा

प्रागन्या अपो दद्यात्। यद्यप्यत्र सव्येन दक्षिणेन वार्घ्यं दद्यादित्युक्तं तथापि दक्षिणेनेत भिमतोर्थः । कारिकायां वृत्तौ चैवम् । 'पित्रादेस्त्रिभिः पात्रैर्दद्यात्। पितुः स्थ विप्रत्रयं चेदेकमर्घ्यं विभज्य दद्यात्। त्रयाणां स्वधा अर्घ्या इति सकृन्निवेदनम् । प पैतामहादावपि । अन्यजलदानमर्घ्यमन्त्राश्च प्रतिविप्रमावर्तन्ते । तेषु गन्धादौ च प्रति विप्रं पदार्थानुसमयः काण्डानुसमयो वा । पित्रादित्रयाणामेकविप्रपक्षे त्रिभिः पात्रैरेकस्मै वार्घ्यं दद्यात्।' इति वृत्तिः। कारिकापि–'स्वधाऽर्घ्या इत्यपोर्घ्यास्ता उपवीती निवेदयेत् निवेदनात्प्राक् प्राचीनावीतमेवेत्यर्थः । 'अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना । सव्य हस्तगृहीतेन निनयेत् पितृतीर्थतः॥ दत्त्वा दत्त्वा निनीतास्ता यादिव्याचानुमन्त्रयेत् ॥ यत्तु–'यादिव्या इतिमंत्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्' । इति । यच्च वाराहे–'तिला म्बुना चापसव्यं दद्यादर्घ्यादिकं द्विजः।' इति । यच्च व्यासः–'गोत्रसंबन्धनामानि पितॄणामनुकीर्तयन् । एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनिक्षिपेत् ॥' इति तद्बह्वृचाति रिक्तविषयम् । तत आचामेत्। एवं मातामहेष्वपि ॥

आश्वलायनः—'संस्रवान् समवनीय ताभिरद्भिः पुत्रकामो मुखमनक्ति ।' संस्र वशेषः । 'संस्रवोहि परिशिष्टो भवति' इति शतपथश्रुतेः । केचित्तु हस्तगलि ताम्बु वदन्ति । समवनीयान्त्ये द्वे पात्रे पितृपात्रं आसिच्येति वृत्तिः। 'प्रथमे पात्रे संस्रवान् समवनीय' इति कातीयसूत्राच्च । ब्राह्मे तु प्रतिविम्बावलोकनमुक्तम् स्कान्दे–त्वायुःकामस्य नेत्रासेचनमुक्तम् । विप्रैः प्राङ्मुखस्य कर्तुरभिषेकः कार्य इति केचित् । आश्वलायनः–'नोद्धरेत् प्रथमं पात्रं पितॄणामर्घ्यपातितम् । आवृ तास्तत्र तिष्ठन्ति पितरः शौनकोब्रवीत्' ॥ 'यावद्विप्रविसर्जनम्' इति तुर्यपादे यमीयः पाठः । अत्र वृत्तिः–'पितृपात्रं समवनयनदेशान्न चालयेदाश्राद्धसमाप्तेः । यस्मात्तत्र तृतीयपात्रेणावृताः ।' इति यद्वा 'प्रथमपात्रमेव न्यग्बिलं कुर्यात्' इति । कामाभा- वेपीदमेव शेषप्रतिपादनम् । हेमाद्रौ कौर्मे–'संस्रवांश्च ततः सर्वान् पात्रे कुर्या- त्समाहितः । पितृभ्यः स्थानमसीति न्युब्जं पात्रं निधापयेत् ॥' शूलपाणौ यमस्तु– 'पैतृकं प्रथमं पात्रं तस्मै पैतामहं न्यसेत् । प्रपितामहं ततो न्यस्य नोद्धरेन्न च चालयेत्' ॥ इत्याह । अथ 'संस्रवानानीय तृतीयेनाच्छाद्य न्युब्जीकुर्यात्' इति सर्वै- कवाक्यतयार्थ इति केचित् । अत्रिः–'गन्धादिभिस्तदभ्यर्च्य तृतीयेनापिधापयेत् । पितृभ्यः स्थानमसीति शुचौ देशेर्चितेर्चयेत् ॥' अर्चनं न्युब्जीकृतेपि तुल्यम् ।

१–सव्यपाणेः शिष्टविगर्हितत्वादिति भावः । २–यथा [illegible]

'न्युब्जमुत्तरतो न्यसेत्' इति प्रचेतसोक्तेः । सर्वविप्रोत्तरतो न्यसेदिति हे
कल्पतरुः ॥ विप्रवामे इति हलायुधः । कर्तुर्वामे इति शूलपाणिः ।
विवृत्तं वापि पितृपात्रं तु तद्भवेत्' । इत्युशनसोक्तेर्न्युब्जतैव साधुः । माता
संस्रवानपि पितृपात्र एव गृहीत्वा प्रयाजवत्तन्त्रेण न्युब्जी कुर्यात् इति शूलप
एकोद्दिष्टे तूहेन न्युब्जतेति पितृभक्तौ श्रीदत्तः । यमोपि—'स्पृष्टमुत्ता
नीतमुद्घाटितं तथा । पात्रं दृष्ट्वा व्रजन्त्याशु पितरस्तं शपन्ति च ॥' वैश्वदे
नमिति मदनपारिजातः । बैजवापः—'तस्योपरि कुशान् दत्त्वा प्रदद्याद्देवप
गन्धपुष्पाणि धूपं च दीपं वस्त्रोपवीतके ॥' अत्र गन्धादेर्दैवे पित्र्ये च पद
मयस्य याज्ञवल्क्योक्तकाण्डानुसमयेन विकल्पो ज्ञेयः । बह्वृचानां तु सू
नुक्तेः काण्डानुसमय एव । अत्र प्राचीनावीती नामगोत्रसंबुद्ध्याद्युक्तं प्राक्
दैववत्तदन्ते आचमनं च । हेमाद्रौ कालिकापुराणे—'निर्वर्त्य ब्राह्मणादेशात
मेवं यथाविधि । भाजनानि ततो दद्याद्धस्तशौचं पुनः क्रमात् ॥' आदेशात
दद्यादित्यन्वयः । तेन तत्रापि प्रश्नानुज्ञे ज्ञेये । तत्रैव ब्राह्मे—'मण्डल
कार्याणि नैवारैश्चूर्णकैः शुभैः । गौरमृत्तिकया वापि भस्मना गोमयेन वा ॥'
'भस्मना वारिणा वापि कारयेन्मण्डलं ततः । चतुःकोणं द्विजाग्र्यस्य
क्षत्रियस्य तु ॥ मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥' बह्वृ
शिष्टे तु—'दैवे चतुरस्रं पित्र्ये वृत्तं मण्डलं कृत्वा क्रमेण सयवान् सतिलांश्च
दद्यात् ।' इत्युक्तम् । मार्कण्डेयः—'यातुधानाः पिशाचाश्च क्रूरा ये चैव राक्ष
हरन्ति रसमन्यस्य मण्डलेन विवर्जितम् ॥'

हेमाद्रौ हारीतः—'भूमावेव निदध्यान्नोपरि पात्राणि' इति । तानि च हे
वत्रिराह—'भोजने हैमरौप्याणि दैवे पित्र्ये यथाक्रमम् ॥' हारीतः—'राजतपा
कांस्यपात्राणि भोजने ।' इति तत्रैव वाराहे—'सौवर्णानीह रौप्याणि कांस्यानि
म्भवे । अन्यान्यपि हि कार्याणि दारुजान्यपि जानता ॥ नायसान्यपि कार्याणि पै
नतु क्वचित् । नच सीसमयानीह शस्यन्ते त्रपुजान्यपि ॥' अत्रिः—'पञ्चाश
कांस्यं ह्यधिकं भोजनाय वै । गृहस्थैस्तु सदा कार्यमभावे हेमरौप्ययोः ॥ पात
विना न स्युः पर्णपात्राणि भोजने ॥' पृथ्वीचन्द्रस्तु—'कांस्यपात्रे हविर्दृष्ट्वा ।
पितरो गताः ।' इति ब्राह्मोक्तेः कांस्यपात्रनिषेधमाह । बोपदेवस्तु स्मृतिसं
जहार । 'श्राद्धे पलाशपात्राणि मधुकौदुम्बराणि च । पारिकाकुटजप्लक्षक्रकचानि 

कुर्यात् । तत्र पिशङ्ग रक्षाणो इति मन्त्रद्वयं केचित्पठन्ति । **मात्स्ये**–'अकृत्वा भ
र्यादां यः कुर्यात्पाणिशोधनम् । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते ॥' तत्रैव ब्र
ण्डे–'प्रक्षाल्य हस्तपात्रादि पश्चादद्भिर्विधानवत् । प्रक्षालनजलं दर्भैस्तिलैर्मिश्रं क्षिपे
चौ ॥' मण्डलोपरीति **हेमाद्रिः** ।

अग्नौकरणनिर्णयः ।

**अथाग्नौकरणम् । हेमाद्रौ मार्कण्डेयः**–'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ
हितः । अनाहिताग्निश्चौपसदे अग्न्यभावे द्विजेप्सु वा ॥' **वायव**
'आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः । अग्न्यर्थं लौकिके
जुहुयात् कर्मसिद्धये॥' आहिताग्निः सर्वाधानी॥ अर्धाधानी तु गृह्य एवेति **चन्द्रि
रार्कमिताक्षरामाधवादयः** ॥ तस्यापि दक्षिणाग्नौ लौकिको गृह्य इति **हेम
कल्पतरुश्च** । आद्यपक्ष एव तु युक्तो बहुसम्मतश्च । यद्यपि स्मार्तमग्नौकरणं
दक्षिणाग्नौ न युक्तं तथापि वचनाद्भवतीति **हेमाद्रिचन्द्रिकादयः** । इदं द
एव । आब्दिकादिषु तु सर्वाधानी पाणौ अर्धाधानी गृह्ये कुर्यादिति **हेमाद्रिमा
दयश्च** । 'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्त
हार्यकं बुधः ॥' इति **लौगाक्ष्यादिभिः** क्रमोक्तेर्विहृतदक्षिणाग्निसत्त्वात् । अ
वचने साग्निक आहिताग्निरुक्तो **हेमाद्रिणा** । एतदापस्तम्बादीनामेव । **आ
यनस्या**हिताग्नेः पाणावेवेति वृत्तिः । अर्धाधानिनो गृह्ये एव व्यतिषङ्गेणेति **प्र
परिजाते परिशिष्टे च** । **बोपदेवस्त्वाह** होमशब्दः पिण्डपितृयज्ञपरः । 'पि
जुहुयाद्दक्षिणाग्नौ समाहितः । श्राद्धे त्वौपासनाग्नौ तु निरग्निर्लौकिकेनले । अनग्नि
र्यश्च पार्वणे समुपस्थिते । सन्धायाग्निं ततः कुर्याद्धोममग्निं समुत्सृजेत् ।' इति
**ण्डमण्डनोक्तेः** । श्राद्धे गृह्याग्नावेवेति लौकिकाग्न्यादिविधानं च तैत्तिरीयादिवि
बह्वृचस्य त्वनग्नेरपि पाणिहोम एव । अग्निपाणी विना सूत्रे विधानान्तरानुक्तेः ।
भावे तु विप्रस्य पाणावेवोपपादयेत् ।' इति **मनूक्तेश्च** । **वृत्तावप्येवम्** ।

क्वचित्साग्नेरपि पाणिहोम उक्तो **गृह्यपरिशिष्टे** । 'अन्वष्टक्यं च पूर्वेद्युर्मासि
पार्वणम् । काम्यमभ्युदयेष्टम्यामेकोद्दिष्टमथाष्टमम् । चतुर्ष्वाद्येषु चाग्नीनां व
विधीयते । पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥' इति । एकोद्दिष्टं सपिण
शुद्धे तन्निषेधात् । **बह्वृचभाष्यकारास्तु** सर्वैकोद्दिष्टेषु पाणिहोममाहुः ।
बह्वृचानामेव ॥ अत्रेदं तत्त्वम् । '**स्थालीपाकेन सह** पिण्डार्थमुद्धृत्य' इ
नात्रापूर्वः स्थालीपाकश्चोद्यते । सर्वश्राद्धेषु प्रसङ्गात्तेनानुवादोयम् ।' इति वृ

पाणिहोम एवेति **वृत्तिस्वरसः** । एवं मासिकादावपि । 'षोडशे मासिके श्राद्धे सापि
ण्डीकरणे तथा । पाणावेव तु होतव्यमन्यत्राग्नौ तु हूयते' इति **बोपदेवो**दाहृतवच
नाच्च । **भाष्यकारमते** तु—सत्रे स्थालीपाकेनेतिकरणत्वान्नित्यवच्छ्रवणाच्च पार्वण
साङ्गम् ततः काम्यादिषु तदभावे कार्यस्य पिण्डदानस्याप्यभावः । एतदेवानुसृत्य विक्र
तावपि वार्षिकादौ व्यतिषङ्ग उक्तः **प्रयोगपारिजाते परिशिष्टे** च । तेनैतन्मतेऽर्धाधा
निनोऽग्नावेव । वस्तुवस्तु 'स्थालीपाके सहशाखया प्रस्तरं प्रहरति' इतिवत्सहभावमात्रश्रुते
पत्नीवते त्वष्टुरुपलक्षणमिव नाङ्गत्वम् ॥ तत्त्वे वा नाङ्गानुरोधेन प्रधानभूतपिण्डदानत्याग
युक्तः ॥ तेन व्यतिषङ्गाभावेप्यग्नौ होमो भवति इति **बोपदेवः** । अनाहिताग्नेर्गृह्याग्नि
मतस्तु सर्वमतेऽग्नावेव । वार्षिकादौ वृत्तिमते व्यतिषङ्गो न अन्यमते त्वस्ति । अत्र यथ
चारमनुष्ठेयम् ॥

**आश्वलायनः**—'उद्धृत्य घृताक्तमन्नमनुज्ञापयत्यग्नौ करिष्ये । करवै करवाणीति
प्रत्यनुज्ञा । क्रियतां कुरुष्व कुर्वित्यथाग्नौ जुहोति यथोक्तं पुरस्तात्' इति । व्यतिषङ्गप
इदमिति वृत्तिः । करवै करवाणीत्यत्राग्नावित्यनुषङ्गः पुरस्तात् पिण्डपितृयज्ञे । तच्चैवम
'मेक्षणेनावदायावदानसंपदा जुहुयात्सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्व
नमः इति स्वाहाकारेण वाग्निं पूर्वं यज्ञोपवीती मेक्षणमनुप्रहृत्य' इति । अवदानसं
उपस्तरणाद्यपेक्षयेत्यर्थः । व्यतिषङ्गपक्षे अतिप्रणीतेयं होमोऽन्यथामुख्ये 'अतिप्रणीतेग्ना
ध्मसुपसमाधाय' इति **बह्वृचपरिशिष्टात्** । केचित्तस्य रक्षोनिवर्हणार्थत्वान्मुख्ये
न्ति ॥ तदेतद्विरोधाच्चिन्त्यम् । **प्रयोगपारिजातेप्येवम्** । **शौनकः**—'स्वाहाका
होमे तु भवेद्यज्ञोपवीतवान् । तत्र प्रागग्नये हुत्वा पश्चात्सोमाय हूयते । अग्नौ यज्ञोप
त्यव प्रक्षिपेन्मेक्षणं ततः' । **छन्दोगपरिशिष्टे**—'अग्नौकरणहोमश्च कर्तव्य उपवीतिन
अपसव्येन वा कार्यो दक्षिणाभिमुखेन च ॥' कातीयानां त्वपसव्यमेव । पिण्डपितृ
वद्धुत्वा इति सर्वातिदेशात् । सव्यं तु छन्दोगपरम् । **गोभिलेनैत**दुत्तरमेवापस
क्तेः ॥ 'छन्दोगा जुहुयुः सव्येनापसव्येन याजुषाः ।' इति **वृद्धयाज्ञवल्क्यो**
**अथ पाणिहोमः** । **आश्वलायनः**—'अभ्यनुज्ञायां पाणिष्वेव' इति । पिण्डपितृ
कल्पाभावेनाग्न्यभावे काम्यादिष्वित्यर्थः। तेन बह्वृचानामेकोद्दिष्टे पाणिहोमो भव
निषेधोऽन्यपरः । पाणिष्विति बहुवचनात्सर्वविप्रपाणिषु होम इति **वृत्तिः** ।
मातामहेपि । **शौनकोपि**—'सर्वेषामुपविष्टानां विप्राणामथ पाणिषु । विभज्य
यात्सर्वं सोमायेत्यादिमन्त्रतः ॥ यत्तु **हेमाद्रौ कात्यायनः**—'पित्र्ये यः पङ्क्ति

पर्यादौ। यत्तु चन्द्रोदये यमः-'देवविप्रकरेऽनाग्निः कृत्वाग्नौकरणं द्विजः।' इति तदभा
परम्। 'अपत्नीको यदा विप्रः श्राद्धं कुर्वीत पार्वणम्। पित्र्यविप्रैरनुज्ञातो विश्वेदेवे
हूयते॥' इति तत्रैव कात्यायनोक्तेः। हूयते इति च्छान्दसो व्यत्ययः॥ हेमा
द्रौ वायवीये-'विधुरो दैविके कुर्याच्छेषं पित्र्ये निवेदयेत्।' दैवविप्रानेकत्वे तत्रैव
'विश्वेदेवे यदैकस्मिन् भवेयुर्बह्वादयो द्विजाः। तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तदा।
सोप्याद्यः 'प्रथमं वा नियम्येत' इति न्यायात्। तेन मृतभार्यस्य देवे होमः। अनुपन
नब्रह्मचार्यादेस्तु पित्र्ये। 'अग्न्याभावःस्मृतस्तावद्यावद्भार्यां न विन्दति।' इति हेमा
जातूकर्ण्योक्तेः। सभार्यनष्टाग्नेरपि पित्र्यविप्रकरे इति पृथ्वीचन्द्रः। उपवीतित्वे
दैवे होमः प्राचीनावीतेन पित्र्ये। यद्वा सर्वत्र दैवपित्र्यकरयोर्विकल्पः इति हेमा
मदनरत्ने पारिजाते च। यदा तु पितृमातामहयोर्दैवपित्र्यविप्रभेदः, तदा भे
पाणिहोम इत्यपरार्कचन्द्रिकादयः। यदा तु दैवं तन्त्रं तदा तन्त्रेण सकृदेव पा
होम इति केचित्। हेमाद्रिस्तु-'मातामहस्य भेदेपि कुर्यात्तन्त्रेण साग्निकः।' इ
कातीयस्मृतेर्भेदमाह। एवं पित्र्येपि। माधवीयेप्येवम्। एवं साग्नेरपि वि
श्रादौ पाणिहोमो ज्ञेयः। यत्तु कर्केणाग्निं विना श्राद्धमेव नास्तीत्युक्तम् तत्सपिण्डीक
णवार्षिकाद्यकरणापत्तेर्यत्किंचिदेव। यत्तु बृहन्नारदीये-'अनग्निर्दूरभार्यश्च पार्व
समुपस्थिते। भ्रातृभिः कारयेच्छ्राद्धं साग्निकैर्विधिवद्द्विजाः। क्षयाहदिवसे प्र
स्वस्याग्निर्दूरगो यदि। तथैवं भ्रातरः स्युश्चेल्लौकिकाग्नाविति स्थितिः। औपासना
दूरस्थे समीपे भ्रातरि स्थिते'। यद्यग्नौ जहुयाद्वापि पाणौ वा स हि पातकी
औपासनाग्नौ दूरस्थे केचिदिच्छन्ति सत्तमाः। पाणावेव तु होतव्यमिति नैतत्समं
सम्'॥ इति तद्बृद्धानादरादुपेक्ष्यम्। हेमाद्रौ यमः-'अग्नौकरणवत्तत्र होमो वि
करे भवेत्। पर्युक्ष्य दर्भानास्तीर्य यतो ह्यग्निसमो द्विजः॥' मेक्षणेन करेण वा हो
मेक्षणप्रहरणं नेति वृत्तिः। स्मृतिरत्नावल्याम्-'नानुज्ञा पाणिहोमे स्या
स्नः पर्यूहनोक्षणे। नाग्नेतमद्यादिति च न स्यातामिध्ममेक्षणे॥' कर्काचार्योप्ये
माह। माधवीये चन्द्रिकायां चानुज्ञादि सर्वं भवतीत्युक्तम्॥

पाणिहोमे प्रश्नाद्याहापरार्के शौनकः-'अनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवा
करणम्।' इति पूर्ववत् 'तथास्तु' इति आश्वलायनः-'यदि पाणिष्वाचान्तेष्वन
दन्नमनुदिशत्यन्नमन्ने सृष्टं दत्तमध्रुवम्' इति। पाणौ हुतं पात्रे निधाय विप्रैराच
भोजनार्थमन्ने परिविष्टे हुतशेषं पात्रेषु दद्यादित्यर्थः। सृष्टं प्रभूतम्। नैमित्ति

एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते' ॥ इति च बह्वृचपरिशिष्टात्
हेमाद्रावप्याचमने हेत्वर्थवाद उक्तः । 'पाण्यास्यो हि द्विजः स्मृतः' इति भा
त्वाचान्तेषु भक्षितेषु चमु भक्षणे इति भक्षणोत्तरं च नाचमनमग्निसाम्यात् । प्र
निषेधस्तु सपिण्डीकरणे ज्ञेयः । ददाति चोदितत्वात् । तत्त्वत्र जुहोति चोदितत्व
दित्युक्तम् । न त्वेतद्बहुसंमतम् । यत्तु बौधायनेन–'तस्मिंस्तु प्राशिते दद्या
दन्नं प्रकृतं भवेत् ।' इति भक्षणमुक्तं तत्तच्छाखीयानामेवेति हेमाद्रिः । त
यमः–'पित्र्यं पाणिहुताच्छेषं पितृपात्रेषु निक्षिपेत् । अग्नौकरणशेषं तु न दद्य
द्वैश्वदेविके ॥' एतदग्निहोमेपि समम् । तथा कर्कस्तु सूत्रे हुतशेषं दत्त्वेत्यविशेषात
र्वविप्रेषु दद्यादित्याह । तत्रैव वृद्धवसिष्ठः–'पित्र्यविप्रकरे हुत्वा शेषं पात्रेषु नि
पेत् । पिण्डेभ्यः क्षेपयेत्किंचिन्न दद्याद्वैश्वदेविके' ॥

अथापस्तम्बानां सूत्रे–'उद्ध्रियतामग्नौ च क्रियतामित्यामन्त्रयते । काममुद्ध्रि
यतां काममग्नौ च क्रियतामित्यतिसृष्ट उद्धरेज्जुहुयाच्च ॥' नष्टाग्निविधुरादेर्विशेषो बृ
न्नारदीये–नष्टाग्निर्दूरभार्यश्च पार्वणे समुपस्थिते । संधायाग्निं ततो होमं कृत्वा
विसृजेत्पुनः ॥' अयाश्चेति तत्कालेग्निं संधाय हुत्वा त्यजेत् इत्यर्थः । एतदापस
म्बानामेव । पाणिहोमस्तु छन्दोगादीनाम् । विश्वप्रकाशेपि–'साग्निरौपा
सनेनाग्निरग्नौ कुर्वीत लौकिके । पाणौ होमं प्रशंसन्ति नत्वापस्तम्बशाखिनाम्
स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः । अग्नौकरणहोमं तु कुर्युस्ते लौकि
नले ॥ अयाश्चाग्ने मनो ज्योतिरुद्बुध्य व्याहृतीर्हुनेत् ॥' ततोनुज्ञातोग्नींधनाद्याज
भागान्ते यन्मे मातेत्याद्यैर्जुहुयात् । तत्र सप्तान्नाहुतयः षडाज्यस्येति त्रयोदश
व्यत्ययो वा । यथा–'यन्मे माता प्रलुलोभ तन्मे रेतः पिता वृङ्क्तां यास्तिष्ठन्ती
द्वाभ्याममुष्मै स्वाहेति पितुर्नाम्ना द्वौ होमौ । यन्मे पितामही प्रलुलोभ तन्मे रेतः पिताम
वृङ्क्तामन्तर्दधे ऋतुभिरिति इति तन्नाम्ना पितामहाय द्वौ । यन्मे प्रपितामही प्रलुलोभ त
रेतः प्रपितामहो वृङ्क्तामन्तर्दधे ऋतुभिरिति तन्नाम्ना प्रपितामहाय द्वौ'॥ मातामहेषु तूह
'यन्मे मातामही प्रलुलोभ तन्मे रेतो मातामहो वृङ्क्ताम् । अन्यं मातामहाद्वृद्धमित्
द्वौ । यन्मे मातुः पितामही प्रलुलोभ तन्मे रेतो मातुः पितामहो वृङ्क्ताम् । अन्यं मा
पितामहाद्वृद्धम् । यन्मे मातुः प्रपितामही प्रलुलोभ तन्मे रेतो मातुःप्रपितामहो वृङ्क्ता
अन्यं मातुःप्रपितामहाद्वृद्धं सर्वत्राप्यमुष्या इत्यत्र ङेन्तं तन्नाम योज्यम्। तद् गृह्य
ग्रहे–'योज्यः पित्रादिशब्दानां स्थानेमातामहादिकः । अन्नहोमे तथा स्पर्शे जलपिण्

दिदानके । यन्मे मातामहीत्यादि तत्रोदाहरणं भवेत् ॥' ततो येकेचेत्येकान्नाहुतिः । त
स्वाहा पित्र्ये इत्याद्यैराज्यं हुत्वा स्विष्टकृतं हुत्वा सर्वभक्ष्यं किंचिदादायोदगुष्णं भस
पोह्य तत्र तूष्णीं स्वाहाकारेण जुहोति । परिषेचनान्तं स्थालीपाकवत् ॥

अयमग्नौ करणहोमो मासिकश्राद्ध एव । 'तच्च स्मार्ताग्न्यभावे न कार्यम्'
केचित् । कार्यमेवेति बहवः । अतएव सर्वाधानिनो होमवर्ज्यं मासिकश्राद्ध
सुदर्शनभाष्ये । महालये तद्वदित्येके । प्रकरणान्तरत्वात् । कर्मान्तरत्वेन स्म
पार्वणवत्कार्य इति त्वस्मद्गुरवः । आब्दिकादिषु तु स्मार्तपार्वणविधिरेव ।
मातृवार्षिकादिषु । मासि श्राद्धविकृतावष्टकायां मातृश्राद्धे वैकृतहोमेन प्राकृतहोमबाध
'अन्वष्टकासु मातृश्राद्धं न' इति भाष्ये । तत्रापि श्राद्धान्तरवत् क्रिय
यन्मे मातेत्यादौ गुणत्वेपि मातृप्राधान्यं विवक्षितम् । 'मासि श्राद्धेन कल्पो व्याख्य
इति सूत्रात् । आग्नेय्येव मनोताकार्यम्' इति वचनादग्निशब्दस्यैव वैकृतदेवताभि
धित्वम् । तेनामुष्या इत्यत्र 'अमुकशर्मभ्यां पितृभ्याम्' इत्याद्यूहः कार्यः । 'तच्च म
श्राद्धं जीवत्पित्रादीनां व्युत्क्रममृतपित्रादीनां च कार्यम्' इत्युक्तं सुदर्शनभाष्ये
तत्प्रकारस्तु वक्ष्यते । मातापित्रोर्द्वित्वादौ तु नोहः । 'तस्मादृचं नोहेत्' इति
धात् । प्रकृतावूहाभावाच्च पत्नीं सन्नह्येतिवत् । उपदेशिमते तूहो । यथा--'
मातरौ प्रलुलोभतुश्चरत्यावनुव्रते' इत्याद्यस्मत्पितृकृतमासिकश्राद्धनिर्णये ज्ञे
इति दिक् । अन्यत् प्राग्वत् ॥

**अथ परिवेषणम्** ॥ तच्चोपवीत्येवाज्येन देवपूर्वम्--'आमासुपक्वन्' इति पात्रा
पस्तीर्य कुर्यात् इति **हेमाद्रिः** । **भारते दानधर्मेपि**--'आज्य
विना नैव यत्किंचित् परिविष्यते । दुराचारैश्च यद्भुक्तं तं भागं र

परिवेषणम् ।

विदुः ॥' तत्रैव **शौनकः**--'विधिना देवपूर्वं तु परिवेषणमाचरेत् ॥' तत्रैव **ध**
'फलस्यानन्तता प्रोक्ता स्वयं च परिवेषणे ॥' तत्रैव **वायुभविष्ययोः**--'भा
श्राद्धकाले तु प्रशस्तं परिवेषणम् ॥' **ब्रह्माण्डे**--'नापवित्रेण नैकेन हस्तेन न
कुशम् । नायसेनायसेनैव श्राद्धे तु परिवेषयेत् ॥' **वसिष्ठः**--'आयसेन तु प
यदन्नं संप्रदीयते । भोक्ता विष्ठासमं भुंक्ते दाता च नरकं व्रजेत् ॥' **पैठीनसिः**--'
कायसरीतीपात्राण्ययज्ञियानि ।' तत्रैव **हारीतः**--'सौवर्णराजताभ्यां च खड्गेनौदु
रेण वा । दत्तमक्षय्यतां याति फल्गुपात्रेण वा पुनः ॥' **कार्ष्णाजिनिः**--'
देयं घृतं चान्नं समस्तव्यञ्जनानि च । उदकं चैव पक्वान्नं नो दर्व्या तु कदाचन

गताः ॥' **चन्द्रिकायां वृद्धशातातपः**—'हस्तदत्तास्तु ये स्नेहा लवणव्यञ्जना पितॄणां नो पतिष्ठन्ति भोक्ता भुञ्जीत किल्बिषम् ॥' घृतपात्रे विशेषो **ग्रन्थान्** ओदने परमान्ने च पात्रमासाद्य मुग्धधीः । घृतेन पूरयेत्पात्रं तद्घृतं रुधिरं भवे घृतादिपात्राणि भूमौ स्थापयेन्न भोजनपात्रे इति **मदनरत्ने** ॥ **संग्रहे**—'हस्त नाश्नीयाल्लवणव्यञ्जनादिकम् । अपक्वं तैलपक्वं च हस्तेनैव प्रदीयते ॥'

पात्रालम्भनमुक्तं **चतुर्विंशतिमते**—'उत्तानं दक्षिणं सव्यं नीचपात्राण्युपस्पृशे **याज्ञवल्क्यः**—'दत्त्वान्नं पृथिवीपात्रम् इति पात्राभिमन्त्रणम् । कृत्वेदं विष्णु द्विजांगुष्ठं निवेशयेत् ॥' **बौधायनः**—'विप्रांगुष्ठेनानखेनानुदिशति ।' 'पृथिवी ते द्यौरपिधानं ब्राह्मणस्य मुखेऽमृतेऽमृतं जुहोमि । ब्राह्मणानां त्वा विद्यावतां प्राण योर्जुहोम्यक्षितमसि मा मे पितॄणां क्षेष्ठा अत्रामुष्मिँल्लोके' इति । अद्य जुहोम्यग्रे शब्दः **कातीयसूत्रे** उक्तः । पैत्रे स्वधाशब्दः । अंगुष्ठे विशेषमाह **हेमाद्रौ धौ** 'परिवृत्य नवांगुष्ठं द्विजः स्थाने निवेशयेत् ॥' **तथा** 'उत्तानेन तु हस्तेन द्विज निवेशनम् । यः करोति द्विजो मोहात्तद्वै रक्षांसि भुञ्जते ॥' तत्रैव **यमः**—' हव्यं च कव्यं च ब्रूयाद्रक्षस्व च क्रमात् ॥' दैवे पित्र्ये चेत्यर्थः । **तत्रैवा** 'सम्बन्धनामगोत्राणि इदमन्नं ततः स्वधा । पितृक्रमादुदीर्येति स्वसत्तां तयेत् । हस्तेनाभुक्तमन्नाद्यमिदमन्नमुदीरयेत् ॥' अत्र 'अन्नदाने चतुर्थीं इत्यादि विशेषाः पूर्वमुक्ताः । अत्र पूर्वोक्तमन्त्रान्ते पुरूरवार्द्रवसंज्ञका विश्वेदेवा इदमन्नं सपरिकरं हव्यम् । अयं ब्राह्मणस्त्वाहवनीयार्थे दत्तं दास्यमानं चातृप्तेः । भूः गदाधरो भोक्ता इदमन्नं ब्रह्म सौवर्णपात्रस्थमन्नमक्षय्यवटच्छायास्थम् । अमु विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेः स्वाहा नमो न इति **बह्वृच परिशिष्टहेमाद्र्याद्यनुमतः प्रयोगः** । एवं पित्र्ये अमुकगोत्र रूपादि तत्तन्नाम ज्ञेयम् । ततो 'ये देवास' इति दैवे । 'येचेह पितरः' इति केचिज्जपन्ति ॥

ततोऽच्छिद्रं वाचयेत् । तत्रैव **प्रचेताः**—'आपोशनकरे विप्रे संकल्प्याच्छिद्रभाष निराशाः पितरो यान्ति देवैः सह न संशयः ॥' **पारस्करः**—'संकल्प्य पितृदे सावित्रीमधुमज्जपः । निवेद्यापोशनं श्राद्धे जुषं मैषोथ भोजनम् ॥' निवेद्येति ब्रह्म कृत्वेत्यर्थः । अत एव **बृहन्नारदीयेऽन्नत्यागमुक्त्वोक्तम्** । 'दत्तं हविश्च तत्कर्म वि वै समर्पयेत् ।' इति यत्तु **कृत्यरत्ने कार्ष्णाजिनिः**—'अपसव्येन कर्तव्यं पितृ मशेषतः । अन्नदानादृते सर्वमेवं मातामहेष्वपि ॥' तच्च 'ब्रह्मार्पणं ब्रह्महविः०,

१—'तस्मादन्तरितं कुर्यात्पर्णेनाथ तृणेन वा ।' इत्युत्तरत्र शेषः ।

ता हरिभोक्ता०, 'चतुर्भिश्च०' इति केचित्पठन्ति । **धर्मप्रदीपे**—'ततोन्नं पितृदेवेभ्यः
कल्प्य च यथाविधि । दत्तं यद्दास्यमानं च आतृप्तेर्न ममेति च ॥' **तथा** 'श्राद्धी-
नस्य संकल्पो भूमावेव प्रदीयते । हस्तेषु दीयमानं तु पितॄणां नोपतिष्ठते ॥ वैश्वदेवस्य
 तु पितृपात्रस्य दक्षिणे । संकल्पोदकदाने स्यान्नित्यश्राद्धे यथारुचि ॥' **प्रचेताः**-
पोशनं प्रदायाथ सावित्रीं त्रिर्जपेदथ । मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा ॥'
**ताक्षरायां पारस्करः**—'संकल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः । श्राद्धं निवेद्या-
ानं जुषध्वैषोथ भोजनम् ॥ गायत्रीं त्रिःसकृद्वापि जपेद्व्याहृतिपूर्विकाम् । मधुवाता
 तृचं मध्वित्येतत् त्रिकं तथा ॥' **याज्ञवल्क्यः**—'सव्याहृतिं च गायत्रीं मधुवाता
त्र्यृचम् । जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेपि वाग्यताः ॥' यथासुखं जुषध्वमिति
त्यम् । **अत्रिः**—'असंकल्पितमन्नाद्यं पाणिभ्यां यद्युपस्पृशेत् । अभोज्यं तद्भवेदन्नं
ृणां नोपतिष्ठते ॥ अन्नं दत्तं न गृह्णीयाद्यावत्तोयं न संपिबेत् ॥' आपोशने विशेष-
 **स्मृतिसमुच्चये**—'आपोशनं वामभागे सुरापानसमं भवेत् । दक्षभागे तु यः
ात्सोमपानसमं भवेत् ॥' तथा 'पुनरापूर्यापोशनं सुरापानसमं भवेत् ॥' **हेमाद्रा-**
**त्रिः**—'दत्ते वाप्यथवाऽदत्ते भूमौ यो निक्षिपेद्बलिम् । तदन्नं निष्फलं याति निराशैः
ुभिर्गतैः ॥' केचिदाज्येन कुर्वन्ति तन्न । 'पायसेन तथाज्येन माषान्नेन तथैव च ।
कुर्याद्बलिदानं तु ओदनेन प्रकल्पयेत् ॥' इति **स्मृतिसारे** निषेधात् । **शङ्खः**—
ाद्धे नियुक्तान् भुञ्जानान्न पृच्छेल्लवणादिषु । उच्छिष्टाः पितरो यान्ति पृच्छतो
 संशयः ॥'

**कात्यायनः**—'अश्नत्सु जपेत्सव्याहृतिकां गायत्रीं सकृत्त्रिर्वा रक्षोघ्नीः पौरुषं
कमप्रतिरथम्' इति । **हेमाद्रौ सौरपुराणे**—'ऐन्द्रं च पौरुषं सूक्तं श्रावयेद्ब्राह्मणां-
स्ततः ॥' **मात्स्यपाद्मयोः**—'ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विवि-
धानि च । इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः ॥ मण्डलं ब्राह्मणं

श्रवणीय मन्त्राः ।

त् प्रीतिकारि च यत्पुनः । अभावे सर्वविद्यानां गायत्रीजपमाचरेत् ॥' **पृथ्वीचन्द्रो-**
 **ब्राह्मे**—'वीणां वंशध्वनिं चाथ विप्रेभ्यः संनिवेदयेत् । जपेच्च पौरुषं सूक्तं नाचिक-
यं तथा ॥ त्रिमधुस्त्रिसुपर्णं च पावमानीर्यजूंषि च ॥' **हेमाद्रावत्रिः**—'हुंकारे[2]-
पि यो ब्रूयाद्धस्ताद्वापि वदेद्गुणान् । भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ॥ प्रौढ-
ो बहिःकच्छो बहिर्जानुकरोपि वा । अंगुष्ठेन विनाश्नाति मुखशब्देन वा पुनः ॥
ावशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् । खादितार्धात् पुनःखादेन्मोदकानि फलानि

---

१-बलिदाने त्वन्नमालभ्य त्रिःसावित्रीजपः प्रायश्चित्तम्--इति नागोजीभट्टः। इति टीका । २--स्व-
ाचनानन्तरमदोषमाह वसिष्ठः--'हविर्गुणा न वक्तव्या यावन्न पितृतर्पणम् ॥ पितृभिस्तर्पितैः
द्वक्तव्यं शोभनं हविः ॥' इति ।

च ॥ मुखेन वा धमेदन्नं निष्ठीवेद्भाजनेपि वा । इत्थमश्नन् द्विजः श्राद्धं हत्वा गच्छत्यध
गतिम् ॥' **जाबालिः**—'इष्टमुष्णं हविष्यं च दद्यादन्नं शनैश्शनैः ॥' **वृद्धशात**
तपः—'अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् । न याचते द्विजो मूढः स भवेत् पि
घातकः ॥' **यत्तु यमः**—'श्राद्धे द्विजो नैव दद्यान्न याचेन्नैव दापयेत् ।' इति तद्दत्तसम्प
दितवस्तुविषयमिति **हेमाद्रिः** ॥

**हारीतः**-'ऊर्ध्वपाणिश्च विहसन् सक्रोधो विस्मयान्वितः । भुग्नपृष्ठश्च यद्भुङ्क्ते न
प्रीणाति वै पितॄन् ॥' **प्रचेताः**--'न स्पृशेद्वामहस्तेन भुञ्जानोन्नं कदाचन । न पादौ
शिरो बस्ति न पदा भाजनं स्पृशेत् ॥' **शङ्खः**--'श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह
स्पृशेत् । तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥' **उशनाः**--'भोजनं तु न निः
कुर्यात् प्राज्ञः कथंचन । अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥' **ब्राह्मे**--नच
पातयेज्जातु न शुष्कां गिरमीरयेत् ॥ न चोद्वीक्षेत भुञ्जानान्न च कुर्वीत मत्सरम् ॥'**यम**
'स्वाध्यायं श्रावयेत्सम्यग्धर्मशास्त्राणि चैव हि ॥' **प्रचेताः**—'भुञ्जानेषु तु विप्रेषु ऋग्य
सामलक्षणम् । जपेदभिमुखो भूत्वा पित्र्यं चैव विशेषतः ॥ यजूंषि चैव रुद्रं च राक्षोघ्नीश्
एव च ॥ राक्षोघ्नीः कृणुष्व, रक्षोहणमित्याद्याः । तत्रैव **निगमः**—'भुञ्जत्सु जपेत् प
मानीरुदीरतामध्वन्नवतीश्च ॥' अन्नवत्यः पितुंनुस्तोषमिति । **पृथ्वीचन्द्रोदये** भ
द्वाजः—'भुञ्जानेषु तु विप्रेषु प्रमादात्स्रवते गुदम् । पादकृच्छ्रं ततः कृत्वा अन्यं
नियोजयेत् ॥' क्षणपाद्यादि सत्त्वे इत्यर्थः ॥

**विप्रवमने** तत्रैव **दक्षः**—'निमन्त्रितस्तु यः श्राद्धे भोजने मुखनिःसृते । तदैव ह
कुर्वीत स्वाग्नौ विप्रः समाहितः ॥ प्राणादिपञ्चभिर्मन्त्रैर्यावद्वात्रिंशसंख्यया । ब्राह्मण
ततःकृत्वा घृतप्राशनमाचरेत् ॥' **ऋग्विधाने** तु—'इन्द्राय सोमसूक्तेन श्राद्धविघ्नो य
भवेत् । अग्न्यादिभिर्भोजनेन श्राद्धं सम्पूर्णमेव हि ॥' इत्युक्तम् । अग्न्यादिभि
लौकिकाग्निस्थापनचरुनिर्वापाज्यभागान्ते ग्रामगोत्रपूर्वमग्नौ पितॄनावाह्य संपूज्यान्नत्य
कृत्वा प्राणादिभिर्द्वात्रिंशदाहुतीर्हुनेदित्यर्थः । भोजनेन पुनःश्राद्धेन । तेन होमः पु
श्राद्धं चेति पक्षद्वयमुक्तम् । सूक्तजपस्तूभयानुगतः । **स्मृतिसंग्रहे**—'प्राधान्यं पिण
दानस्य भोजनस्य तदङ्गता । अतो भुक्तिक्रियाहानौ श्राद्धावृत्तिं न मन्वते । पिण्डदा
नरं वान्तौ होम एव नावृत्तिः ॥' पिण्डदानात् प्राग्वान्तौ तद्दिने उपवासं कृत्वा परे
पुनः श्राद्धं कार्यमित्यर्थः । तत्रैव—'श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो वमते यदि

---

१--उच्छिष्टेन परिवेष्टस्पर्शे मरीचिः--'उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तो नरो यदि । भूमौ निध

लौकिकाग्नौ प्रतिष्ठाप्य अर्चयेच्च हुताशनम् ॥' तथा–'एक एव यदा विप्रो भो
छर्दितो यदि । तदैवाग्निं समाधाय होमं कुर्याद्यथाविधि ॥' द्वितीयपक्षे ऋग्विधा
'भोजनोपक्रमादूर्ध्वं प्रक्रमात् पूर्वतो यदि । श्राद्धविघ्ने पुनः कार्यं जपहोमौ न तृप्तिदौ
स्मृतिसंग्रहे–'अकृते पिण्डदाने तु भुञ्जानो ब्राह्मणो वमेत् । पुनःपाकात्तु क
पिण्डदानं यथाविधि ॥' पिण्डदानं श्राद्धम्–'अकृते पिण्डदाने तु पिता यदि वमेत्तत
पुनः पाकं प्रकुर्वीत श्राद्धं कुर्याद्यथाविधि ॥' इति तत्रैवोक्तेः । तथा 'पित्रर्थानां
णां च पिता च वमते यदि । तद्दिने चोपवासः स्यात्पुनः श्राद्धं परेऽहनि ॥ वमं
विरेके वा तद्दिनं परिवर्जयेत् ॥' एषु वचनेषु मूलं चिन्त्यम् । इदं मासिकाब्दिक
यम् । दर्शादौ तु वान्तावामेन तदैव कार्यम् । 'श्राद्धविघ्ने द्विजातीनामामश्राद्धं
र्तितम् । अमावास्यादिनियतं माससंवत्सरादृते ॥' इति मरीचिस्मृतेः । श्राद्धे पि
दानमेव प्रधानमिति कर्काचार्याः । तन्मते दक्षोक्तो होम एव नावृत्तिः ।
भोजनमिति मेधातिथिः । भोजनपिण्डदानाग्नौकरणानीति कपर्दिधूर्तस्वा
माद्र यादयः । श्राद्धस्य होमदानोभयरूपत्वात्संपूर्णदानाभावाद्भोजनस्याङ्गत्वेपि स
वमने इति युक्तम् । तन्मते पूर्वोक्तो निर्णयः । अन्नत्यागमात्रं प्रधानम् । भोज
प्रतिपत्तिरूपमङ्गमतो वान्तौ तद्धानेपि नावृत्तिरिति गौडमैथिलादयः । नैमि
विधानमिति युक्तं प्रतीमः ॥

अत्रेदं तत्त्वम् । वैश्वदेविकस्य वमने होम एव नावृत्तिः । अङ्गत्वात् । तच्च रक्षार्थत्व
'इष्टिश्राद्धे क्रतूदक्षौ' इत्यादि स्मृतेश्च । तत्र जयान्न जुहुयादितिवत् । पितामहो
तथा । पितेत्युक्तेरिति केचित् । तस्यापि प्रधानत्वात् पितृवदिति तु युक्तम् । सपि
करणादौ वार्षिकवत् । 'सपिण्डीकरणादीनि यानि श्राद्धानि षोडश । तत्र पिण्डप्रध
प्रेतत्वविनिवर्तकम् ॥' इति स्मृतेः । महैकोद्दिष्टादौ तूभयप्राधान्यादावृत्तिरेव । 'एव
द्विजो भोज्यः पिण्डोप्येको विधीयते ।' इति स्मृतेः । वृद्धिसंकल्पनित्यश्राद्धादौ
जनप्राधान्याद्वान्तावावृत्तिरेव । 'वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम् । नित
द्धमदैवं स्यात्पिण्डदानविवर्जितम् ॥' इति स्मृतेः । 'भुक्तिक्रियायाः प्राधान्यं श्राद्धे
ल्पसंज्ञके । तत्रैव पितृविप्रस्य तूपघाते पुनः क्रिया ॥' इति संग्रहोक्तेश्च । मघाद
वम् । तीर्थमहालयादौ दर्शवदित्याशार्काद्यालोचनेन प्रतीमः ॥

आश्वलायनः–'तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदन्तेति च संपन्न

स्पृष्ट्वा यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य शेषं निवेदयेदभिमतं
च' इति । अत्र गायत्री मध्वितित्रिकजपोपि ज्ञेयः । 'तृप्तान् बुद्ध्वान्नमादाय सतिल
वज्जपेत् ।' इति प्रचेतसोक्तेः । व्यासः–'तृप्ताः स्थेति तु पृष्टास्ते ब्रूयुस्तृप्ताः स्म
थ ।' अभिमते विप्रैः स्वीकर्तुमीष्टे शौनकोपि–'अन्नशेषैश्च किं कार्यमिति पृच्छेत
तः । ते इष्टैः सह भोक्तव्यामीति प्रत्युक्तिपूर्वकम् ॥ प्रदद्युः सकलं तस्मै स्वीकुर्युव
रुचि ।' श्राद्धविशेषे प्रश्नभेदमाह हेमाद्रौ विष्णुः–'पित्र्ये स्वदितमिति गोष्ठ्या
संपन्नमित्यभ्युदये दैवे रोचत' इति । आयुष्यमिति स्वैरिषु स्वैरमिच्छाश्राद्धम् ।
वल्क्यः–'अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च । तदन्नं प्रकिरेद्भूमौ दद्या
सकृत्सकृत् ।' इदं चात्र विकिरदानमन्यशाखिनाम् । आश्वलायनानां तु पिण्डान
सूत्रकृतोक्तम् । कात्यायनस्तु–विकिरोत्तरं गायत्र्यादिजपं तृप्तिप्रश्नं चाह । हे
देवलः–'ततः सर्वाशनं पात्रे गृहीत्वा विविधं बुधः । तेषामुच्छेषणस्थाने
भुवि निःक्षिपेत् ।' माधवीये प्रचेताः–'सार्ववर्णिकमादाय येअग्नीति भुवि क्षिपे
स च कुशे कार्यः 'दर्भेषु विकिरश्च यः' इत्युक्तेः । मन्त्रः कातीयः । 'अग्निद
ये जीवा येप्यदग्धाः कुले मम । भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गति
इति अन्ये तु–'असोमपाश्च ये देवा यज्ञभागविवर्जिताः । तेषामन्नं प्रदास्यामि
वैश्वदेविकम् ॥' इति हेमाद्रौ गोभिलोक्तेन दैवे–'असंस्कृतप्रमीता ये त्यागिन्य
कुलस्त्रियः । दास्यामि तेभ्यो विकिरमन्नं ताभ्यश्च पैतृकम् ॥' इत्यग्निपुराण
पित्र्येन्नं विकीर्य 'ये अग्निदग्धाः' इत्युच्छिष्टपिण्डं कुशोपरि पृथग्दद्यादित्याहुः । पृ
चन्द्रोदयेप्येवम् । ब्राह्मे–'ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत् ॥'
वीये गौतमः–'विकिरमुच्छिष्टैः प्रतिपादयेत् ॥' हेमाद्रौ व्यासः–'उच्छिष्टै
किरं सदैव प्रतिपादयेत ॥ 'भृगुः–'पिण्डवत् प्रतिपत्तिः स्याद्विकिरस्येति तौल्वलि
श्राद्धकारिकायाम्–'यजमानस्य दासादीनुद्दिश्य द्विजसत्तमम् । तस्मादन्नं
द् भूमौ वामभागेषु पैतृके ॥'मनुः–'उच्छेषणं भूमिगतमजिह्मस्याशठस्य च । दास
तत्पित्र्ये भागधेयं प्रचक्षते ॥'

विष्णुः–'उदङ्मुखेष्वाचमनमादौ दद्यात्' . ततः प्राङ्मुखेषु पित्र्ये दैवे चेत्
शातातपः–'विश्वेदेवनिविष्टानां चरमं हस्तधावनम् ॥' हेमाद्रौ वाराहे–'हस्तं
ल्य यश्चापः पिबेदभुक्त्वा द्विजः सदा । तदन्नमसुरैर्भुक्तं निराशाः पितरो गत

**मरीचिः**-'हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः । आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते' ॥ तत्रैव **संग्रहे**-'पवित्रग्रन्थिमुत्सृज्य मण्डलं भुवि निक्षिपेत् । हस्तादीन् क्षालयेद्विद्वाञ्छरावादौ न कुत्रचित्' ॥ **व्यासः**-'ताम्बूलोद्गिरणं चैव गण्डूषोद्गिरणं तथा । कांस्यपात्रे तथा ताम्रे न कुर्वीत कदाचन ॥ उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत् ॥'

**अथ पिण्डदानम्** । तच्चार्चनोत्तरमग्नौकरणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं चेति **हेमाद्रौ स्मृतिषु** च पक्षा उक्ताः । तेषां शाखाभेदेन व्यवस्था । 'प्रेतश्राद्धेषु पूर्वमन्येषु भोजनोत्तरम्' । इति **चन्द्रिकामाधवौ** । सर्वत्र भोजनोत्तरमिति बहवः । **आश्वलायनः**-'भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेष्वेके । भुक्तवत्स्विति पूर्वनिषेधार्थम् । साग्निरिति प्रणीतसमीपे अनग्निर्द्विजसमीपे । **हेमाद्रौ जातूकर्ण्यः**-'व्याममात्रं समुत्सृज्य पिण्डांस्तत्र प्रदापयेत्' । प्रसारितभुजान्तरं व्यामः । संकटे तु **व्यासः**-'अरत्निमात्रमुत्सृज्य' । इति । यत्तु **तत्रैव**-'सिकताभिर्मृदा वापि वेदी दक्षिणनिम्नगा' । इति तदन्यशाखिपरम् । **देवलः**-'ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य च ॥' **चन्द्रिकायाम्**-'पिण्डनिर्वापणं कार्यं कुशाभावे विचक्षणैः । काशेषु राजदूर्वासु पवित्रे परमे हिते ॥' **आश्वलायनः**-'स्फ्येन रेखामुल्लिखेत् ।' अपहता असुरा रक्षांसि वेदिषद इति तामभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तीर्य प्राचीनावीती रेखां त्रिरुदकेनोपनयेच्छुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः पित्रे पितामहाय प्रपितामहायैतत्तेसौ ये च त्वामत्रानु' इति । **हेमाद्रौ पारस्करः**-'कराभ्यामुल्लिखेत् स्फ्येन कुशैर्वापि महीं द्विजः ।' 'बह्वृचानां करेणैव लेखा चाग्नेय्यभिमुखेति **वृत्तिः** ॥' 'दक्षिणाप्राचीं वेदिमुद्धृत्य' इत्यापस्तम्बोक्तेश्च ॥

पिण्डदाननिर्णयः ।

**देवलः**-'आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् । तेष्वासीनेषु पात्रेण प्रयच्छेत्सतिलोदकम् ॥' पराचीनेन निम्नापितृतीर्थेन । **वायवीये**-'मधुसर्पिस्तिलयुतां-

---

१--गण्डूषप्रकारः स्मृतौ--'अर्धं पिबति गण्डूषमर्धं त्यजति भूमिषु । प्रीणन्ति पितरः सर्वे ये चान्ये भूमिदेवताः ॥ इति । तत्प्राशने 'अमृतापिधानमसि इति मन्त्रः । तदवशिष्टतोयत्यागे च 'रौरवेऽपुण्यनिलये ब्रह्मार्बुदनिवासिनाम् । अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु, ॥ इति मन्त्रः । इति

स्त्रीन् पिण्डान्निर्वपेद्बुधः ॥' **त्रिस्थलीसेतौ**–'तिलमन्नं च पानीयं धूपं दीपं
स्तथा । मधु सर्पिः खण्डयुक्तं पिण्डमष्टाङ्गमुच्यते ॥' **याज्ञवल्क्यः**–'सर्वमन्न
दाय सतिलं दक्षिणामुखः । उच्छिष्टसन्निधौ पिण्डान् दद्याद्वै पितृयज्ञवत्
केचित् पिण्डेषु माषान् वर्जयन्ति । 'माषाः श्राद्धेषु वै ग्राह्या वर्ज्याश्चैवाग्नि
ण्डयोः । ब्राह्मणेषु यथा मद्यं तथा माषोग्निपिण्डयोः ॥' इति **स्मृतिसार**
'माषान् सर्वत्र वै दद्यात् पिण्डेग्नौ च विवर्जयेत् ।' इति स्मृतेश्च । अत्र मूलं
न्त्यम् । **हेमाद्रावपि** 'सर्वशब्दस्य प्रकृतार्थत्वात्सर्वान्नग्रहणमुक्तम् ॥ अत्र इ
न्नमनुज्ञाप्य सर्वमेकत्रोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन् पिण्डान् दद्यात् ।'
**गोभिलसूत्रे** । 'सर्वस्मात् प्रकृतादन्नात् पिण्डान्मधुतिलान्वितान् ।' इति
शेषनियमात्तदभावे पिण्डनिवृत्तिः प्राप्नोतीति **मैथिलवाचस्पती** । तन्न । तु
वापवत् परप्रयुक्तद्रव्यत्वेप्यर्थकर्मत्वाद्गुणानुरोधेन प्रधानत्यागाच्च शेषलोपेपि द्र
न्तरेण कार्यम् । अतो नेयं प्रतिपत्तिः । किंतु प्रधानमित्युक्तं प्राक् । अन्यथा सपि
करणादौ संयोजनादेः प्रधानस्य लोपापत्तेरिति दिक् ॥

**अथ पिण्डप्रमाणम्** । **हेमाद्रावङ्गिराः**–'कपित्थबिल्वमात्रान्वा पिण्डान्
द्विधानतः । कुक्कुटाण्डप्रमाणान्वामलकैर्बदरैः पुमान् ॥' इ
तत्रैव **धूम्रः**–'कपित्थस्य प्रमाणेन पिण्डान् दद्यात्समाहितः । त

अथ पिण्डप्रमाणम् ।

विकिरं दद्यात् पिण्डान्ते तु षडङ्गुलैः ॥' **अन्त्येष्टिपद्धतौ भट्टास्तु**–'एकं
सपिण्डे तु कपित्थं तु विधीयते । नारिकेलप्रमाणं तु प्रत्यब्दे मासिके तथा ॥
दर्शे च संप्राप्ते कुक्कुटाण्डप्रमाणतः । महालये गयाश्राद्धे कुर्यादामलकोपमम्
इत्याहुः । **कालिकायामाचार्यः**–'यत्र स्युर्बहवः पिण्डास्तत्र बिल्वफलोपमाः ।
चैको भवेत्पिण्डस्तत्र खर्जूरसन्निभः ॥ प्रेतपिण्डस्तु दैर्घ्येण द्वादशांगुल उच्यते ॥' इ
**बायवीये**–'पत्नी पिण्डांस्तु मृद्नीयात् त्रिवर्गस्य सहायिनी ॥' **हेमाद्रौ लौगाक्षि**
'महालये गयायां च प्रेतश्राद्धे दशाहिके । पिण्डशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तये
**शाठ्यायनिः**–'असावेतत्त इत्युक्त्वा तदन्ते च स्वधा नमः' । असावित्यत्र स
न्धरूपगोत्रादिविशिष्टं पित्रादिनाम सम्बुद्ध्यन्तमुक्त्वा पुनश्चतुर्थ्यन्तं तदन्तेऽयं पिण्ड
मन्नं वा स्वधा नमो न ममेति वदेदिति **हेमाद्रिः** । पित्रादीनामज्ञाने **त्वापस्तम्ब**
'यदि नामानि न विन्द्यात्स्वधापितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं दद्यात् । स्व

स्त्रीभ्यः' इति सूत्राच्च । एवं यत्र तीर्थमहालयादौ । 'केचिदिच्छंति नारीणां
श्राद्धं महर्षयः ॥' इति चतुर्विंशतिमतात् 'पित्रादि नवदैवत्यं तथा द्वादशदैव
इत्यग्निपुराणाच्च मातॄणां पृथगुक्तम् । यत्र वा 'आचार्यगुरुशिष्येभ्यः सखिज्ञ
एव च । तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलाञ्जलीन् । पिण्डांस्तेभ्यः सदा दद्य
न्भाद्रपदे नरः । तीर्थेषु चैव सर्वेषु माघमासे मघासु च ॥' इति चतुर्विंशति
'दौहित्रपुत्रदाराश्च एकनिष्ठाः सहोदराः । निःसन्ताना मृता ये च तेभ्योप्यत्र प्रदी
इति भविष्ये एकोद्दिष्टान्युक्तानि । तत्रापि तत्पश्चिमे पिण्डदानं ज्ञेयम् । येषां न
तैः सपत्नीकाः पित्रादयो वाच्याः । 'अन्वष्टका गया मातृश्राद्धं चैव मृतेहनि । ए
तथा मुक्का स्त्रीषु नान्यत् पृथग्भवेत् ॥' इति शंखोक्तेश्च ॥

मनुः-'तेषु दर्भेषु तं हस्तं निमृजेल्लेपभागिनाम् ॥' हस्तलेपाभावेपि हस्तं निम
देवेति मेधातिथिः । विष्णुः'-अत्र पितरो मादयध्वमिति दर्भमूले करावघर्षण
कलिकायां सुमन्तुः-'एकोद्दिष्टेषु वर्षासु दर्भलेपो न विद्यते । सपिण्डीकरण
लेपः सर्वत्र शस्यते ॥' मनुः-'आचम्योदक् परावृत्य त्रिरायम्य शनैरसून् । षड्
नमस्कुर्यात् पितॄनेव च मन्त्रवत् ॥ उदकं निनयेच्छेषं शनैः पिण्डान्तिके पुनः ॥'
प्राणायामं कृत्वेति मेधातिथिः । अमन्त्रं प्राणान्निरुध्येति कर्काद्याः । मन्त्रवत्
न्ताय नमः 'नमो वः पितरः' इत्याद्यैः । शेषं पूर्वावनयनशेषम् । आश्वलाय
'निपृताननुमन्त्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति सव्यावृदुदग
यथाशक्ति प्राणान्नासित्वाऽभिपर्यावृत्त्याऽमीमदन्त पितरो यथाभागमावृषायिषतेति
प्राणभक्ष्यं भक्षयेन्नित्यं निनयनम्' इति । नित्यग्रहणं शेषाभावेपि कुर्यादित्य
शौनकः-'अथैषामत्र पितर इत्याद्येनानुमन्त्रणम् । अमीमदन्तेत्याद्येन मन्त्रेणा
मन्त्र्य तान् । पिंडशिष्टचरोरन्नं किञ्चिदाघ्राय तत्त्यजेत् ॥ प्रक्षाल्याचम्य शुन्धन
त्याद्यैरेव पूर्ववत् । मन्त्रैः पिंडेषु पानीयं निषिञ्चेत् पितृतीर्थतः ॥' व्याघ्रः-'
प्रक्षाल्य तत्पात्रं तत्पिंडं प्रति पूर्ववत् । कृत्वावनेजनं कुर्यात्पिडपात्रमधोमुखम् ॥'
त्कातीयादीनाम् ॥

आचार्यः-'ततः सम्यग् द्विराचम्य नीवीं विस्रस्य वाग्यतः ॥' आश्वलाय
'असावभ्यंक्ष्वासावंक्ष्वेति पिंडेष्वभ्यञ्जनाञ्जने वासो दद्याद्दशामूर्णास्तुकां वा पश्चा
ताया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मानोतोन्यत् पितरो युङ्ध्वम्' इति । श्र
चिन्तामणौ ब्राह्मे-'एतद्वः पितरो वास इति जलपन् पृथक्पृथक् । अमुकामुक

दक्षिणां सर्वभोगांश्च प्रतिपिण्डं प्रदापयेत् । भक्ष्याण्यपूपानिक्षूंश्च व्यञ्जनान्यशनानि
तत्रैव शंखः—'यत् किंचित् पच्यते गेहे भक्ष्यं भोज्यमगर्हितम् । अनिवेद्य न भोक्तव्यं
मूले कथञ्चन ॥' एतत्सव्येनेति केचित् । युक्तं त्वपसव्येन । मनुः—'अवजिघ्रेच्च
पिण्डान् यथान्युप्तान् समाहितः ।' ततो 'नमो वः पितर इष' इत्यादिनोपस्था
मात्स्ये—'अथाचान्तेषु चाचम्य वारि दद्यात्सकृत्सकृत् । तिलपुष्पाक्षतान् प
य्योदकमेव च ॥' अत्र दैवे सव्यं पित्र्ये त्वपसव्यमिति कर्कः । परिभाषोक्तवचना
मिति युक्तम् । अत्र शिवा आपः सन्तु । सौमनस्यमस्त्वित्यादिप्रयोगो ज्ञेयः। मा
'दत्त्वाशीः प्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखो बुधः । अघोराः पितरः सन्तु सन्ति
पुनर्द्विजैः ॥ गोत्रं तथा वर्धतां नस्तथेत्युक्तः स तैः पुनः । दातारो नोऽभिवर्ध
चैवेत्युदीरयेत् ॥ स्वस्तिवाचनकं कुर्यात्पिण्डानुद्धृत्य भक्तितः ॥'

स्वस्तिवाचनात्प्राक्पात्रचालनं कार्यम् । हेमाद्रौ बृहस्पतिः—'भोजनेषु च
त्सु स्वस्ति कुर्वन्ति ये द्विजाः । तदन्नमसुरैर्भुक्तं निराशैः पितृभिर्गतैः ॥' जातूक
'पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योथवा सुतः । न स्त्रीभिर्न च वालेन नास
कथंचन ॥' याज्ञवल्क्यः—'स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ।' तत्रै
शातातपः—'पितॄणां नामगोत्रेण करे देयं तिलोदकम् । प्रत्येकं पितृतीर्थेन अ
मिदमस्त्विति ॥' अत्र षष्ठी प्रागुक्ता । तत्रैव नागरखण्डे—'उत्तानमर्घ्यपात्रं
दत्त्वा च दक्षिणाम् । हिरण्यं देवतानां च पितॄणां रजतं तथा ॥' बृहस्पतिः—'
पणं काकिणीं वा फलं पुष्पमथापि वा । प्रदद्याद्दक्षिणां यज्ञे तया स सफलो भ
अत्र पित्रुद्देशेन दक्षिणादाने अपसव्यं विप्रोद्देशेन सव्यमिति माधवः ॥
कायामाचार्यः—'दद्याद्यज्ञोपवीत्येव ताम्बूलं दक्षिणां तथा ॥' अत्रिः—'वदेच्च
विप्रान् पित्रादिभ्यः स्वधोच्यताम् ॥' गोभिलः—'अघोराः : पितरः सन्ति
स्वधां वाचयिष्य इति पृच्छति पितृभ्यः स्वधोच्यतामित्युक्तेऽस्तु स्वधेत्यु
धारां दद्यादूर्जंवहन्तीं' इति । 'आपस्तम्बेन तु पुत्रान् पौत्रानभितर्पयन्ति'
परिषेचने मन्त्र उक्तः ॥

आश्वलायनः—'अथैतान् प्रवाहयेत् । परेतन पितरः सोम्यासो गम्भीरेभिः
पूर्विणेभिः । दत्त्वायास्मभ्यं द्रविणेह भद्रं रयिं च नः सर्ववीरं नियच्छत ॥' इति । म
'वाजे वाजे इति जपन् कुशाग्रेण विसर्जयेत् ॥' प्रचेताः—'स्वस्ति वाच्यं ततः कृत्वा

न्मण्डलदेशे कार्यमिति हेमाद्रिः । मनुः–'दातारो नोभिवर्धन्तां वेदाः सन्ततिरेव च श्रद्धा च नो मा व्यगमद्बहु देयं च नोस्तु' इति । बौधायनः–'अन्नं च नो बहु भवेद तिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन ॥' इति । अत्र दातारो नोभिवर्धन्तां लभध्वं याचिद्वमित्याद्यूहेन पठित्वा विप्रैः प्रतिवचनं कार्यमिति सुदर्शन भाष्ये । 'स्वादुषंसद' इति 'ब्राह्मणासः पितरः' इति च मन्त्रद्वयं पठन्ति । शौनकः–'ब्राह्मणानथ निर्यातान् परीत्य त्रिःप्रदक्षिणम् । सस्त्रीकः स्वजनैः सार्द्धं प्रणमेद्रचिता ञ्जलिः ॥ कनिष्ठप्रथमा ज्येष्ठचरमाः स्युः प्रदक्षिणे ॥' हेमाद्रौ बृहस्पतिः–'अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् । अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥ पत्र शाकादिदानेन क्लेशिता यूयमीदृशाः । तत्क्लेशजातं चित्तात्तु विस्मृत्य क्षन्तुमर्हथ ॥' प्रचेताः–'विसृजेद्भक्तिसंयुक्तः सीमान्ते चाप्यनुव्रजेत् ॥' इति ॥

पिण्डप्रतिपत्तिनिर्णयः ।

अथ पिण्डप्रतिपत्तिः । हेमाद्रौ ब्रह्माण्डे–'पिण्डमग्नौ सदा दद्याद्भोगार्थी प्रथमं नरः । पत्न्यै प्रजार्थी दद्याद्वै मध्यमं मन्त्रपूर्वकम् ॥ उत्तम गतिमन्विच्छन् गोषु नित्यं प्रयच्छति । आज्ञां प्रज्ञां यशः कीर्तिमप्सु पिण्डं प्रवेशयेत् ॥ प्रार्थयन् दीर्घमायुष्यं वायसेभ्यः प्रयच्छति । आकाशं गमयेदप्सु स्थितो वा दक्षिणामुखः ॥' आश्वलायनः–'वीरं मे दत्त पितर इति पिण्डानां मध्यमं पत्नीं प्राशयेत् । 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथायमरपाअसत्' इति मन्त्रे दत्तस्याद्येनादाय द्वितीयेन प्राशनम् । आपस्तम्बस्तु दाने मंत्रमाह–'अपां त्वोषधीनां रसं प्राशयामि भूतकृतं गर्भं धत्स्व इति मध्यमं पत्न्यै प्रयच्छति' इति । प्राशनेपि 'यथेह पुरुषो असत्' इति तद्द्वितीयः पाठोऽन्येषां तत्तच्छाखायां ज्ञेयः । तत्रैव शङ्खः–'पत्नी वा मध्यमं पिण्डमश्नीयादार्तवान्विता ॥' कलिकायां छागलेयः–'प्राचीनावीतिनाऽऽमन्त्र्य पत्नी पिण्डो विभज्यते । प्रतिपत्त्यस्य मन्त्रस्य कर्तव्यावृत्तिरत्र तु ॥' माधवीये विष्णु धर्मे–'तीर्थे श्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ॥' याज्ञवल्क्यः–'पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेपि वा ॥' बृहस्पतिः–'अन्यदेशगता पत्नी रोगिणी गर्भिणी तथा । तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति' ॥

अथ पिण्डोपघाते हेमाद्रौ प्रायश्चित्तकाण्डे देवलः–'श्वसृगालखरैः पिण्डः स्पृष्टो भिन्नः प्रमादतः । कर्तुरायुष्यनाशः स्यात्प्रेतस्तं नोपसर्पति ॥' जातूकर्ण्यः पूर्वश्लोकान्ते–'तद्दोषपरिहारार्थं प्राजापत्यं प्रकल्पयेत् । पुनः स्नात्वा

पिण्डोपघातप्रायश्चित्त-

पिण्डो यद्युपहन्यते । प्राजापत्यं चरित्वाथ पुनः पिण्डं समाचरेत् ॥' **बोपदेवोप्ये**
माह–दिनान्तरे तु प्राजापत्यमात्रम् । शेषप्रतिपत्तित्वेन पिण्डावृत्तौ मानाभावादि
**मैथिलास्तन्न** । सपिण्डीकरणादौ शेषनाशे संयोजनादिलोपापत्तेः । तेन वचनाद्वमन इ
त्रापितन्मात्रपिण्डदानावृत्तिः । अत एव–'नच नक्तं श्राद्धं कुर्वीतारब्धे वा भोजनसमा
नात्' **इत्यापस्तम्बसूत्रम्** । रात्रौ भोजनमात्रं पूर्वेद्युः कार्यम् । श्राद्धसमाप्तिस्तु प
दिने एव । समाप्तिपर्यन्तं कर्तुरुपवासश्चेति **हरदत्तेन** व्याख्यातम् । तस्मात् पाकान्त
रेण पिण्डदानमात्रं कार्यम् ॥

**अथ पिण्डनिषिद्धकालः** ॥ स च प्रायेण महालयादिनिर्णये पूर्वमुक्तः
**हेमाद्रौ बृहत्पराशरः**–'युगादिषु मघायां च विषुवत्ययने तथा । भरणीषु च कुर्वी

पिण्डनिषिद्धकाल-निर्णयः ।

पिण्डनिर्वपणं नहि ॥' **स्मृतिरत्नावल्याम्**–'पुत्रे जाते व्यतीपा
ग्रहणे चन्द्रसूर्ययोः । श्राद्धं कुर्यात् प्रयत्नेन पिण्डनिर्वपणादृते ।
तत्रैव **कात्यायनः**–'वृद्धेरनंतरं चैवं यावन्मासः समाप्यते । तावत् पिण्डान्नैव दद्या
कुर्यात्तिलतर्पणम् ॥' **बौधायनः**–'संस्कारेषु तथान्येषु मासं मासार्धमेव च ।
**तथा**–'भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च । पिण्डदानं मृदा स्नानं न कुर्यात्ति
लतर्पणम् ॥' **त्रिस्थलीसेतौ काष्र्णाजिनिः**–'विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्
उत्तरार्द्धं प्राग्वत् । 'वृद्धिमात्रे तथान्यत्र पिण्डदाननिराक्रिया । कृता गर्गादिभिर्मुख्यै
र्मासमेकं तु कर्मणाम् ॥' **हेमाद्रौ ज्योतिःपराशरः**–'विवाहे विहिते मासांस्त्यजे
युर्द्वादशैव हि । सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥' **तत्रैव**–'महालये गय
श्राद्धे मातापित्रोः क्षयेऽहानि । यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ॥ कृतोद्वाहो
कुर्वीत पिण्डनिर्वापणं सदा ॥' इति । मातापित्रोरिति क्षयाहविशेषणम् । हविरुभयत्वं
द्विवक्षितम् । तेन भ्रातृपितृव्यादिवार्षिकेपि पिण्डदानं कार्यमिति केचित् । सपिण्डीकर
नवश्राद्धषोडशश्राद्धोपलक्षणार्थमिति **निर्णयामृते** उक्तम् ॥

**क्षयाहे विशेषः संग्रहे**–'मातापित्रोराब्दिके तु विवाहादिषु सर्वदा । तिलैः पिण्ड
प्रदातव्या अन्यश्राद्धे विवर्जयेत् ॥' अत्र मूलं चिन्त्यम् । **रामकौतुके**–'नन्दाश
कामरव्यारभृग्वग्निपितृकालभे । गण्डवैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः ।
**विश्वरूपनिबन्धे**–'तिथिवारप्रयुक्तो यो दोषो वै समुदाहृतः । स श्राद्धे तन्निमि
स्यान्नान्यश्राद्धे कदाचन ॥' अन्यत्तूक्तं प्राक् । उच्छिष्टोद्वासनमाह **हेमाद्रौ वसिष्ठ**

शिष्याय च सुताय च ॥' भोक्तुरिति शेषः । जातूकर्ण्यः-द्विजभुक्तावशिष्टं तु
भूमौ निखानयेत्' ॥

अथ वैश्वदेवादिनि०अत्र मामकः श्लोकः-'श्राद्धेनग्निककर्तृकेऽग्निकरण
ज्जुहोतिर्बलिस्त्वन्ते स्यादथवा भवेद्विकिरतः पश्चात् पृथक्त्वे पचेः । श्राद्धान्ते
महालयविधावूर्ध्वं भुजेः स्यात्क्षये त्वन्तेऽमासु च मध्यता शु
वादौ तथा साग्निके ॥' अस्यार्थः-साग्नेः पृथक्पाकेन स

वैश्वदेवादिनिर्णयः ।

वैश्वदेवः । 'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्तत
र्यकं बुधः ॥ पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च । वैश्वदेवं न पित्रर्थं न दार्शं वै
कम्॥' इति लौगाक्षिस्मृतेः । अत्र साग्निक आहिताग्निरिति हेमाद्रिः । '
प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः । एकादशाहिकं भुक्त्वा तत्र ह्यन्ते विधीयते ।
हेमाद्रौ शालंकायनोक्तेश्च । तत्रैव परिशिष्टे-'संप्राप्ते पार्वणश्राद्धे एकोद्दि
च ॥ अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेहनि ॥' स्मार्ताग्निमतां तद्रहितानां
करणोत्तरं विकिरोत्तरं वा होममात्रं पृथक्पाकेन । भूतयज्ञादि तु श्राद्धान्त एव
मूलं हेमाद्रिचन्द्रिकादौ स्पष्टम् । सर्वेषां श्राद्धान्ते वा तत्पाकेन वैश्वदेवनि
द्धादीति तृतीयः । 'श्राद्धं निर्वर्त्य विधिवद्वैश्वदेवादिकं ततः । कुर्याद्भिक्षां ततो
द्धन्तकारादिकं तथा ॥' इति पैठीनसिस्मृतेः । ततः श्राद्धशेषात् । 'श्राद्धाह्नि
शेषेण वैश्वदेवं समाचरेत् ।' इति चतुर्विंशतिमताच्च । एवं वैश्वदेवकाल
आशार्के सांख्यायनपरिशिष्टमुदाहृत्यैव व्यवस्थोक्ता । 'आदौ वृद्धौ क्षये
दर्शे मध्ये महालये । एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥' इति बहुस्मृत्यु
त्सवषां श्राद्धान्ते एवेति मेधातिथिस्मृतिरत्नावल्यादयो बहवः ॥

बोपदेवस्तु वृत्तिकारेण विसर्जनान्तं श्राद्धमुक्त्वा 'उच्छेषणं तु' इति पूर्वोक्त
वाक्योदाहरणाद्बह्वृचानां श्राद्धान्त एव । मध्यपक्षस्त्वन्यशाखापर इत्याह ॥ हे
द्रिस्तु वृद्धावप्यन्ते एव वैश्वदेवमाह । कातीयानां तु श्रौतस्मार्ताग्निमतामादा
वपाकेनेति कर्कः । अन्येषां मते तैत्तिरीयाणां तु साग्निकानां सर्वत्रादौ वैश्वदेवः ।
यज्ञाश्च अन्ते चेति सुदर्शनभाष्ये उक्तम् । अस्य पक्षद्वयस्य पूर्ववद्व्यवस्
हेमाद्रौ मार्कण्डेयः-'ततो नित्यक्रियां कुर्याद्भोजयेच्च ततोतिथीन् ॥ ततस
भुंजीत सह भृत्यादिभिर्नरः ॥' ततः श्राद्धशेषात् । नित्यक्रियां नित्यश्राद्धम् ।
पृथक्पाकेन नैत्यकम्' इति तेनैवोक्तेः । पाकैक्ये विकल्पः ॥

**अथ नित्यश्राद्धम्** । **हैमाद्रौ व्यासः**—'एकमप्याशयेद्विप्रं षण्णामप

नित्यश्राद्धम् ।

गृही ॥' अपीत्यनुकल्पः । **प्रचेताः**—'नामन्त्रणं न होमं च न
न विसर्जनम् । न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ॥' अ
'निर्दिश्य भोजयित्वा तु किंचिद्दत्त्वा विसर्जयेत् ।' इति तेनैवोक्तेर्दक्षिणाविक
यत्तु—'नित्यश्राद्धं देवहीनं नियमादिविवर्जितम् । दक्षिणारहितं चैव दातृभोक्तृव्रतो
तम्' ॥ इति **काशीखण्डे** । तद्विप्राभावपरमिति **पृथ्वीचन्द्रः** । **भविष्ये**—'आ
स्वधाकारं पिण्डाग्नौकरणादिकम् । ब्रह्मचर्यादिनियमा विश्वेदेवा न चैव हि । दा
मथ भोक्तॄणां नियमो न च विद्यते ॥' एतद्दिवाऽसंभवे रात्रावपि कार्यम् । 'दिवो
नि कर्माणि प्रमादादकृतानि वै । यामिन्याः प्रहरं यावत्तावत् कर्माणि कारयेत्' ॥
**बृहन्नारदीयोक्तेः** । रात्रौ प्रहरपर्यंतं दिवाकृत्यानि कारयेत् । ब्रह्मयज्ञं च सौरं च
यित्वा विशेषतः ।' इति **पृथ्वीचन्द्रधृतसंग्रहोक्तेश्च** । न च दार्शिकाब्दिक
रात्रौ स्यादिति वाच्यम् । इष्टापत्तेःातस्य तिथिसंबन्धित्वात् 'संध्यारात्रौ न कर्तव्यं
खलु विचक्षणैः' । इति वैष्णवाद्यै रात्रौ निषेधात् । अत एवाल्पद्वादश्याम्—'उषःका
कुर्यात् प्रातर्माध्याह्निकं तदा ।' इत्याद्यैर्वाक्यैस्त्रयोदशीश्राद्धं नापकृष्यते । भिन्न
यत्वादित्युक्तं **मदनरत्ने** । नित्यं त्वपकृष्यते । अन्वहमित्युक्तेस्तिथिसर्वा
भावात् । यथा च **सुदर्शनभाष्ये**—'परपक्षे पित्र्याणीति नियमेपि नित्यश्राद्धत्वे सं
रमित्यत्यन्तसंयोगे द्वितीया । बलाच्छुक्लपक्षेपि' इत्युक्तम् । तथा रात्रावपि । त
**माधवेन** प्रतिपत्प्रकरणे स्पष्टमुक्तम् । वयं चाग्रे वक्ष्यामः। अस्य दिने करणे लोप
'रात्रौ श्राद्धं न कुर्वीत' इति निषेधादिति **पृथ्वीचन्द्रोदयः**। पात्राभावे **कौर्मे**—'उ
वा यथाशक्ति किंचिदन्नं प्रकल्पयेत् ॥' तत्प्रतिपत्तिमाह **विष्णुः**—'भिक्षुकाभावे
गोभ्यो दद्यादग्नौ वा प्रक्षिपेत् ।' इति **हेमाद्रौ** । **नागरखण्डे**—'नित्यश्राद्धं न
प्रसङ्गाद्यत्र सिद्ध्यति । श्राद्धान्तरे कृतेन्यत्र नित्यत्वात्तन्न हापयेत् ॥' ष
पृथङ् नेत्यर्थः ॥

**मात्स्ये**—'ततस्तु वैश्वदेवान्ते सभृत्यसुतबान्धवः । भुञ्जीतातिथिसंयुक्तः सर्वपित
वितम् ॥' सर्वं पर्वनिषिद्धं मांसमाषाद्यपीत्यर्थः । एवं कृष्णैकादश्यादौ गृहिणोपि
नम् अस्य वेधत्वेन निषेधाप्रवृत्तेः । एवं ग्रहणवेधेपि । यत्त्वनाहिताग्नेरमाषममांसं व्रत
त्युक्तं तद्धेयमेव । श्रौतत्वेन तस्य बलवत्त्वात् । **देवलः**—'श्राद्धं कृत्वा तयोर्मर्त्यो
क्तेऽथ कदाचन । देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥' शिवरात्र्येकादश्यादौ

द्भिः । जातूकर्ण्यः—'अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः । अन्यथा ह
श्राद्धं परपाके च सेविते ॥'

श्राद्धशेषभोजनस्य क्वचिन्निषेधमाह हेमाद्रौ प्रायश्चित्तकाण्डे मार्कण्डेयः—'
दीनामथाऽन्येषां श्राद्धशेषान्नभोजनम् । व्रतिनां विधवानां च यतीनां च विगर्हितम्
अन्ये भिन्नगोत्राः । व्रतिनो ब्रह्मचारिणः । 'श्राद्धावशिष्टभोक्तारस्ते वै निरयगामिन
सगोत्राणां सकुल्यानां ज्ञातीनां च न दोषकृत् ॥' इति तत्रैवोक्तेः । तत्रैव जाबालि
'विप्रस्त्वन्यगृहे श्राद्धे शिष्टान्नं भोजनं चरेत् । प्राजापत्यविशुद्धिः स्याज्ज्ञातिगोत्रे न
कृत् ॥' यतीनां वपनं लक्षप्रणवजपश्चेति तत्रैवोक्तम् । अस्यापवादमाह स एव । 'श्वशु
गुरोर्वापि मातुलस्य महात्मनः । ज्येष्ठभ्रातुश्च पुत्रस्य ब्रह्मनिष्ठस्य योगिनः ॥ एतेषां श्र
शिष्टान्नं भुक्त्वा दोषो न विद्यते । इति केचित् प्रशंसन्ति मुनयस्तदसांप्रतम् ॥' वि
न्तरं तत्रैव ज्ञेयम् । हेमाद्रौ जाबालिः—'ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजन
रत्यौषधिपरान्नानि श्राद्धकर्ता विवर्जयेत् ॥' पृथ्वीचन्द्रोदये आचार्यः—'न
भोजयेत्तस्मिन् गृहे यत्नेन तद्दिने । श्राद्धशेषं न शूद्रेभ्यः प्रदद्यादखिलेष्वपि ॥' इ
कमलाकरभट्टकृते निर्णयसिन्धौ पार्वणश्राद्धम् ॥

अथानुकल्पाः । तत्र विप्रालाभे—'भोजयेदथवाप्येकं ब्राह्मणं पंक्तिपावनम् ।
कृत्वा तु नैवेद्यं पश्चात्तस्य तु निर्वपेत् ॥' इति शंखोक्तेरेको विप्रः
मुक्तः । विप्राभावे दर्भवटुः । 'निधाय वा दर्भवटूनासनेषु समाहित

श्राद्धानुकल्पः ।

प्रेषानुप्रेषसंयुक्तं विधानं प्रतिपादयेत् ॥' इति देवलोक्तेः । अशक्तावामश्राद्धम्
'आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि । आमश्राद्धं प्रकुर्वीत भार्यारजसि संक्रमे
इति कात्यायनोक्तेः । पृथ्वीचन्द्रोदये जमदग्निः—'यावत्स्यान्नाग्निसंयुक्त उ
त्नाग्निरथापि वा । आमश्राद्धं तदा कुर्याद्धस्तेऽग्नौकरणं भवेत् ॥' कौर्मे—'अनग्निरध
वापि तथैव व्यसनान्वितः । आमश्राद्धं द्विजः कुर्याद्वृषलस्तु सदैव हि ॥' आहित
प्रवासस्थे तत्पत्नी गृहे दर्शे ऋत्विगादिना कारयेत् । 'अमावास्यादि नियतं प्रोषिते ध
चारिणी । पत्यौ तु कारयेन्नित्यमन्येनाप्यृत्विगादिना ॥' इति लघुहारीतोक्ते
पृथ्वीचन्द्रोदयः । आदिपदमाब्दिकादिसर्वपार्वणपरमिति शूलपाणिः । सुमन्तु
'पाकाभावेऽधिकारः स्याद्विप्रादीनां नराधिप । अपत्नीनां महाबाहो विदेशगमनादिभि
सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः ॥' प्रचेताः—'स्त्रीशूद्रः स्वपचश्चैव जातकर्म
चाप्यथ । आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥' स्वयं पचतीति स्वपचः अ
त्नीकः । विष्णूशनसौ—'आत्मनोदेशकालाभ्यां विप्लवे समुपस्थिते । आपद्यन

र्थे च प्रवासे पत्न्यसंभवे ॥ चन्द्रसूर्यग्रहे चैव दद्यादामं विशेषतः । न पक्वं भोजये-
द्वान् सच्छूद्रोऽपि कदाचन ॥ भोजयन् प्रत्यवायी स्यान्न च तस्य फलं लभेत् ॥
त्र प्रवासतीर्थग्रहणादावामहेमश्राद्धमेव । पाकश्राद्धं तु न भवत्येवेति **हेमाद्रि-**
**त्नावल्यादयः** । **अपरार्कविज्ञानेश्वरादयस्तु**—'पाकाभावे द्विजातीनामाम-
द्धं विधीयते ।' इति **सुमन्तूक्तेः** । साग्निकैर्निरग्निकैश्च प्रवासादौ सर्वत्र पाकाभावे
मादि कार्यम् । पाकसंभवे त्वन्नेनैवेत्याहुः । अत एव पाकश्राद्धमुक्त्वा—'एतच्चानुपनी-
पि कुर्यात्सर्वेषु कर्मसु । भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः' ॥ इति **मात्स्ये**
रग्नेरपि ॥ पाकेनोक्तमिति **शूलपाणिकल्पतरू** । एतच्छब्दः श्राद्धमात्रपर
यन्ये । 'एकोद्दिष्टं तु कर्तव्यं पाकेनैव सदा स्वयम् ।' इति **लघुहारीतीयमपि**
ग्नेरेव । निरग्नेर्महैकोद्दिष्टमप्यामेन । शूद्रस्य तु दशाहपिण्डाद्यामेनेति **हलायुधः** ।
सन्नाग्नीनां त्वामश्राद्धमेव पूर्वोक्त**जमदग्नि**वाक्यात् । **मरीचिः**—'श्राद्धविघ्ने द्विजाती-
मामश्राद्धं प्रकीर्तितम् । अमावास्यादिनियतं माससंवत्सरादृते ॥ **स्मृतिदर्पणे**—'मृताहं
सपिण्डं च गयाश्राद्धं महालयम् । आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित् ॥'
**हेमाद्रौ व्यासः**—'आमं ददत्तु कौन्तेय दद्यादामं चतुर्गुणम् । द्विगुणं त्रिगुणं वापि
त्वेकगुणमर्पयेत् ॥ सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः ॥ आवाहनादि
स्यात्पिण्डदानं च भारत ॥ दद्याद्यच्च द्विजातिभ्यः शृतं वा शृतमेव वा । तेना-
करणं कुर्यात् पिण्डांस्तेनैव निर्वपेत् ॥' पक्षान्तरमाह **स एव**—'आमं ददद्धि कौन्तेय
मं द्विगुणं चरेत् । त्रिगुणं चतुर्गुणं वापि न त्वेकगुणमर्पयेत् ॥' **स्मृत्यर्थसारे**
मप्युक्तम् । **षट्त्रिंशन्मते**—'आमश्राद्धं यदा कुर्यात् पिण्डदानं कथं भवेत् ।
पाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥ पिण्डान्न दद्याद्यथालाभं तिलैः सह
नत्सरः ॥' **पृथ्वीचन्द्रोदये व्यासः**—'आमश्राद्धं यदा कुर्याद्विधिज्ञः श्राद्धदः
। हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः ॥' एतत्साग्नेः । निरग्नेः सदा तत्स-
त् । यत्तु—'आमेन पिण्डं दद्याच्चेद्विमान् पाकेन भोजयेत् । पक्वेन कुरुते पिण्ड-
मान्नं यः प्रयच्छति । तावुभौ मनुजौ मोक्तौ नरकार्हौ न संशयः ॥' इति तद्दर्शा-
परम् । देशाचाराद्व्यवस्थेति युक्तम् । **मरीचिः**—'आवाहने स्वधाकारं मन्त्रा ऊह्या
सर्जने । अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः' आवाहने हविषे अत्तव इत्यत्र
कर्तवे इत्यूहः । स्वधाकारे नमो वः पितर इषे इत्यत्र इषे पदस्थाने आमद्रव्या-
यूहः । विसर्जने वाजेवाजे इत्यत्र तृप्ता इति स्थाने तप्स्यत तृप्यतेति वोहः ।
पि तस्मादृचं नोहेदिति ऋच्यूहो निषिद्धस्तथापि वचनाद्भवति । 'तृप्तिप्रश्नोऽवगा-

**धर्मप्रदीपे** तु-'आमं चतुर्गुणं दद्यादथवा द्विगुणं तथा । हेम चाष्टगुणं
हैमेप्यसौ विधिः ॥ आमे हैमे तथा नित्ये नान्दीश्राद्धे तथैव च । व्यतीप
श्राद्धे नियमान् परिवर्जयेत् ॥ गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा ॥
प्रकुर्वीत आमे हैमे कृते सति । आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।
नैव कुर्वीत मुनिः कात्यायनोब्रवीत् । आमश्राद्धमनङ्गुष्ठमग्नौकरणवर्जितम्
प्रश्नविहीनं तु कर्तव्यं मानवैर्ध्रुवम् । आवाहनाग्नौकरणं विकिरं पात्रपूरणम्
प्रश्नं न कुर्वीत आमे हैमे कदाचन ॥' इत्युक्तम् । एतच्च । 'आवाह
त्कार्यमर्घ्यदानं तथैव च ।' इति **हेमाद्रौ भविष्यादिविरोधाच्चि**
शाखान्तरविषयं वास्तु । विकिरोप्यामेनेति **हेमाद्रिः शूद्रस्य** तु तत्रै
'अग्नौकरणमन्त्रश्च **नमस्कारो** विधीयते ॥' अग्नये कव्यवाहनाय **नमः**
पितृमते नमः इत्थं मन्त्रः । **मात्स्ये**-'मन्त्रवर्ज्यं हि शूद्रस्य सर्वमेव वि
एवं शूद्रोपि सामान्यं वृद्धिश्राद्धं च सर्वदा ॥ नमस्कारेण मन्त्रेण कु
न्नवद्बुधः ॥' तच्च पूर्वाह्णे कार्यम् । 'आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं च मध्यतः
चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्' इति **हारीतोक्तेः** । एतद्द्विजविषयम् ।
त्वपराह्ण एव । 'मध्याह्नात्परतो यस्तु कुतुपः समुदाहृतः । आमश्राद्धं तु तत्रैव
दत्तमक्षयम् ॥' इति **सुमन्तूक्तेरित्यपरार्के हेमाद्रौ** चोक्तम् ॥

तदभावे **हेमश्राद्धमाह हेमाद्रौ मरीचिः**-'आमान्नस्याप्यभावे तु श्रा
बुद्धिमान् । धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा ॥' **धर्मः**-'आमं तु द्विगु
हेमं तद्वच्चतुर्गुणम् ॥' **स्मृत्यर्थसारे**-'हिरण्यमष्टगुणं चतुर्गुणं समं वा द
**हेमाद्रौ भविष्ये**-'अन्नाभावे द्विजाभावे प्रवासे पुत्रजन्मनि । हेमश्राद्धं संग्रहे
स्त्रीशूद्रयोरपि ॥' **षट्त्रिंशन्मते** तुर्यपादे-'वर्जयित्वा क्षयेहनि' इति पाठः
भार्या रजस्वला' इति **व्यासपाठः** । पुत्रोत्पत्तौ तु हेमनियममाह **संवर्तः**
न्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् । न पक्वेन न चामेन कल्याणान्यभिका
**भविष्ये**-'गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा । पिण्डदानं प्रकुर्वीत
कृते सति ॥ शूद्रस्तु गृहपाकेन तत् पिण्डान्निर्वपेत्तथा । सक्तुमूलं फलं तस
वा भवेत्स्मृतम् ॥' 'हेमश्राद्धे पिण्डदानं न' इति **दिवोदासः** । **स्मृ**
तु-विकल्प उक्तस्तदाशयं न विद्मः । **षट्त्रिंशन्मते**-'नामन्त्रणाग्नौ करणं
नैव दीयते । तृप्तिप्रश्नोपि नैवात्र कर्तव्यः केनाचिद्भवेत् ॥ अत्र **मरीचिन**

तेनापि श्राद्धवैश्वदेवादि न कार्यम् । देवोद्देशेन त्यक्तस्य देवतान्तरायत्यागायोग
देवयाज्ञिकः । शूद्रलब्धे तूक्तं तत्रैव षट्त्रिंशन्मते—'आमं शूद्रस्य यत् किंचि
द्विकं प्रतिगृह्यते । तत्सर्वं भोजनायालं नित्यनैमित्तिकेन च ॥' इति । शुद्धत
ङ्गिराः—'शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं
स्मृतम् ॥ शूद्राद्विप्रगृहेष्वन्नं प्रविष्टं तु सदा शुचिः ॥' पराशरः—'तावद्भवति श
यावन्न स्पृशति द्विजः । द्विजातिकरसंस्पृष्टं सर्वं तन्न विरुद्ध्यते ॥' विष्णुपुराणे—'
क्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् ॥' अंगिराः—'पात्रान्तरगतं ग्राह्यं दुग्धं स्व
मागतम् ॥'

सपिण्डश्राद्धाशक्तावाह हेमाद्रौ संवर्तः—'समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्व
अपि संकल्पविधिना काले तस्य विधीयते ॥ पात्रे भोज्यस्य चान्नस्य त्यागः सं
उच्यते' ॥ व्यासः—'सांकल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरण
नावाहनाग्नौकरणे पिण्डांश्चैव न दापयेत् ॥' पात्रमर्घ्यस्य । समन्त्र

सांकल्पिकश्राद्धम् ।

वाहनस्य निषेधः । तूष्णीं[2] तु भवत्येवेति हेमाद्रिः । स्मृत्यर्थसारे—'विकिरं तु
दातव्यम्' इति तृतीयपादे पाठः । स्मृत्यन्तरे—'त्यजेदावाहनं चार्घ्यमग्नौकर
च । पिण्डांश्च विकिराक्षय्ये श्राद्धे सांकल्पसंज्ञके ॥ 'हेमाद्रौ वृद्धशातातप
'पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते । स्वधावाचनलोपोत्र विकिरस्तु न लुप्यते
इत्याह । पृथ्वीचन्द्रोदये वसिष्ठः—'आवाहनं स्वधाशब्दं पिण्डाग्नौकरणं त
विकिरं पिण्डदानं च सांकल्पे षड्विवर्जयेत् ॥' विकिरे विकल्पः स्मृत्यन्तरे—'अ
पितृयज्ञस्य यदा कर्तुं न शक्नुयात् । स तदा वाचयेद्विप्रान् संकल्पात्सिद्धिरस्त्विति
छागलेयः—'पिण्डो यत्र निवर्तेत मघादिषु कथंचन । सांकल्पं तु तदा कार्यं नि
ब्रह्मवादिभिः ॥' कार्ष्णाजिनिः—'मौञ्जीबन्धाद्वत्सरार्धं वत्सरं पाणिपीडनात् । पिण
सपिण्डा नो दद्युः प्रेतपिण्डं विनात्र तु ॥' अस्यापवादः पित्रोराब्दिकादौ पूर्वमुक्त

---

१—तत्पाकश्च शूद्रगृहे न कार्यः । 'शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आगतम् । पक्वं विप्रगृहे
भोज्यं तन्मनुरब्रवीत् ।' इति पराशरमाधवीयस्मरणात् । २—अमन्त्रकावाहनाकरणे देवताया अ
धानप्रसंगेन श्राद्धानिष्पत्तिप्रसंगात् । नवीनास्तु—पितृविग्रहः स्वीकार्यः । अन्यथा धर्माधर्मफलभो
नुपपत्तेः । एवं तत्तृप्तिरपि श्राद्धफलत्वेन स्वीकार्या । देवताधिकरणे देवतातृप्तेर्निराकरणेपि रात्रि
न्यायेन पितृतृप्तित्वेन तस्या दुर्वारत्वात् । नत्वागमनरूपं सांनिध्यं मानाभावात् । यत्तु—'अ
प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति यथा राज्यं प्रीता नृणां पितामहाः' । इति श्र
दफलदातृत्वम्' तदपि नोपेयते अर्थवादैकत्वात् । तस्मात्सांनिध्यफलदातृत्वयोरनुपगमादमन्त्रकाव
वृथैवेत्याहुः । इति टीका ।

त्यक्ताग्नेरपि सांकल्पमुक्तं **षट्त्रिंशन्मते**–'अनग्निको यदा विप्र उत्सन्नाग्निस्तथैव च
तथा वृद्धिषु सर्वासु संकल्पश्राद्धमाचरेत् ॥'

अशक्तौ **पृथ्वीचन्द्रोदये बृहन्नारदीये**–'द्रव्याभावेद्विजाभावे अन्नमात्रं तु पाच
येत् । पैतृकेन तु सूक्तेन होमं कुर्याद्विचक्षणः ॥' **देवलः**–'पिण्डमात्रं प्रदातव्यमभा
द्रव्यविप्रयोः । श्राद्धीयाहनि संप्राप्ते भवेन्निरशनोपि वा ॥' **वृद्धवसिष्ठः**–'किंचिद्द्य
दशक्तस्तु उदकुम्भादिकं द्विजे । तृणानि वा गवे दद्यात् पिण्डान्वाप्यथ निर्वपेत् ॥ तिल
दर्भैः पितॄन्वापि तर्पयेत्स्नानपूर्वकम् ॥' **हेमाद्रौ भविष्ये**–'अग्निना वा दहेत् क
श्राद्धकाले समागते । तस्मिन्वोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ॥' श्राद्धसंहिता समन्
श्राद्धसंकल्पः । **विष्णुवराहपुराणयोः**–'असमर्थोन्नदानस्य धान्यं मांसं स्वशक्तितः
प्रदास्यति तिलान्वापि स्वल्पां वापि च दक्षिणाम् ॥ सर्वाभावे वनं गत्वा कक्षामूलप्र
र्शकः । सूर्यादिलोकपालानामिदमुच्चैः पठिष्यति ॥ न मेस्ति वित्तं न धनं नचान्नं श्राद्धो
पयोगि स्वपितॄन्नतोस्मि । तृप्यन्तु भक्त्या पितरौ मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य
इत्येतत् पितृभिर्गीतं भावाभावप्रयोजनम् । यः करोति कृतं तेन श्राद्धं भवति भारत ।
**प्रभासखण्डे**–'गत्वारण्यममानुष्यमूर्ध्वबाहुर्विरौत्यदः । निरन्नो निर्धनो देवाः पित
मानृणं कृथाः ॥ न मेस्ति वित्तं न धनं न भार्या श्राद्धं कथं वः पितरः करोमि । व
प्रविश्येह तु तन्मयोच्चैर्भुजौ कृतौ वर्त्मनि मारुतस्य ॥ श्राद्धर्णमेतद्भवतां प्रदत्तं म
दयध्वं पितृदेवताद्याः । आख्याय चोत्क्षिप्य भुजौ ततो वै दिवा च रात्रिं समुपोष्
तिष्ठेत् ॥ भवेत्स वै तेन कृतेन तेषामृणेन मुक्तः पितृदेवतानाम् ॥' **इत्यनुकल्पाः**

**अथ श्राद्धभोजने प्रायश्चित्तम्** । दर्शे षट् प्राणायामाः । वृद्धौ त्रयः । संस्क
रेषु जातकर्मादि चूडान्तेषु सांतपनम् । आद्ये चान्द्रं वा । अन्यसंस्कारेषूपवासः
सीमन्ते चान्द्रमिति **विज्ञानेश्वरः** । आपदि नवश्राद्धैकादशा
भोजने कायः ॥ द्वादशाहे ऊनमासे च पादोनः । द्विमासे त्रिपक्षे उ

श्राद्धभोजने प्रायश्चित्त-निर्णयः ।

षष्ठोनाब्दयोश्चार्द्धकृच्छ्रः । त्रिमासाद्याब्दिकान्तेषु सपिण्डने च पादकृच्छ्र उपवासो
गुरुद्रव्यार्थभोजनेर्द्धम् । जपशीले तदर्धम् । अनापदि तूनमासान्तेषु चान्द्रं कार्यं व
द्विमासादौ पादोनम् । त्रिमासावर्द्धकायः । आब्दिके पादोनकायः । पुनराब्दिके एका
क्षत्रियादिश्राद्धेषु द्वित्रिचतुर्गुणानि ज्ञेयानि । चाण्डालसर्पश्वादिहतपतितक्लीबादिनवश्र
चान्द्रम् । आद्यमासिकान्ते चान्द्रं पराकश्च । द्वादशाहादौ पराकः । द्विमासादाव
कृच्छ्रः । त्रिमासादौ कायः। आब्दिके पादः । अभ्यासे सर्वं द्विगुणम् । आमहेमसंकल्

र्यः । एकादशाहे चान्द्रं पुनःसंस्कारश्चेति प्रायश्चित्तकाण्डे हेमाद्रिः यत्तूशन 'दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।' इति तदनुक्तप्रायश्चित्तश्राद्धपरमि विज्ञानेश्वरः ॥

क्षयाहश्राद्धनिर्णयः ।

**अथ क्षयाहश्राद्धम्** । तत्स्वरूपमाह **हेमाद्रौ व्यासः**–'मासपक्षतिथिस यो यस्मिन् म्रियतेऽहनि । प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः **नारदीये**–'पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।' अ चान्द्रं मानं ज्ञेयम् । 'आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ।' इति **गर्गो** मलमासमृतस्य तु सौरम् । 'मलमासमृतानां तु सौरं मानं समाश्रयेत् ।' इति **हे द्रावुक्तेः** । एतन्मृतमासस्यैवाधिक्ये ज्ञेयम् । **ब्राह्मे**–'प्रतिसंवत्सरं कार्यं मातापि मृतेऽहनि । पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥' अपुत्रस्येति भ्रात्राप्यन्वय ज्येष्ठस्येति कनिष्ठस्यानावश्यकत्वार्थम् । **मदनरत्ने भविष्ये**–'सर्वेषामेव श्राद्ध श्रेष्ठं सांवत्सरं मतम् ॥' **तथा**–'भोजको यस्तु वै श्राद्धं न करोति खगाधिप ॥ मा पितृभ्यां सततं वर्षेवर्षे मृतेऽहनि ॥ स याति नरकं घोरं तामिस्रं नाम नामतः ॥' नानास्मृतिष्वेकोद्दिष्टं पार्वणं चोक्तम् । आद्यमाह **यमः**–'सपिण्डीकरणादूर्ध्वं प्रति वत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ॥' **व्यासः**–'एकोद्दिष्टं तु कर्त पित्रोश्चैव मृतेऽहनि । एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद्भ पितृघातकः ॥' अन्त्यमाह **शातातपः**–'सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत्सद प्रतिसंवत्सरं श्राद्धं छागलेनोदितो विधिः ॥ यः सपिण्डीकृतं प्रेतं पृथक्पिण्डे निय येत् । विधिघ्नस्तेन भवति पितृहा चोपजायते ॥' अत्रौरसक्षेत्रजयोः पार्वणं दत्तकादी मेकोद्दिष्टमित्येकः पक्षः । साग्नेः पार्वणं निरग्नेरेकोद्दिष्टमित्यपरः । तद्दूषणं **मिता रादौ** ज्ञेयम् । **कल्पतरुस्तु**–'साग्न्योरौरसक्षेत्रजयोः पार्वणम् । निरग्निकयोस्त्वे द्दिष्टम्' इत्याह । **अपरार्केप्येवम्** । दत्तकादयो दश पुत्रास्तु साग्नयो निरग्नयश्चैको ष्टमेव कुर्युः । 'प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं दश ।' इति **जातूकर्ण्योक्तेः** । यदा तु दत्तकस्य पिता दर्शे महालये वा मृतर पार्वणैकोद्दिष्टयोर्विकल्पः । वस्तुतस्तु सर्वेषां पार्वणैकोद्दिष्टयोर्व्रीहियववद्विकल्पः । स देशाचाराद्व्यवस्थित इति सर्वनिबन्धसिद्धान्तः । अतएव **पृथ्वीचन्द्रोदये वृद्धप शरः**–'मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि ।' इत्युक्त्वाह 'देशधर्मं समाश्रि

पार्वणमेव । 'अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः । पार्वणं तस्य कर्तव्यं नै
कदाचन ॥' इति । शङ्खोक्तेः ॥

एवं संन्यासिनोपि-'एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह । सपिण्डीकरण
पार्वणं तस्य सर्वदा ॥' इति **प्रचेतसोक्तेः** । **वायवीये**-'संन्यासिनोप्याब्दिका
कुर्याद्यथाविधि । महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं हि तत् ॥' **पृथ्वीचन्**
**वृद्धपराशरः**-'संग्रामे संस्थितानां च प्रेतपक्षे शशिक्षये । तेषां पार्वणमेवोक्तं ध
च सत्तमैः ॥ चन्द्रक्षयानाशकसंयुगेषु यः प्रेतपक्षे मृतवान् सपिण्डः । सपिण्डित
चाब्दिकानि भवन्ति तेषामिह पार्वणानि ॥' **तथा**-'भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो
नुजस्य च । दैवहीनं तु तत्कुर्यादिति धर्मविदब्रवीत् ॥' दैवहीनमेकोद्दिष्टम् । ज्येष्ठ
नाद्यगर्भजः । तथा च तत्रैव **शातातपः**-'अनाद्यगर्भज्येष्ठोपि भ्राता सद्भिर्नि
ऋते सपिण्डनात्तस्य नैव पार्वणमाचरेत् ॥' आद्यगर्भे तु पार्वणमेकोद्दिष्टं वेत
मातुस्तु **हेमाद्रौ कात्यायनः**-'प्रत्यब्दं यो यथा कुर्यात् पुत्रः पित्रे सदा
तथैव मातुः कर्तव्यं पार्वणं चान्यदेव वा ॥' **यत्तु** तेनैवोक्तम्-'सपिण्डीकर
पित्रोरेव हि पार्वणम् । पितृव्यभ्रातृमातॄणामेकोद्दिष्टं सदैव तु' ॥ इति तत्साप
परम् । यत्तु **वृद्धपराशरः**-'अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् । स
तु कुर्वीत पिण्डदानादिकां क्रियाम् ॥ पार्वणं तेन कार्यं स्यात्पुत्रवद्भ्रातृजेन तु
स्थाने तु तं कृत्वा शेषं पूर्ववदुच्चरेत्' ॥ इति । तत्पितृवद्देशाचारवद्व्यवास्थि
**पृथ्वीचन्द्रः । श्राद्धदीपकलिकायां चतुर्विंशतिमते** तु-'पितृव्यभ्रातृ
ज्येष्ठानां पार्वणं भवेत् । एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः ॥ अपुत्रस्य
व्यस्य भ्रातुश्चैवाग्रजन्मनः । मातामहस्य तत्पत्न्याः श्राद्धं पार्वणवद्भवेत्' ॥
तत्पत्न्याः कर्तृत्वेपि पार्वणमेव । 'सर्वाभावे स्वयं पत्न्यः स्वभ्रातॄणाममन्त्रकम्
ण्डीकरणं कुर्युस्ततः पार्वणमेव च' ॥ इति **लौगाक्षिस्मृतेः** । 'ततः
कुर्वीत सापिण्ड्यं पार्वणं तथा ।' इति **सुमन्तूक्तेश्चेति निर्णयामृते** उक्तम्
त्वेतत्पाक्षिकपार्वणपरमाहुः । अत एव-'भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमा
न तेन तृप्यते भर्ता कृत्वा तु नरकं व्रजेत् ॥' इति वचनं क्षयाहे पाक्षिकैकोद्दि
सार्थं न पार्वणनिषेधार्थमित्युक्तं **त्रिस्थलीसेतौ भट्टचरणैः** । 'स्वभर्तृप्रभृति
इत्यनेन विरोधाच्च ॥

अपुत्राणां चाह **हेमाद्रावापस्तम्बः**-'अपुत्रा ये मृताः केचित् स्त्रियो वा

भवा च या । तयोश्च नैव कुर्वीत पार्वणं पिण्डनादृते ॥' **प्रचेताः**–'सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते । अपुत्राणां च सर्वेषामपत्नीनां तथैव च ॥' अपत्नीनां ब्रह्मचार्यादीनाम् । **मार्कण्डेयपुराणे**–'प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः । मृताहनि यथान्यायं नृणां यद्वदिहोदितम् ॥' नृणामिति दृष्टान्ताद्गोविप्रहतपाखण्ड्यादीनां सपिण्डनाभावेपि सांवत्सरमेकोद्दिष्टं कार्यमेवेति **शूलपाणिः** । **अत्रिवृद्धवसिष्ठौ**–'सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते । भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ॥ पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥' यत्तु **जातूकर्ण्यः**–'पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च । मातामहस्यासुतस्य श्राद्धादि पितृवद्भवेत् ॥' इति । तदावश्यकत्वार्थं न तु पार्वणार्थमिति **हेमाद्रिः** । युक्तं त्वेवम् । 'मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः । तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः' ॥ इति **पुलस्त्योक्ते**र्मातामहस्य पार्वणमेव । तत्साहचर्यात् पितृव्यादौ तथा । 'पितृव्यभ्रातृमातॄणामेकोद्दिष्टं च पार्वणम्' । इति क्षयाहोक्तोपक्रमे **पुलस्त्योक्ते**श्च विकल्पः । केचित्त्वापस्तम्बादिवाक्यानि–'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ।' इत्यस्य पितृव्यादिपरत्वादकृतसपिण्डनपितृव्यादिपराणीत्याहुः । माता सपत्नमाता । एकोद्दिष्टं तु कनिष्ठपरमिति । **पृथ्वीचन्द्रोदये**प्येवम् । विशेषस्त्वधिकारिनिर्णये प्रागुक्तः । केचित् पुत्रान्तराभावेपि पितामहवार्षिकमप्यावश्यकम् । 'पुत्राभावे च तत् पुत्राः पत्नी माता तथा पिता । वित्ताभावेपि सच्छिष्यः कुर्यात्तस्यौर्ध्वदेहिकम्' ॥ इति **मार्कण्डेयपुराणादि**त्याहुस्तन्न । 'पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम्' । इति **कातीये** विशेषोक्तेः ॥

**अथ क्षयाहद्वैधे निर्णयः** । तत्रैकोद्दिष्टं मध्याह्ने कार्यम् । मध्याह्नश्च पञ्चधा विभक्तदिनतृतीयभाग इति **माधवः** । 'आमश्राद्धं तु पूर्वाह्णे एकोद्दिष्टं तु मध्यमे । पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्' ॥ इति **हारीतोक्तौ** प्रातःशब्दसाहचर्यात् । तत्रापि कुतुपादिषु मुहूर्तद्वितये ज्ञेयम् । 'प्रारभ्य कुरुते श्राद्धं कुर्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणं तु न लंघयेत् ॥' इति **गौतमोक्ते**रेतत्परत्वात् । रौहिणो नवमो मुहूर्तः । **मैथिलाः श्राद्धकौमुदी** चैवम् । **अन्यथा**–'ऊर्ध्वं मुहूर्तात् कुतुपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥' इत्यादिविरोधात् । **दीपिकापि**–'एकोद्दिष्टमुपक्रमेत कुतुपे' इति । **माधवीये व्यासोपि**–'कुतुपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्तनसमीपे वा

क्षयाहद्वैधे निर्णयः।

---

१–यस्तु–'अपराह्णः पितृणाम्' इत्यपराह्णः, यश्च 'पित्र्यं वास्तमिते रवौ' इति सायाह्नः योपि

तत्रैव नियतत्वात्मवात् ॥' **पृथ्वीचन्द्रोदये**प्येवम् । तेन कुतुपादिरौहिणान्त
कालः । दिनद्वये तद्व्याप्तौ समव्याप्तौ च पूर्वा । विषमव्याप्तावाधिक्येन
अव्याप्तौ पूर्वैव । परविद्धाया निषेधात् सा च पूर्वदिने रौहिणलंघनापत्तेः परैवेति
शुक्लकृष्णवशात्खर्वदर्पाद्यैर्वा व्यवस्थेत्यन्ये । तन्न । परविद्धानिषेधप्राबल्यात्।
**कालमाधवीये** ज्ञेयम् ॥

पार्वणं त्वपराह्णे कार्यं पूर्वोक्तवचनात् । 'मध्याह्नव्यापिनी या स्यात्सैकोद्दि
भवेत् । अपराह्णव्यापिनी या पार्वणे सा तिथिर्भवेत् ॥' इति **पृथ्वीच**
**वृद्धगौतमोक्तेश्च** । पूर्वेद्युरेव परेद्युरेव वाऽपराह्णव्याप्तौ सैव ग्राह्या । दिनद्वये
तदस्पर्शेऽशतः समव्याप्तौ वा पूर्वैव । विषमव्याप्तौ त्वधिका ग्राह्या । 'द्व्य
पिनी स्यादाब्दिकस्य यदा तिथिः । महती यत्र तद्विद्धां प्रशंसन्ति महर्षयः
**मरीचिस्मृतेः** । 'दर्शं च पूर्णमासं च पितुः सांवत्सरं दिनम् । पूर्वविद्धामकुर्व
प्रतिपद्यते' इत्यपरार्के **नारदोक्तेः** । 'द्व्यहेप्यव्यापिनी चेत्स्यान्मृताहस्य यत
पूर्वविद्धा प्रकर्तव्या त्रिमुहूर्ता भवेद्यदि ॥' इति **सुमन्तूक्तेः** । 'पूर्वस्यां निर्वपे
नित्याङ्गिरसभाषितम् ।' इति **हेमाद्रौ** पाठः । तत्रैव **वृद्धमनुः**-'न द्व्य
चेत्स्यान्मृताहस्य च या तिथिः । पूर्वविद्धैव कर्तव्या त्रिमुहूर्ता च या भवेत् ॥
रत्ने प्येवम् । यत्तु **कार्ष्णाजिनिव्यासौ**-'अह्नोस्तमयवेलायां कलाम
तिथिः । सैव प्रत्याब्दिके ज्ञेया नापरा पुत्रहानिदा ॥' इति त्रिमुहूर्तस्तुतिः
सायं त्रिमुहूर्ताभावे तु परैव । 'त्रिमुहूर्ता न चेत् ग्राह्या परैव कुतुपे हि सा
**कालादर्शे गोभिलोक्तेः** । **कालादर्शे**ऽपि-'प्रत्याब्दिकेप्येवमेव तिथि
ह्णिकी । उभयत्र तथात्वे तु महत्त्वेन विनिर्णयः । समत्वे पूर्वविद्धैव ह्यतथा
यादि ॥ त्रिमुहूर्ता भवेत्सायं सर्वेष्टोयं विनिर्णयः ॥' **अन्यत्रापि**-'सायंतन्यपरत्र
तिथिः सैवाब्दिके मासिके ग्राह्या सा द्व्यपराह्णयोर्यदि तदा यत्राधिका स
तुल्या चेदुभयापराह्णसमये पूर्वा न चेत्तु द्वये, पूर्वैव त्रिमुहूर्तगास्तसमये
रैवोचिता ॥'

**माधवपृथ्वीचन्द्रौ** तु-'दिनद्वयेपराह्णव्याप्तौ अंशतः समव्याप्तौ च क्षये
परा ॥' 'खर्वदर्पौ परौ पूज्यौ' इत्युक्तेः । 'अपराह्णद्वयव्यापिन्यतीतस्य च या
क्षये पूर्वा च कर्तव्या वृद्धौ कार्या तथोत्तरा ॥' इति **बौधायनोक्तेः** ।
तिथिर्या तु अपराह्णद्वये यदि । पूर्वा क्षये तु कर्तव्या वृद्धौ कार्या तथोत्तरा ॥' इ

न्नारदीयाच्चेत्याहुः । वृद्धिक्षयौ चात्र परतिथेर्न तु ग्राह्यतिथेः । तस्याः क्षये पराह्ण
व्याप्तेरसंभवात् । तदाह **माधवः**–'न ग्राह्यतिथिगौ वृद्धिक्षयावूर्ध्वतिथेस्तु तौ ।' इति
यत्तु **पृथ्वीचन्द्रः**–'पूर्वोक्तवचनेषु यत्र सायाह्नास्तमययोगिनी तिथिरुक्ता तत्रापरा
व्यापिनी ज्ञेया ।' 'सायाह्नस्त्रिमुहूर्तः स्यात्तत्र श्राद्धं न कारयेत् ।' इति **मात्स्या**
सायाह्ननिषेधात् । यच्च 'त्रिमुहूर्तादिग्रहणं तच्छ्राद्धार्हापराह्णरूपत्रिमुहूर्तपरम्' इत्याह
**तद्धेमाद्रिमदनरत्नकालादर्शा**दिग्रन्थविरोधाल्लक्षणापत्तेश्च चिन्त्यम् । तस्मात् पू
क्तमेव साधु । यदा विघ्नवशाद्दिने सांवत्सरश्राद्धं न कृतं तदा रात्रावपि कार्यम् । 'मृत
समतिक्रम्य चण्डालेष्वभिजायते ।' इति **मरीचिना** मृताहातिक्रमे दोषोक्तेः । 'न
नक्तं श्राद्धं कुर्वीतारब्धे वा भोजनसमापनम्' इत्या**पस्तम्बेन** गौणकालोक्तेश्चे
**माधवः** । आरब्धे श्राद्ध विघ्नवशाद्रात्रिभागे पाते भोजनसमाप्त्यन्ते रात्रौ कार्यम्
शेषसमाप्तिः परदिने एवेति **हरदत्तः** । ग्रहणादिने वार्षिकप्राप्तौ तद्दिन एवान्नेनाम
हेम्ना वा कुर्यात् । नोत्तरदिने इत्युक्तं प्राक् **ग्रहणनिर्णये** । तत्र प्रथमाब्दिकं त्र
दशे मलमासे कार्यम् । अन्यथा न । 'प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतै
क्वचित् त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥' इति **लघुहारीतोक्तेः** । इद
न्त्याधिकमासपरम् । द्वादशे त्रयोदशे वातीत इत्यर्थः तेन यत्र द्वादशमासिकं शुद्धम
भवति तत्र त्रयोदशेऽधिके एवाब्दिकं कार्यम् । यत्राधिकमध्ये द्वादशं मासिकं तत्र त
द्विरावृत्तिं कृत्वा चतुर्दशे शुद्धे एव प्रथमाब्दिकमिति **माधवीये** । **हेमाद्रौ** चैवम्
द्वितीयाब्दिकं तु शुद्धमासे एव नाधिके, नाप्युभयोः । मलमासमृतानां तु यदा स ए
धिकः स्यात्तदा तत्रैव कार्यमन्यथा शुद्ध एवेति प्रागुक्तम् ॥

दर्शे वार्षिकं चेत्तदा पूर्वं वार्षिकं कृत्वा ततः पिण्डपितृयज्ञो दर्शश्राद्धं चेति **निर्णयदी**
क्रम उक्तः । **स्मृतिसारेऽपि**–'दर्शे क्षयाहे संप्राप्ते कथं कुर्वन्ति याज्ञिकाः । आदौ क्षय
निर्वर्त्य पश्चाद्दर्शो विधीयते ॥' इति । युक्तं त्वेवम् । तद्वचने मूलाभावात् । 'पिंडयज्ञं त
कुर्यात्ततोन्वाहार्यकं बुधः ।' इति दर्शश्राद्धे पिण्डपितृयज्ञानन्तर्यात्तस्याब्दिकेप्यतिदेश
प्राप्तेः । 'पितृयज्ञानन्तरं वार्षिकं ततो दर्शश्राद्धम्' इति व्यतिषङ्गस्तु न भवत्येव । तस्
र्थिकत्वात् **कालादर्शेऽपि**–'निमित्तानि यतश्चात्र पूर्वानुष्ठानकारणम् ।' इति सव
प्रत्यैकरूप्याभावात् क्षयाहनिमित्तस्यानियतत्वम् । **देवजानीयेप्येवम्** । एवं मासिक
दिष्वपि ज्ञेयम् ॥ 'प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि ।' इति सर्वातिदेशात
मृताहे वृषोत्सर्ग उक्तो **हेमाद्रौ विष्णुधर्मे**–'अयनद्वितये चैव मृताहे बान्धवस्य च

च्छ्राद्धभोजनम् ॥ प्रथमेस्थीनि मज्जा च द्वितीये मांसभक्षणम् । तृतीये रुधिरं श्राद्धं शुद्धं चतुर्थकम् ॥' इति **श्राद्धकारिकोक्तेः** ' शुद्धं किंचिदिति ज्ञेयम् । **स्म न्तरे**—'सप्तत्रिंशच्च यो मासान् श्राद्धे भुंक्ते तमोहतः । स पंक्तिदूषितः पापः प्रेता भवेत्तु सः ॥' तत्र प्रथमेब्दे वर्षान्तसपिण्डनपक्षे मृताहात्पूर्वेह्नि सपिण्डनमब्दपूर्ति च कृत्वा परेद्युर्वार्षिकं कुर्यात् इति **स्मृत्यर्थसारे** उक्तम् । **हेमाद्रिस्तु** मृताहे सपि करणेनैव वार्षिकसिद्धिः । पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः । तेनैव च ण्डत्वं तेनैवाब्दिकमिष्यते ॥' इति वचनादित्याह । इदमेव युक्तम् ॥

**अथ क्षयाहाज्ञाने मरीचिः**—'श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेहनि । एका तु कर्तव्यं कृष्णपक्षे विशेषतः ॥' विशेषत इत्युक्तेः शुक्लैकादश्याम **बृहस्पतिः**—'न ज्ञायते मृताहश्चेत् प्रमीते प्रोषिते सति । मा

क्षयाहाज्ञाने निर्णयः ।

प्रतिविज्ञातस्तद्दर्शे स्यादथाब्दिकम् ॥ दिनमासौ न विज्ञातौ मरणस्य यदा पुनः । प्र मासदिवसौ ग्राह्यौ पूर्वोक्तया दिशा ॥' **मदनरत्ने भविष्ये**—'मृताहं यो न ज मानवो विनतात्मज । तेन कार्यममावास्यां श्राद्धं सांवत्सरं सदा ॥ दिनमेव तु ज मासं नैव तु यो नरः । मार्गशीर्षे तथा भाद्रे माघे वा तद्दिनं भवेत् ॥' **निर्णयामृत** यदा मासो न विज्ञातो विज्ञातं दिनमेव तु । तदा चाषाढके मासि माघे वा तद्दिनं भ इति **बृहस्पतिस्मृतेराषाढोप्युक्तः** । **कालादर्शेपि**—'मासाज्ञाने दिनज्ञाने क षाढमाघयोः ।' इत्युक्तम् । **हेमाद्रौ प्रभासखण्डे**—'मृताहं यो न जानाति मासं कथंचन । तेन कार्यममावास्यां श्राद्धं माघेथ मार्गके ॥' **भविष्ये**—'मृतवार्ताश्रुते तौ पूर्वोक्तक्रमेण तु ।' पूर्वोक्तेति प्रस्थानदिनाज्ञाने मासज्ञाने च तद्दर्शे मासाज्ञाने ज्ञाने च मार्गादावितिवच्छ्रवणदिनेपि ज्ञेयमित्यर्थः । श्रवणदिने मासाज्ञाने माघम कार्यं पूर्वोक्तप्रभासखण्डात् । अतोत्र लोप इति शूलपाण्युक्तं हेयम् । **तिथि यमः**—'गतस्य न भवेद्वार्ता यावद् द्वादशवार्षिकी । प्रेतावधारणं तस्य कर्तव्यं न्धवैः ॥ यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया । दिनाज्ञानं कुहूस्तस्य आषा थवा कुहूः ॥'

**अथ श्राद्धविघ्ने निर्णयः** । तत्र विप्रस्य निमन्त्रणोत्तरं सूतके मृतके चा भावः । 'निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि । निमन्त्रणाद्धि विप्रस्य स्वाध्य रतस्य च ॥ देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित् ।' इति **ब्राह्मोक्तेः** । **विष्णुराह**—'व्रतयज्ञाववाहेषु श्राद्धे होमेऽर्चने जपे । आरब्धे सूतकं न स्यादना

न्त्रणोत्तरं कर्तुर्भोक्तुश्च नाशौचम्। 'निमन्त्रणोत्तरं श्राद्धे प्रारम्भः स्यादिति स्मृ
इति विष्णूक्तेः। यत्तु 'श्राद्धे पाकपरिक्रिया' इति तद्दर्शश्राद्धविषयमित्याहुः।
मरणादौ ब्राह्मे उक्तम्। 'भोजनार्द्धे तु संभुक्ते विप्रैर्दातुर्विपद्यते ॥' गृहे इति
'यदा कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहितः। आचम्य परकीयेन जलेन
द्विजाः ॥' इति। अस्य श्राद्धविषयत्वं हेमाद्रिणोक्तम्। पृथ्वीचन्द्रोदयेप्ये
मम तु प्रतिभातीदं विवाहादिविषयम्। न तु श्राद्धविषयं तत्पदाभावात्। 'विवा
यज्ञेषु' इत्युपक्रम्य—'भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके। अन्यगेहोदका
सर्वे ते शुचयः स्मृताः ॥' इति षट्त्रिंशन्मतैकवाक्यत्वात्। 'निम
विप्रेषु प्रारब्धे श्राद्धकर्मणि।' इति पूर्वोक्तविरोधाच्च। श्राद्धे तु यद्यपि वि
पाकोत्तरमाशौचाभाव उक्तस्तथापि कर्तुरेव सः, भोक्तुर्दोषोस्त्येव। 'अपि दातृग
सूतके मृतके तथा। अविज्ञाने न दोषः स्याच्छ्राद्धादिषु कथंचन ॥ विज्ञाने
स्यात् प्रायश्चित्तादिकं क्रमात्।' इति माधवीये ब्राह्मोक्तेः। आदिशब्दे
सुच्यते। तत्राह विष्णुः—'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य
शौचम्। यावत्तेषामाशौचव्यपगमे प्रायश्चित्तं कुर्यात्' इति। यत्तु—'देहे पितृ
नाशौचं विद्यते क्वचित्।' इति ब्राह्मं तत् श्राद्धकालीनस्य निषेधकम्। न
कालीनस्य। शुद्धिदीपस्तु निमन्त्रितेष्वित्यामश्राद्धपरम्। भोजनार्थेष्वित्य
श्राद्धपरमित्याह ॥

प्रायश्चित्तं त्वाह मार्कण्डेयः—'भुक्त्वा तु ब्राह्मणाशौचं चरेत्सांतपनं
एतत्कामतः। अभ्यासे शङ्खः—'ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रती
इति। अज्ञानात्तु छागलेयः—'एकाहं च त्र्यहं पञ्च सप्तरात्रमभोजनम्। त
भवेद्विप्रः पञ्चगव्यं पिबेन्नरः ॥' इति वर्णक्रमेणेदम्। अभ्यासे तु द्वैगुण्य
मिताक्षरामाधवीयादौ ज्ञेयम् ॥ मिताक्षरामाधवादौ तु श्राद्धे क
सर्वथा दोषाभाव उक्तः। आशौचमध्ये श्राद्धदिनप्राप्तौ तु माधवीये क
च ऋष्यशृङ्गः—'देये पितॄणां श्राद्धे तु आशौचं जायते यदा। आशौचे तु व
तेभ्यः श्राद्धं प्रदीयते ॥' श्राद्धचिन्तामणौ ज्योतिषे—'प्रतिसांवत्सरं श्र
चात् पतितं च यत्। मलमासेपि तत् कार्यमिति भागुरिभाषितम् ॥' आशौच
त्वेन निमित्तत्वादित्यर्थः। एतन्मासिकादिपरं न दार्शिकादौ ॥ अत एव
[illegible] अपरपक्षे पित्र्याणीति नियमात् कृष्णपक्षश्राद्धलोपे प्रायश्चित्तमेव न

आशौचान्ते सम्भवे तु **व्यासः**-'श्राद्धविघ्ने समुत्पन्ने त्वन्तरामृतसूतके । अ स्यां प्रकुर्याद्धै शुद्धावेके मनीषिणः ॥' **हेमाद्रौ षट्त्रिंशन्मतेऽपि**-'मासिके चा त्वाह्नि संप्राप्ते मृतसूतके । वदन्ति शुद्धौ तत्कार्यं दर्शे चापि विचक्षणाः ॥' **गोभि** 'देये प्रत्याब्दिके श्राद्धे अन्तरा मृतसूतके । आशौचानन्तरं कुर्यात्तन्मासेंदुक्षये तथ **मरीचिः**-'श्राद्धविघ्ने समुत्पन्नेऽप्यविज्ञाते मृतेहनि । एकादश्यां तु कर्तव्यं कृष विशेषतः ॥' विशेषतः इत्युक्तेः शुक्लैकादश्यामपि । आशौचेतरविघ्ने एतदिति म **पृथ्वीचन्द्रौ** । **यत्त्वत्रिः**-'तदहश्चेत प्रदुष्येत केनचित्सूतकादिना । सूतका कुर्यात् पुनस्तदहरेव च ॥' इति तत् पूर्वकालाभावे ज्ञेयम् । एतदाब्दिकेतरश्राद्ध यच्च **देवलः**-'एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते । मासेन्यस्मिंस्तिथौ त श्राद्धं कुर्यात् प्रयत्नतः ॥' इति । तदपि मासिकपरमिति **मदनरत्ने हेमाद्रौ** इदमपि पूर्वकालासंभवे व्याध्यादौ विस्मरणे चैवं ज्ञेयम् ॥

**अथ भार्यारजोदर्शने** तत्र दार्शिकमानेन कार्यम् । 'श्राद्धविघ्ने द्विजातीन श्राद्धं प्रकीर्तितम् । अमावास्यादिनियतं माससंवत्सराद्दते ॥' इति **हेमाद्रौ हार** क्तेः । **व्याघ्रपादोपि**-'आर्तवे देशकालानां विप्लवे समुपस्थिते । आमश्राद्धं कार्यं शूद्रः कुर्यात्सदैव हि ॥' इति । **दीपिकापि**-'दर्शे तु भार्यार्तवेप्यामश्राद्ध प्रवासिविधुराद्याश्चाचरेयुर्द्विजाः ॥' वस्तुतस्तु 'पाकाभावे द्विजातीनामामश्राद्धं विधि इति **सुमन्तूक्तेः** । पाककर्त्रन्तरसत्त्वेऽन्नेनान्यथामेनेत्युक्तम् । 'मासिकानि सपिण अमावास्या तथाब्दिकम् । अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ।' इति **का** यां वचनाच्च । **कालादर्शे** तु स्त्रिया रजोदर्शने दर्शश्राद्धं पञ्चमेहनीति पक्षान्तरमु **पारिजातेप्येवम्** । एवं महालययुगादावपि ॥

आब्दिकं तु रजोदर्शनेपि तद्दिने एव कार्यम् । 'पुष्पवत्स्वपि दारेषु विदेशस्थो ग्निकः । अन्नेनैवाब्दिकं कुर्याद्धेम्ना वामेन न क्वचित् ॥' इति **माधवीये लौगा** **मरीचिरपि**-'अनग्निकः प्रवासी च यस्य भार्या रजस्वला । आमश्राद्धं प्रकुर्वीत कुर्यान्मृतेहनि ॥' **कार्ष्णाजिनिः**-'आपन्नोप्याब्दिकं नैव कुर्यादामेन कुत्रचि अन्नेन तदमायां वा कृष्णे वा हरिवासरे ॥' **प्रयोगपारिजाते**-'रजस्वलायां भा क्षयाहं यः परित्यजेत् । स वै नरकमाप्नोति यावदाभूतसंप्लवम् ॥ मासिकानि सपिण अमावास्या तथाब्दिकम् । अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ॥ **देवय** **कनिबन्धेऽपि**-'भर्तुः श्राद्धं पञ्चमेह्नि कुर्याद्भार्या रजस्वला । पुत्रः पित्रोः प्र

मृताहनि शुचिर्यतः ॥' **कालादर्शेपि**—'रजस्वलाङ्गनोऽनग्निर्विदेशस्थोथवाब्दिके । द
दाविव नामेन त्वन्नेन श्राद्धमाचरेत् ॥' **अन्यत्रापि**—'विदेशको वा विगताग्निको वा
स्वलायामपि धर्मपत्न्याम् । श्राद्धं मृताहे विदधीत पाकैर्नामेन हेम्ना न तु पंचमेह्नि
एवं मासिकेपि । यत्तु **मरीचिः**—'आब्दिके समनुप्राप्ते यस्य भार्या रजस्वला । पञ्च
हनि तच्छ्राद्धं न तत्कुर्यान्मृतेहनि॥' **माधवीये**—'श्राद्धं तदा न कर्तव्यं कर्तव्यं पञ्च
हनि ।' इत्युत्तरार्द्धं, तदपुत्रकर्तृकश्राद्धविषयम् । 'अपुत्रा तु यदा भार्या संप्राप्ते भ
ब्दिके । रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेहनि ॥' इति **श्लोकगौतमोक्तेः** ।
कर्मणि पित्र्ये वा पञ्चमेहनि शुद्ध्यति ।' इति **प्रभासखण्डाच्च** । नन्वशुचित्वादेव
पञ्चमेहन्यर्थात् श्राद्धं प्राप्तमिति वचनं व्यर्थम् । मैवम् । 'गर्भिणीसूतिकादिश्च कु
वाप्यरोगिणी । यदा शुद्धा तदान्येन कारयेत् प्रयता स्वयम् ॥' इति **हेमाद्रौ भ
ष्योक्तेः** । 'अनुपनीतस्त्रीशूद्राश्च श्राद्धमृत्विजा वा कारयेयुः । 'स्वयं वाऽमंत्रकं कु
इति **स्मृत्यर्थसाराच्चा**न्यद्वारा करणनिवृत्त्यर्थत्वात्तस्य त्वदुक्तदिशा आशौचा
श्राद्धकर्तव्यताऽवेदकवाक्यवैयर्थ्याच्च । अतः प्रागुक्तमरीच्युक्तेः पत्नी पञ्चमेहनि
युक्तम् । यत्तु—'सप्ताहात् पितृदेवानां भवेद्योग्या व्रतार्चने।' इति । तद्रजोनिवृत्तिपर
**हेमाद्रिभिन्नसर्वनिबंधसिद्धांतः** ॥

**हेमाद्रिस्तु** श्राद्धादौ स्त्रिया सहैवाधिकारात्तस्यां रजोदुष्टायां तन्निवृत्तेरेकभ
पंचमेहनि कार्यं **प्रागुक्तमरीच्युक्तेः** । भार्यान्तरसत्त्वे तु पुष्पवत्स्वपीति वचना
एवेत्याह । **दीपिकापि**—'भार्यर्तौ सति पञ्चमे च दिवसे स्याद्वार्षिकं मासिकं प
बहुभार्यकस्त्वधिकृते पत्न्यन्तरे तिष्ठति । कुर्यात्तद् द्वितयं स्वमुख्यदिवसे' इति
न्त्यम् । सहाधिकारः सहत्वश्रुत्या वा एकफलभाक्त्वेन वा पाककर्तृत्वेन वा । न
तदभावात् । 'पाणिग्रहणाद्धि सहत्वं कर्मसु' इत्यस्याग्निसाध्यकर्मविषयत्वात् । अ
कस्य च निरग्नेरपि पाकेनैवोक्तेः । स्मार्ताग्निसाध्यत्वानियमात् 'तामपरुध्य' इति
क्तवचनासत्त्वाच्च । कथं च भार्यान्तरसत्त्वेधिकारः । 'ज्येष्ठया न विनेतरा' इति
मात् । ज्येष्ठापरत्वे च तेनैव सिद्धेर्वचनवैयर्थ्यात् । **न द्वितीयः**—अविभक्तभ्रात्
स्याऽशुचित्वेन्यस्याधिकारापत्तेः । **न तृतीयः**—प्रवासनिर्देशसूतिकारोगिण्यादिष्व
रणापत्तेः । 'आरभेत नवैः पात्रैरन्नारम्भं च बान्धवैः ।' इति **देवलोक्ता**वात्मनेपदा
बान्धवानां च पाककर्तृत्वोक्त्या विरोधाच्च । 'ततस्तानि पपाचाशु सीता जनकनं
इति **पाद्मादिलिङ्गात्** प्राशस्त्यं भार्यापाकस्योच्यते । न तत् कस्याप्यनिष्टम् ।

अन्वारोहणनिर्णयः।

**अथान्वारोहणे निर्णयः। लौगाक्षिः**—'मृताहनि समासेन पिण्डनिर्वपणं पृथक् नवश्राद्धं च दम्पत्योरन्वारोहण एव तु ॥' समासेन तु तन्त्रेण द्विपितृ श्राद्धवद्द्वयोरेकः पिण्डो विप्रश्च। पिण्डशब्दः श्राद्धपरः। नवश्रा पृथगिति **हेमाद्रिपृथ्वीचन्द्रौ**। अत्र मृताहनीत्येकत्वात् ॥ दिनभेदे दिनैक्ये मृततिथेरेकत्वे कालैक्यं कर्त्रैक्यं पाकैक्यं च। 'एकचित्यधिरोहे तु तिथिरेकैव जायते एकपाकेन पिण्डैक्ये द्वयोर्गृह्णीत नामनी' ॥ इति **स्मृत्यन्तराच्च। अन्त्ये पद्धतौ भट्टैरप्युदाहृतम्**—'अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया। पिण्डदा क्रिया तद्वच्छ्राद्धं प्रत्याब्दिकं तथा। नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक्। एव वृषोत्सर्गो गौरेका तत्र दीयते' ॥ इति। तिथिभेदे तु वार्षिकं पृथगेव। त वार्षिके समासविधानादन्यत्र सर्वत्र पृथक्त्वे प्राप्ते नवश्राद्धमेव पृथगिति परिसंख्य न्यत्र पृथगुक्तेष्वपि वार्षिकषोडशश्राद्धतीर्थसपिण्डान्वष्टक्यादिषु समास एवेति **मद पारिजातनिर्णयामृतादयः**। अतः समासविधिबलात् ज्येष्ठपुत्रस्य कर्तृत्वे स त्नमातुरन्वारोहणे तत्पुत्रे सत्यपि तद्वार्षिकादिकमविभक्तः सापत्नपुत्र एव ज्येष्ठः कु न्नौरसः। वक्ष्यमाण**पृथ्वीचन्द्रादिमते** तु औरस एव मातुः पृथक्कुर्यात्। वह्वीष्वपि मातृषु ज्ञेयम्। **त्रिस्थलीसेतौ** पितामहचरणैरप्येवमुक्तम्। यत्तु **गार्ग्य** 'एकचित्यां समारूढौ दंपती निधनं गतौ। पृथक्श्राद्धं तयोः कुर्यादोदनं च पृथ पृथक् ॥' ओदनं पिण्डः। तन्नवश्राद्धविषयम्। यत्तु **भृगुः**—'या समारोहणं कु द्भर्तुश्चित्यां पतिव्रता। तां मृताहनि संप्राप्ते पृथक्पिंडे नियोजयेत् ॥ प्रत्यब्दं च श्राद्धं युगपत्तु समाचरेत् ॥' तद्येषां वार्षिकमेकोद्दिष्टमुक्तं तद्विषयम्। 'प्रत्यब्दं मृताहनि' इत्यन्वयः। नवश्राद्धं युगपदिति दर्शे वर्गद्वयवदेकतन्त्रेण पृथगित्यर्थ **हेमाद्रिः** ॥ 'एतन्मृततिथेर्भेदविषयम्'। इति **पृथ्वीचन्द्रनिर्णयामृताद्या देवयाज्ञिकोप्येवम्। पराशरमाधवस्तु**—'**गार्ग्यभृग्वादिवचनाल्लौगाक्षिव** समासेन पाकादितंत्रैक्येन दर्शे वर्गद्वयवत् पृथक्श्राद्धं कुर्यात् नवश्राद्धं च तथा' इत्य

**पृथ्वीचन्द्रचन्द्रिकादयस्तु**—'द्वयोरेकपिण्डदानं **लौगाक्षिवचनं** चापद्विषय पृथक्पिण्डदानं तु मुख्यः कल्पः'। तदाह **वृद्धपराशरः**—'आरुह्य भर्तुश्चितिम या प्राप्नोति मृत्युं खलु सत्त्वयुक्ता। एकादशाहे तु तयोर्विधेयं श्राद्धं पृथक् स्व

---

१—यत्र पत्नी भर्तृचित्यामनारूढा तत्र भर्तुः तस्याश्च तिथिभेदेन मरणे तत्तत्तिथौ तस्य त पृथगेव वार्षिकम्। यदा च तिथ्यैक्यं तदा यद्यप्येकदेशकालकर्तृत्वेनागृह्यमाणविशेषत्वाद्देवता

पेक्ष्य सद्भिः ॥ एकत्वमिच्छन्ति मतिप्रहीणा एकादशाहादिषु ये नृनार्योः स्वर्गमार्गं विनिहत्य कुर्युः स्त्रीसत्त्वघातान्नरकाधिवासम् ॥ भर्त्रा सह मृता या तु लोकमभीप्सती । सार्हेच्छ्राद्धं पृथक् पिण्डान् नैकत्वं तु स्मृतं तयोः ॥ पृथगेव हि श्राद्धमेकादशाहिकम् । यानि श्राद्धानि सर्वाणि तान्युक्तानि पृथक्पृथक् ॥' वि दर्शेऽपि—'मातुर्गयाष्टकावृद्धिर्मृताहेषु महालये । श्राद्धं कुर्यात् पृथगेवं तन्त्रं वा वपि ॥ एकचित्यां समारुह्य मृतयोरेकबर्हिषि । पित्रोः पिण्डान् पृथग्दद्यात् त्वापत्सु तत्सुतः' ॥ इत्यग्निस्मृतेरित्याहुः । यत्तु षट्त्रिंशन्मते—'एकत्वं सा भर्तुः पिंडे गोत्रे च सूतके । न पृथक्पिण्डदानं तु तस्मात् पत्नीषु विद्यते' ॥ तद्दर्शादिपरम् । चन्द्रप्रकाशेऽपि—'एकचित्यां समारूढौ दंपती प्रमितौ यदि क्श्राद्धं प्रकुर्वीत पत्युरेव क्षयेऽहनि ॥ मृतानामपि भृत्यानां भार्याणां पतिना पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः पुनः ॥ तन्त्रेण श्रपणं कृत्वा श्राद्धं स्वामिक्षये तृतीयस्य ततः कुर्यात्संनिपातेष्वयं क्रमः ॥' इति ॥

सहगमने सर्वत्र श्राद्धार्थमेकपाक इत्याह मदरत्ने प्रचेताः—'एकचित्यां रूढौ म्रियेते दंपती यदि । तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समावपेत् ॥' चन्द्रोदयेऽप्येवम् । अत्र भर्तुराशौचमध्येऽन्यदिने स्त्रीमरणे पतिमरणदिनगा शौचपिण्डदानैकादशाहादि कार्यम् । नात्र पक्षिणीवृद्धिः । 'मृतं पतिमनुव्रज्य चेदनलं गता । न तत्र पक्षिणी कार्या पैतृकादेव शुद्ध्यति ॥ पुत्रोऽन्यो वाग्निद स्तावदेवाशुचिस्तयोः । नवश्राद्धं सपिण्डं च युगपत्तु समापयेत् ।' इति षड मतात् । 'यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया । तदाशौचं विधातव्यं भ चक्रमेण हि ॥' इति लघुहारीतोक्तेश्च । भर्त्राशौचोत्तरमन्वारोहणे तु त्र्यह चम् । 'ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी । त्र्यहाशौचे तु निर्वृत्ते प्राप्नोति शास्त्रतः ।' इति ब्राह्मोक्तेरिति पृथ्वीचन्द्रापरार्कौ । एतदन् एव न त्वेकचितौ । ऋग्वेदवादः—'इमा नारीरविधवाः' इत्यादिः।एतत्सवर्णापरमि

स्मार्तगौडास्तु—'देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयम्' इत्युपक्रम्य 'त्र्यहाशौचे तु निर्वृत्ते' इत्युक्ते भर्त्राशौचोत्तरमन्वारोहणे त्र्यहः सहगमने तु पू हादि पिण्डास्तु दशापि सहैव । तथा च जनकशूलपाणिशुद्धितत्त्वधृतव 'संस्थितं पतिमालिंग्य प्रविशेद्या हुताशनम् । तस्याः पिण्डादिकं ज्ञेयं क्रमशः पा वत् ॥ अन्विता पिण्डदानं तु यथा भर्तुर्दिनेदिने । तदर्था रोहिणी यस्मात्त

शौचे त्वन्वारोहणे त्रिरात्रम् ।' एकचितौ तु संस्थितपतिम्' इति प्रागुक्तव्या
सद्यः शौचमित्याहुः । अन्यसपिण्डाशौचमध्ये विदेशमृतान्वारोहणं त्वनाशक
शुचिताया अङ्गत्वात् । अन्ये तु रजोवत्याः सूतिकायाश्च गमननिषेधादितराशौ
निषेधः । अन्यथा प्रत्यक्षभर्तृमरणे का गतिरित्याहुः । तन्मूलवचनं विना चिन्त्य
**स्मृत्यर्थसारेऽपि**-'सहगमने सर्वत्र श्राद्धपिण्डादौ पाकैक्यं कालैक्यं कर्त्रैक्यं चे
या तु पतिमुद्दिश्याऽन्यकालेऽन्यतिथावन्वारूढा तस्याः श्राद्धं तत्क्षयतिथौ कार्य
भर्तृतिथौ । 'पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ।' इति **स्कान्द**
'तिथिरेकैव जायते' इत्यादिवचनाच्चेति **मदनरत्नपारिजातपृथ्वीचन्द्राद**
अन्ये तु तस्याः पतिमरणेन मृतप्रायत्वात् । 'सहाग्रतः पृष्ठतो वा तद्भक्त्या म्रियते
तस्याः श्राद्धं प्रदातव्यं पृथक् पत्युः क्षयेहनि ॥' इति **स्मृत्यन्तरात्** ।
पृष्ठतो वापि तद्भक्त्या म्रियते यदि । तस्याः श्राद्धं सुतैः कार्यं पत्युरेव क्षयेहनि
**पुराणसमुच्चयाच्च** भर्तृतिथावेवेत्याहुः । अत्र मूलं चिन्त्यम् । अत्र विशेषो हे
**स्मृत्यन्तरे**-'माता मङ्गलसूत्रेण म्रियते यदि तद्दिने । उद्दिश्य विप्रपंक्तौ तां भ
सुवासिनीम् ॥

**अथ श्राद्धसंपाते निर्णयः** । अत्र पित्रोर्मृततिथ्यैकत्वे मरणक्रमेण दर्शे
यवत्तन्त्रेण श्राद्धं कुर्यात् । पौर्वापर्याज्ञाने तु पितृपूर्वकं कु
**हेमाद्रिः** । **माधवादयस्तु**-'पित्रोः श्राद्धे समं प्राप्ते नवे

श्राद्धसंपाते निर्णयः।

तेऽपि वा । पितृपूर्वं सुतः कुर्यादन्यत्रासति योगतः । इति **कार्ष्णाजिनिस्मृ**
सर्वत्र पितृपूर्वं भिन्नप्रयोगमाहुः । पार्वणैकोद्दिष्टयोः संपाते **माधवीये जाबा**
यद्येकत्र भवेद्यातामेकोद्दिष्टं च पार्वणम् । पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचे

**गृहदाहादिना युगपन्मरणे भृगुः**-'एककाले गतासूनां ब
थवा द्वयोः । तन्त्रेण श्रपणं कृत्वा कुर्याच्छ्राद्धं पृथक्पृथक् । पू

युगपन्मरणे निर्णयः।

मृतस्यादौ द्वितीयस्य ततः पुनः । तृतीयस्य ततः कुर्यात्सन्निपातेष्वयं क्रमः ॥'
भृङ्गः-'भवेद्यदि सपिण्डानां युगपन्मरणं तदा । सम्बन्धासत्तिमालोच्य तत् क्रम
द्धमाचरेत् ॥' **गारुडे**-'एकेनैव तु पाकेन श्राद्धानि कुरुतेत्र हि । विकिरं
कुर्यात् पिण्डान् दद्यात् पृथक्पृथक् ॥' अत्रानुगमने च दाहसपिण्डनादौ
वक्ष्यामः । **अत्रिः**-'बहूनामथवा द्वाभ्यां श्राद्धं चेत्स्यात्समेहनि । तन्त्रेण श्रपणं
पृथक्श्राद्धानि कारयेत् ॥' **पुलस्त्यः**-'महालये गयाश्राद्धे गतासूनां क्षयेहनि ।

पाकेन सम्बन्धासत्त्या श्राद्धभेदस्तु मुख्यः पक्षः । 'एकत्रैव दिने श्राद्धं द्वयं प्राप्तं यदा तदा । चरेदेव पुरा वर्षात् पितुर्मातुश्च यत्सुतः ॥ एकस्मिन् यः करोत्यह्नि द्वयोः श्राद्धं यदा द्विजः । तदा पूर्वमृतस्यादौ कृत्वा स्नात्वा यथाविधि ॥ पश्चात्पश्चान्मृतस्यैव पृथक्पाकेन समाचरेत् । नैकस्मिन् दिवसे श्राद्धं त्रयाणां कुत्रचिद् द्विजः । एकः कुर्यात्तथा प्राप्ते अन्यो भ्राता समाचरेत् । भ्रातर्यविद्यमाने तु तत् परेह्नि समाचरेत् ॥ अन्यथा श्राद्धहन्ता स्याच्छ्राद्धसंकरकृद्भवेत् । इत्याश्वलायनोक्तेरिति पृथ्वीचन्द्रः ॥

**कात्यायनः** । 'द्वे बहूनि निमित्तानि जायेरन्नेकवासरे । नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ॥' **जाबालिः**—'श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने । नैमित्तिकं तु कर्तव्यं निमित्तानुक्रमादयम् ॥' **कालादर्शे**—'नित्यदार्शिकयोश्चोदकुम्भ मासिकयोरपि । दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ॥ दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणः। प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥' अस्य देवताभेदेऽपवादमा स एव । 'नित्यस्य चोदकुम्भस्य नित्यमासिकयोरपि । दर्शस्य चोदकुम्भस्य दर्शमासिकयोरपि ॥ नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि । युगाद्याब्दिकयोश्चैव मन्वाद्याब्दिकयोस्तथा ॥ प्रत्याब्दिकस्य चालभ्ययोगेषु विहितस्य च । संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् ॥ निमित्तानि यतश्चात्र पूर्वानुष्ठानकारणम् ॥ पित्रोस्तु पितुः पूर्वत्वं सर्वत्र श्राद्धकर्मणि ॥' **माधवीये स्मृतिसंग्रहे**—'काम्यतन्त्रेण नित्यस्य तन्त्रे श्राद्धस्य सिद्ध्यति' ॥

**अथ श्राद्धाङ्गतर्पणम्** । **पारिजाते पृथ्वीचन्द्रोदये च गर्गः**—'पूर्वं तिलोदकं कृत्वा आमश्राद्धं तु कारयेत् । प्रत्यब्देन भवेत् पूर्वं परेऽहनि तिलोदकम् ॥ पक्षश्राद्धं हिरण्येन अनुव्रज्य तिलोदकम् ॥' न च नित्यतर्पणस्यायं परेह्न्युत्कर्षः। न तु श्राद्धाङ्गतर्पणमस्तीति वाच्यम्। 'यस्तर्पयति तां विप्रः श्राद्धं कृत्वा परेहनि। पितरस्तेन तृप्यन्ति न चेत्कुप्यन्ति वै भृशम्' ॥ इति **गर्गेण** फलनिन्दार्थवादाभ्यामङ्गत्वेनोक्तः ॥ श्राद्धप्रक्रमाद्वार्षिकम् । **बृहन्नारदीये**प्याब्दिकं प्रक्रम्य—'परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् । तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि । पितृशब्दश्च श्राद्धेज्यवर्गपरः । तेन तर्पणस्य पशुपुरोडाशयागवत् प्रस्तरप्रहरणवच्चेष्टदेव

(margin: श्राद्धाङ्गतर्पणनिर्णयः ।)

१—नह्यन्यप्रकरणेऽन्यस्य फलं निन्दा वा संभवति युज्यते वेति भावः। २ 'यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः' इतिवत् श्राद्धं यद्देवत्यं तद्देवत्यमेव तर्पणमित्यर्थः । ३—ननु तत्र विशिष्यदेवताभिधानात्त

नामसंस्कारकता ॥ तेनाब्दिके दिने नित्यं स्वपित्रादितर्पणं कार्यमेवं । श्राद्ध
परेद्युरुक्तेः । तदुक्तम्-'प्रत्यब्दाङ्गं तिलं दद्यान्निषिद्धेऽपि परेहनि । वर्गैकस्य
मन्येषां तु विवर्जयेत् ॥

क्वचिद्विशेषमाह गर्गः-'कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् । पि
हं कार्यं निषिद्धाहेऽपि तर्पणम् ॥' तर्पणं तिलतर्पणम् । निषिद्धाहेपीत्युक्तेः। 'स
द्यः स्यादष्टकास्वन्त एव हि ॥' अत्र सप्तमीनिर्देशात् अङ्गिता स्फुटैव ।
जुहुयात् । मन्द्रं प्रायणीयायां मन्द्रं प्रातःसवने इत्यादिवत् । अस्यापवादो
तीये-'वृद्धिश्राद्धे सपिण्ड्यां च प्रेतश्राद्धेऽनुमासिके । संवत्सरविमोके च कु
तर्पणम् ॥ तदयमर्थः 'दर्शे विप्रनिमन्त्रणोत्तरं पाकारम्भोत्तरं वा श्राद्धप्रयो
त्वात् ब्रह्मयज्ञोत्तरं नित्यतर्पणम् । नैव श्राद्धाङ्गतर्पणस्य तन्त्रेण प्रसङ्गेन व
ततः पूर्वं वैश्वदेवोत्तरं वा ब्रह्मयज्ञकरणे श्राद्धाङ्गतर्पणं पृथक्कार्यम् । पित्र
नित्यतर्पणं तिलवर्ज्यं कार्यम्' । 'नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पण
कृत्वा पराह्णे च तर्पणं तु तिलैः सह ॥' इति वचनात् । 'सप्तम्यां
मातापित्रोर्मृतेहनि । तिलैर्यस्तर्पणं कुर्यात्स भवेत् पितृघातकः ॥' इति
रत्नावल्यां वृद्धमनूक्तेश्च । अत्र नित्यतिलतर्पणे तिलमात्रनिषेधो
तर्पणस्य तिलैरित्यस्य वैयर्थ्यापत्तेः । यत्तु कातीयम्-'उपरागे पितुःश्राद्धे
च संक्रमे । निषिद्धेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ॥' इति तत् परेद्युः श्रा
विषयमिति केचित् । श्राद्धाशक्तस्य तत्स्थानापन्नतर्पणविषयमिति युक्तम्
हालये परेद्युस्तर्पणम् । अष्टकासु तु सप्तम्यष्टमीश्राद्धयोरन्ते तदैव वर्गद्वयस्य ।
तु मातृवर्गस्यापि तीर्थश्राद्धे दर्शवत् । माघाद्यादिष्वष्टकावदन्ते । अनेक
तु यदि तत्प्रसङ्गसिद्धिस्तदा तदीयमेव तर्पणम् । तन्त्रत्वे तु श्राद्धसमसंख्यात्वे
वा । विषमसंख्यायां बह्वनुरोध इति । तस्माच्छ्राद्धाङ्गतर्पणं सिद्धम् ॥

तद्विधिः संग्रहे-'स्नात्वा तीरं समागत्य उपविश्य कुशासने । संतर्पयेत् पि
स्नात्वा वस्त्रं च धारयेत् ॥' तर्पणोत्तरं नित्यस्नानं कृत्वेत्यर्थः । 'अपसव्यं
सव्यं जान्वाच्य भूतले । नामगोत्रस्वधाकारैर्द्वितीयान्तेन तर्पयेत् ॥' अत्र वस्व
क्ता स्मृत्यर्थसारे । 'वसुरुद्रादितिसुतान् श्राद्धार्थे तर्पयेत् पितॄन् ॥' तच्च
दक्षिणेनैव । 'अनादेशे दक्षिणं प्रतीयात्' इति सूत्रात् । अत्र प्रत्यञ्जलिम

निर्वापवत्तत्संध्यार्घ्यदानवच्च द्रव्यभेदात् । अवघातवेदिप्रोक्षणादौ तु द्रव्यैकत्व मन्त्रावृत्तिः । केचित्तु परिव्याणमन्त्रवत्क्रियमाणानुवादित्वेन करणत्वाभावात्स दिच्छन्ति । तन्न । तत्रापूपद्रव्यैक्यात् परवीरसीतिकरणीभूतमन्त्रान्तरसत्त्वादन्यत व्यवधानापत्त्योभयोः कारणत्वायोगात् कर्तृभेदेन विकल्पायोगाच्च क्रियमाणानुवादित्व न त्वत्र तथेति बौधायनादिवचनात् करणत्वमेव । तेनावृत्तिरेव युक्ता । एवं नित्यो यत्तु संग्रहे नाम्ना पठन्ति । 'पित्रोः क्षयाहे संप्राप्ते यः कुर्यान्नित्यतर्पणम् । आसुरं त वेच्छ्राद्धं तत्तोयं रुधिरं भवेत् ॥ सर्वदा तर्पणं कुर्याद्ब्रह्मयज्ञपुरःसरम् । मृताहे नैव कर्त कृतं चेन्निष्फलं भवेत् ॥' तत्समूलत्वे सति फलविषयम् । यच्च पठन्ति । कापिलः— न्वादिषु युगाद्यासु दर्शसंक्रमणेषु च । पौर्णमास्यां व्यतीपाते दद्यात् पूर्वं तिलोदकम् अर्धोदये गजच्छाये षष्ठीषु च महालये । भरण्यां च मघाश्राद्धे तदन्ते तर्पणं विदुः शौनकः—'मातापित्रोर्मृताहे च परेहनि तिलोदकम् । कारुण्यश्राद्धविषये सद्यो दद्या लोदकम् ॥' एतन्निर्मूलम् ॥

तिलतर्पणनिषेधः ।

अथ तिलतर्पणनिषेधः । गार्ग्यः—'भानौ भौमे त्रयोदश्यां नन्दाभृगुमघासु च पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥' स्मृत्यर्थसारे—'वि हव्रतचूडासु वर्षमर्धं तदर्धकम् । अर्धं तदेव । 'वृद्धौ सत्यां च तन्मा नेत्याहुस्तिलतर्पणम् ॥' हेमाद्रौ मरीचिः—'सप्तम्यां रविवारे च गृहे जन्मदिने तथ निशासंध्यासु पुत्रार्थी न कुर्यात्तिलतर्पणम् ॥' यत्तु संग्रहे—'नंदायां भार्गवदिने कृ कासु मघासु च । भरण्यां भानुवारे च गजच्छायाह्वये तथा ॥ अयनद्वितये चैव मन्वादि युगादिषु । पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥' इति तच्चिन्त्यम् । 'पानीयमप्यु तिलैर्विमिश्रं दद्यात् पितृभ्यः प्रयतो मनुष्यः ।' इत्यादिविरोधात् । अत्रापवादः पृथ्वी चन्द्रोदये—'तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके । निषिद्धेपि दिने कुर्यात्तर्पणं तिल मिश्रितम् ॥' स्मृत्यर्थसारेपि—'तिथितीर्थविशेषेषु कार्यं प्रेते च सर्वदा ।' इति । गोभि लः—'तिलाभावे निषिद्धाहे सुवर्णरजतान्वितम् । तदभावे निषिंचेत्तु दर्भमन्त्रेण वा पुनः पतितस्य तिलोदकं वक्ष्यामः ॥

वृद्धिश्राद्धनिर्णयः ।

अथ वृद्धिश्राद्धम् । तन्निमित्तं पृथ्वीचन्द्रोदये ब्राह्मे—'जन्मन्यथोपनयने विवा हे पुत्रकस्य च । पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् ॥ दे व्रतेषु चाधानयज्ञपुंसवनेषु च । नवान्नभोजने स्नाने ऊढायाः प्रथम

१—युवा सुवासाः' इति परिव्याणो मन्त्रः । २ ...

तवे देवागमतडागादिप्रतिष्ठासूत्सवेषु च । राजाभिषेके बालान्नभोजने वृ
कान् ॥ वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा । पितॄन्पूर्वोक्त
नर्पयेत्कर्मसिद्धये ॥' **विष्णुपुराणे**-'यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षये
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥' **तत्रैव**-'नामकर्मणि
चूडाकर्मादिके तथा ।' इत्युक्तेर्निष्क्रमान्नप्राशनयोर्न श्राद्धमिति **मैथिलाः** तन्न
क्तविरोधात् । 'नानिष्ट्वा' इति विरोधात् । 'सुतोत्पत्तौ तथा श्राद्धे अन्नप्राशनिके
इति **राजमार्तण्डाच्च** । यत्तु **छन्दोगपरिशिष्टम्**-'सूर्येन्द्वोः कर्मणी ये च
श्राद्धं न विद्यते ।' इति तत्तेषामेवेति **कल्पतरुः** । **बह्वृचकारिकायाम**-'
भ्युदयिकं श्राद्धं वृद्धिपूर्तेषु कर्मसु । पुंसः सवनसीमन्तचौलोपनयनेष्विह ॥ विवाह
लाधयप्रभृतिश्रौतकर्मणि । इदं श्राद्धं प्रकुर्वन्ति द्विजा वृद्धिनिमित्तकम् । अन्यैः
संस्कारश्रावण्यादिष्वपीष्यते । वाप्याद्युद्यापनादौ तु कुर्युः पूर्तनिमित्तकम् ॥'
**देवकालादर्शे**-'सीमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाधानविवाहयज्ञ
त्पत्तिप्रतिष्ठासु च । पुंसूत्यावसथप्रवेशनसुताद्यास्यावलोकाश्रमस्वीकारक्षितिपाभिषे
ताद्यतौ च नान्दीमुखम् ॥' यत्तु **कामधेनौ**-'जलाशयप्रतिष्ठायां वृषोत्सर्गादि
वत्सराभ्यन्तरे पित्रोर्वृषस्योत्सर्गकर्मणि ॥ वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समाच
इति । तत्र जलाशये वृद्धिश्राद्धस्य निषेधो न तु कर्माङ्गस्येति केचित् । अन्ये
निर्मूलतामाहुः । **श्राद्धकौमुद्यां निर्णयामृते च मात्स्ये**-'अन्नप्राशे च
पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नवे वेश्मप्रवेशने ॥ देववृक्षजलादीनां प्र
विशेषतः । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥' इदं चावश्यकम् । 'वृद्धौ
ता ये वै पितरो गृहमेधिभिः । तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः ॥' इति श
तपोक्तेः । अत्र श्राद्धत्रयं **स एवाह**-'मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदन
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥'

तत्कालमाह **पृथ्वीचन्द्रोदये गार्ग्यः**-'मातृश्राद्धं तु पूर्वेद्युः कर्माहनि
कम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम् ॥' अत्राप्यशक्तौ **स एव**-'पृथ
ष्वशक्तश्चेदेकस्मिन् पूर्ववासरे । श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ॥'
**वृद्धमनुरपि**-'अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः । पूर्वेद्युर्वै प्रकुर्वीत
मातृपूर्वकम् ॥' अत्र 'महत्सु पूर्वेद्युस्तदहरल्पेषु' इति **गृह्यपरिशिष्टाद्व्यवस्था**
तत्र प्रातरेव । 'पार्वणं चापराह्णे तु प्रातर्वृद्धिनिमित्तकम् ।' इति **शातातपोक्तेः**

सदानन्तर्यमिष्यते ॥' इति **लौगाक्षिस्मृतेः** । आधानाङ्गं नान्दीश्राद्धं त्वपराह्ण
'आमश्राद्धं तु पूर्वाह्णे सिद्धान्नेन तु मध्यतः । पार्वणं वाऽपराह्णे तु वृद्धिश्राद्धं तथ
कम् ॥' इति **निर्णयामृते गालवोक्तेः** । 'नान्दीमुखाह्वयं प्रातराब्दिकं त्वपराह्ण
इति **विष्णूक्तेश्च** । इदं च मातृपितृमातामहादिक्रमेण नवदैवत्यं कार्यम् । तत्र 'म
महाः सपत्नीका वृद्धप्रमातामहप्रमातामहमातामहानां सपत्नीकानाम् ॥' इति **पृथ
चन्द्रोदये गारुडे**–गद्यरूपेण पाठात् । **हेमाद्रौ शङ्खः**–'नान्दीमुखे सत्यवसू स
त्यौ वैश्वदेविके ॥' **वृद्धपराशरः**–'नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणकुशासन
पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणमिति स्मृतिः ॥' यत्तु **वृद्धवसिष्ठः**–'नान्दीमुखे वि
च प्रपितामहपूर्वकम् । नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥' यच्च **स्मृत्यर्थस
'वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते ।' इति । यच्च **गारुडे**–'व्युत्क्रमप्रतिप
तच्च शाखान्तरविषयम् । पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः' इति **बह्वृचपरि
कात्यायनेन** चानुलोम्याम्नातात् । **पृथ्वीचन्द्रोदयेऽप्येवम्** । यत्तु केचिद्वृद्धिपदं पि
दिषु प्रयुञ्जते तन्न । 'अनस्मद्वृद्धशब्दानामरूपाणामगोत्रिणाम् । अनाम्नामतिला
नान्दीश्राद्धं तु सव्यवत् ॥' इति **पृथ्वीचन्द्रोदये संग्रहोक्तेः** । न च निषेधादेवा
कल्प्यत इति वाच्यम् । प्रौष्ठपदीश्राद्धे प्रपितामहात्परेषां वृद्धपित्रादीनां देवतात्वान्ना
श्राद्धत्वसाम्ये नेहापि तत्प्राप्तौ निषेधात् । **गोत्रनामादिनिषेधस्तु**–'शुभार्थी प्र
न्तेन वृद्धौ संकल्पमाचरेत् ।' इत्युपक्रम्य 'अनस्मद्वृद्धशब्दानाम्' इत्युक्तेः संकल्पश्रा
परः । 'सापिण्डके तु सर्वं भवति' इति **प्रयोगपारिजातः** । 'गोत्रनामभिरामन्त्र्य
भ्योऽर्घ्यं प्रदापयेत् ।' इति **छन्दोगपरिशिष्टे** तद्विधानात् । यत्तु **ब्राह्मे**–'पिता पित
श्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः । तेभ्यः पूर्वतरा
प्रजावन्तः सुखैधिताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते ॥' इति यच्च **मा
र्कण्डेयपुराणे**–'ये स्युः पितामहादूर्ध्वं ते तु नान्दीमुखाः स्मृताः ॥' इति तज्जीवति
दित्रिककर्तृकवृद्धिश्राद्धविषयम् । तेन तस्येदमावश्यकम् । यत्तु **विष्णुः**–'पितरि पित
च जीवति नैव कुर्यात्' इति तद्दर्शादिविषयम् । इति **कल्पतरुः** । **मदनपारिज
प्येवम्** । **हेमाद्रिस्तु**–'नान्दीमुखानां श्राद्धं तु कन्याराशिगते रवौ । पौर्णमास्य
कर्तव्यं वराहवचनं यथा ॥' इति–प्रौष्ठपदीश्राद्धैकवाक्यत्वात्तत्रैव पूर्वेषां देवतात्वमित्य
त्र सत्यवसू विश्वेदेवावित्युक्तं प्राग्वत् । यत्तु **शातातपः**–'मातुः श्राद्धं तु युग्मैः स्
दैवं प्राङ्मुखैः पृथक् ।' इति, तद्भिन्नप्रयोगमातृश्राद्धपरम् । यच्च **मार्कण्डेयपुरा

धूपैः नैवेद्यैर्गन्धाद्यैर्भूषणैरपि । पूजयित्वा मातृगणं कुर्याच्छ्राद्धत्रयं बुधः ॥'
छन्दोगपरिशिष्टे—'कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन
पूजयन्ति ताः ॥ प्रतिमासु च शुद्धासु लिखिता वा पटादिषु । अपि वाक्षतपुञ्जेषु
पृथग्विधैः । कुड्यलग्नां वसोर्धारां सप्तधारां घृतेन तु । कारयेत् पञ्चधारां वा न
न चोच्छ्रिताम् ॥ आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः
स्तदनु श्राद्धदानमुपक्रमेत् ॥ अत्र सर्वेष्विति ग्रहणात् ग्रहयज्ञतद्विकारेष्वपि नित्यं
'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म किंचित्समाचरेत् ।' इति शातातपोक्तेश्च ।
वसोर्धारा तच्छाखीयानां नियता, अन्येषां त्वनियता । 'बह्वल्पं वा स्वगृह्योक्तम्' इ
करणे त्वभ्युदयः । 'यन्नाम्नातं स्वशाखायाम्' इत्युक्तेः । आयुष्याणि 'आनो
इत्यादीनि । षड्भ्य इति मात्रादित्रिकोपलक्षणमिति पृथ्वीचन्द्रोदयः । छन्
षड्दैवत्यमन्येषां नवदैवत्यमित्याशार्कः । मम तु मतं कोकिलमतानुसारिणां
तामहममातामह इति मात्रा सहैव मातामह श्राद्धकरणात् तद्विषयमिदं षड्भ्य

मातरस्तत्रैवोक्ताः—'गौरी पद्मा शची मेधा सावित्री विजया जया ।
स्वधा स्वाहा मातरो लोकमातरः ।' इति सर्वविशेषणं तेन चतुर्दशत्वम् । यदा
पाठस्तदा देवनान्तरम् । चन्द्रिकायां चतुर्विंशतिमते त्वन्या उक्ताः ।
पूज्याः पितुः पक्षे तिस्रो मातामहे तथा । इत्येता मातरः प्रोक्ताः पितुर्मातुः स्वसा
आसां जीवने प्रत्यक्षपूजनम् । 'मृतानां त्वक्षतपुञ्जेषु' इति हेमाद्रिः ।
ष्याद्यास्तथा मम दुर्गाक्षेत्रगणाधिपान् । वृद्ध्यादौ पूजयित्वा तु पश्चान्नान्दी
पितॄन् ॥ मातृपूर्वान् पितॄन् पूज्य ततो मातामहानपि । मातामहीस्ततः
युग्मा भोज्या द्विजातयः ॥' इति अत्र द्वादशदैवतस्य देशाचाराद्व्यवस्था । ब्र
ह्याः—'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा । वाराही च तथेन्द्राणी
ण्डा मम मातरः ॥' इत्यपरार्के उक्ताः । अत्र चौलादीनां यौगपद्ये
तोक्ता छन्दोगपरिशिष्टे—'गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत् ।
भवेच्छ्राद्धमादौ न पृथगादिषु ॥' मातृभ्यः इति षष्ठ्यर्थे चतुर्थी । गणेशः'एकानेक
संस्कारेष्वेकदिने एकदेशकालकर्त्रैक्यादित्यर्थः । तथा—'असकृद्यानि कर्माणि
कर्मकारिभिः । प्रतिप्रयोगं नैव स्युर्मातरः सगणाधिपाः ॥' कर्मावृत्तावपि कुत्र
कार्यं क्वच नेत्युक्तं तत्रैव—'आधाने होमयोश्चैव वैश्वदेवे तथैव च । बलिकर्मणि त

१—एकेनैव पार्वणेन मातृमातामहयोश्चारितार्थ्यान्न षट्त्वानुपपत्तिरिति भावः । २—

पूर्णमासे तथैव च ॥ नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः । एकमेव भवेच्छ्राद्ध
न पृथक् पृथक् ॥' एतेषु प्रतिप्रयोगं नावर्तते किंत्वादौ । एतद्भिन्ने सोमयागादौ प्र
योगमावर्तते एव श्राद्धमित्यर्थः ॥

क्वचिदादावपि निषेधमाह स एव । 'नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥ विवाहादिः कर्मगणो य उक्तो गर्भाधानं
मो यस्य चान्ते । विवाहादावेकमेवात्र कुर्याच्छ्राद्धं नादौ कर्मणः कर्मणः स्यात
सोष्यन्त्या आसन्नप्रसवायाः । 'सोष्यन्तीमभ्युक्ष्य' इत्युक्तं कर्म । कात्यायनो
श्राद्धस्य पाकस्य प्राधान्यात्तस्य च । 'जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि
इति निषेधान्न जातकर्मणि नान्दीश्राद्धमित्याशार्कः । आमान्नेन वा कार्यमित्यपि
वोक्तम् । गौडास्तु जातकर्मण्येव निषेधः । पुत्रजन्मनिमित्तकं तु कार्यमेव । '
न्यथोपनयने' इत्युक्तेः । 'नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् । पुत्रजन्मनि
कार्यं जातकर्म समं नरैः ॥' इति मार्कण्डेयपुराणाच्चेत्याहुः । हारलतायां श्
विवेके चैवम् । एतेन जातकर्मणि कालान्तरे श्राद्धनिषेधो न पुत्रजन्मदिने इति
स्पतिमतं परास्तम् । अथ 'निषेककाले' इति वचनात् गर्भाधाने न निषेधः । 'नि
काले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं विधिवत्कृतम् ॥'
पारस्करः । प्रोषितेति—'प्रोष्यैत्य गृहानुपतिष्ठते पुत्रं दृष्ट्वा जपतीति विहितं कर्म
हादिगर्भाधानान्तो यो गृहप्रवेशचतुर्थीकर्मादिकर्मसमूह उक्तः सूत्रकारेण । तत्रापि
कर्म नेत्यर्थः ॥' अन्येपि हलाभियोगादयोऽपवादविषयास्तत्रैव ज्ञेयाः । त इहाप्रचा
च्यन्ते । अथात्राधिकारिणः । विष्णुपुराणे—'जातस्य जातकर्मादिक्रियाका
शेषतः । पिता पुत्रस्य कुर्वीत श्राद्धं चाभ्युदयात्मकम् ॥' अत्र केचित् । जीव

अथ जातश्राद्धाधिकारिणः ।

साग्नेरेव वृद्धिश्राद्धेऽधिकारो न तु निरग्नेः । 'न जीवत्पितृकः कुर्या
द्धमग्निमृते द्विजः । येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निक
पितामहेप्येवमेव कुर्याज्जीवति साग्निकः । साग्निकोपि न कुर्वीत जीवति प्रपितामहे
इति चन्द्रिकायां सुमन्तूक्तेरित्याहुः । प्रयोगपारिजातेप्यनाहिताग्निर्न कुर्या
यद्व्याख्यातं तन्न । 'अनग्निकोपि कुर्वीत जन्मादौ वृद्धिकर्मणि । येभ्य एव पिता
त्तानेवोद्दिश्य तर्पयेत् ॥' इति हारीतोक्तेः । सौमन्तवं तु वृद्धिश्राद्धभिन्नश्रा
मित्युक्तं मदनरत्ने । श्राद्धपदं पिण्डपितृयज्ञपरमिति पृथ्वीचन्द्रोदयः । निर्ण

मृते हारीतीयेऽनग्निकोनाहिताग्निरभिप्रेतः । पूर्ववचने तु साग्निकः श्रौताग्निः
ग्निश्चोच्यते । तेनोभयाग्निहीनस्य नेत्युक्तम् । तन्न। पूर्वोक्तदिशा गतिसंभवेनग्निपदस
ग्निपरत्वे मानाभावात् । वक्ष्यमाणनित्यानित्यसंयोगविरोधात् । 'पितरो जन
यावद्व्रतमनाहितम् । समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥' इति पृथ्वी
द्ये यमवचोविरोधाच्च । **अपरार्कोपि**-'समावर्तने ब्रह्मचारी स्वयमेव
श्राद्धं कुर्यात् इत्याह । अतः पूर्वमेव साधु । **बोपदेवोप्येवमाह** ।
जीवत्पितुः पुत्रनामकर्मादौ न वृद्धिश्राद्धं, **हारीतीये**-जन्मादावित्या
तत्प्रामावपि-'उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण
षंडते जीवतः पितुः ॥' इति **मैत्रायणीयपरिशिष्टे**-'उद्वाह एव तस
रात् । एवं यत्र तु संस्कारादिपदं तदप्युद्वाहादिपरमेव' इति तन्न । उद्व
स्वविवाहपरत्वस्यापि संभवात् । पुत्रविवाहपरत्वे मानाभावात् । 'ना
बालानां चूडाकर्मादिके तथा ।' इत्यादिभिर्नित्यश्राद्धस्य चौलाद्यङ्गत्वावगतै
नित्यसंयोगविरोधाच्च । अतो जन्मादाविति **सर्वसंस्कारसंग्रहः** । तथा
**यनः**-'स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु । पिण्डानोद्वाहनात्तेषां तस
तत्क्रमात् ॥' 'सुतानां चौलादिसंस्कारेषु पिता स्वपितृभ्यः पिण्डान् श्राद्धं
ग्रहश्चैषाम्' इति दर्शनादोद्वाहनाद्विवाहपर्यन्तं दद्यात् । विवाहश्च प्रथमः ।
श्राद्धं पिता कुर्यादाद्ये पाणिग्रहे बुधः । अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दि
इति **स्मृतेः** । तस्य पितुरभावे तत्क्रमात्-'असंस्कृतास्तु संस्कार्या भ्रातृभि
स्कृतैः ।' इति यः कर्तृक्रमस्तेन क्रमेण ज्येष्ठभ्रात्रादिर्दद्यादिति **चन्द्रिका**
**हेमाद्रिस्तु** तस्य पितुरभावे यः पितृव्यमातुलादिः संस्कुर्यात्स तत्क्रमात्संस्का
माद्यान्न तु स्वपितृभ्य इति व्याचख्यौ ॥

समावर्तनस्यापि विवाहप्राचीनसुतसंस्कारत्वात् पितैव नान्दीश्राद्धं कु
तदभावे ज्येष्ठभ्रात्रादिभिः ॥ तदभावे स्वयमेव कुर्यात् । उपनयनेन कर्मा
जातत्वात् । एवमाद्यविवाहेपीति **पृथ्वीचन्द्रोदयचन्द्रिकादयः** । म
प्येवम् । यदा तु पितरि संन्यस्ते प्रोषिते पतिते वा धर्मार्थं तत्
संस्कुर्यात्तदा संस्कार्यपितुः पित्रादिभ्यो दद्यात् । 'पितरो जनकस्येज्या
मनाहितम् । समाहितव्रतः पश्चात्स्वान्यजेत पितामहान् ॥' इति पृथ्वीच
**यमोक्तेः** । जीवत्पितृकस्य विशेषमाह **कात्यायनः**-'वृद्धो तीर्थे च
ताते च पतिते सति । ...

यान्नोदके द्विजः ।' इति कात्यायनोक्तेः । 'जीवे तस्मिन्सुताः कुर्युः पितामह्य
तु । तस्यां चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः' ॥ इति हारीतोक्त
क्तम् । तस्मिन् भर्तरि । दाक्षिणात्यास्तु पूर्वोक्तस्य सपिण्डीकरणादिविषय
'जीवेत्तु यदि वर्गाद्यस्तं वर्गं तु परित्यजेत् ।' इति वचनात्तद्वर्गस्य लोप एवेत
यत्तु चंद्रिकायां पारस्करः–'निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेय
यने श्राद्धं कर्माङ्गं वृद्धिवच्च तत्' ॥ इति तत्र गर्भाधानादौ कर्माङ्गं जातकर्मादा
वृद्धिश्राद्धं पृथगेव विधिवदित्युक्तेः । गौडनिबन्धे मात्स्ये'अन्नप्राशे च
पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने ॥ वेदव्रतजलादीनां प्र
तथैव च । तीर्थयात्रावृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्तितम् ॥ अत्र भूतनिमित्तानां वृद्धि
भाविनिमित्तानामङ्गत्वम् । वृद्धिशब्दस्तद्धर्मातिदेशार्थ इति गौडाः । अन्ये तु नि
कर्मांगवृद्धिश्राद्धयोः समुच्चयमाहुः । नान्दीश्राद्धसंज्ञा तूभयानुगता ॥

अथेतिकर्तव्यता । पृथ्वीचन्द्रोदये वृद्धपराशरः–'मालत्याशतपत्राया
काकुञ्जयोरपि । केतक्याः पाटलाया वा देया माला न लोहि
श्राद्धे मालानिषेधस्यायमपवादः । तथा–'सुवेषभूषणैस्तत्र सा

श्राद्धसर्वकर्तव्यनिर्णयः ।

स्तथा नरैः । कुङ्कमाद्यनुलिप्ताङ्गैर्भाव्यं तु ब्राह्मणैः सह ॥ स्त्रियोपि स्युस्त
गीतनृत्यादिहर्षिताः ॥' हेमाद्रौ ब्रह्माण्डे–'कुशस्थाने च दूर्वाः स्युर्मङ्गलस्य
द्धये ।' कुशा अपि वक्ष्यन्ते । छन्दोगपरिशिष्टे–'प्रातरामन्त्रितान् विप्रान् यु
भयतस्तथा ॥' उभयतः दैवे पित्र्ये च । वैश्वदेवे द्वौ विप्रौ पित्रादीनामेकैकस्य द्वौ
विंशतिः । त्रिके वा द्वावित्यष्टौ विप्राः । अत्र विप्रालाभे स्त्रियोपि भोज्या इत्याहा
वृद्धवसिष्ठः–'मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि । पतिपुत्रान्विता भव्या
तोष्टौ कुलोद्भवाः ॥' मातृत्रिके चतस्रः मातामहीत्रिके चेत्यष्टाविति हेमा
अत्र पित्र्ये प्राङ्मुखा विप्राः पाद्ये पित्र्ये चतुरस्रं मण्डलमिति जयन
हेमाद्रौ ब्राह्मे–'विप्रान् प्रदक्षिणावर्तं प्राङ्मुखानुपवेशयेत् ॥' छन्दोग
शिष्टे–'गोत्रनामभिरामन्त्र्य पितृभ्योऽर्घ्यं प्रदापयेत् । नात्रापसव्यकरणं न
तीर्थमिष्यते ॥ ज्येष्ठोत्तरकरान्युग्मान् कराग्राग्रपवित्रकान् । कृत्वार्घ्यं
तव्यं नैकैकस्यात्र दीयते ॥' पित्रादेर्द्वौद्वौ विप्रौ तयोर्दक्षिणहस्तौ संयोज्य प्र
वेशितविप्रकरोपरि तन्त्रेण द्वयोरर्घ्यं दद्यादित्यर्थः । बह्वृचकारिकायां तु–'द

न्नामिति प्रोक्ते शेषमन्नं निवेदयेत् ॥ अक्षय्योदकदानं च अर्घ्यदानवदिष्यते । षष्ठ
नियतं कुर्यान्न चतुर्थ्या कदाचन ॥'

चन्द्रोदये ब्राह्मे–'पठेच्छकुनिसूक्तं तु स्वस्तिसूक्तं शुभं तथा । नान्दीमुखान् पि
भक्त्या साञ्जलिश्च समाह्वयेत् ॥' तथा–'शाल्यन्नं दधिमध्वक्तं बदराणि यवास्तथ
मिश्रीकृत्वा तु चतुरः पिण्डाञ्छ्रीफलसंनिभान् ॥ दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो वि
पूर्वकम् । द्राक्षामलकमूलानि यवांश्च विनियोजयेत् ॥ तान्येव दक्षिणार्थं तु दद्याद्वि
सर्वदा ॥' तत्रैव चतुर्विंशतिमते–'द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै विनिक्षिपे
एकं नाम्ना परं तूष्णीं दद्यात् पिण्डान्पृथक्पृथक् ॥' वासिष्ठः–'प्राङ्मुखो देवती
प्राक्कूलेषु कुशेषु च । दत्त्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ॥' नान्दीमुखेभ
पितृभ्यः स्वाहेति वा पिण्डदानमन्त्र इति वृत्तिः । अत्र पिण्डाः कृताकृता इत्युक्त
तत्रैव भविष्ये–'पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे महाव
कुलधर्मानवेक्ष्य तु ॥' छागलेयः–'अग्नौकरणमर्घ्यं वावाहनं चावनेजलम् । पि
श्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥' तेनात्र भोजनस्यैव प्रधानत्वाद्यदि वि
स्य वमनं तदा तस्यैव पार्वणस्य पुनरावृत्तिरिति सिद्धम् । अत्र सांकल्पे विशे
प्रयोगपारिजाते संग्रहे । 'शुभार्थी प्रथमान्तेन वृद्धौ सांकल्पमाचरेत् । न षष्ठ
यदि वा कुर्यान्महादोषोभिजायते ॥' नामगोत्रादिनिषेधोप्यत्रैव न तु सपिण्डकश्रा
इति स एव ॥

अत्रायं क्रमः । नान्दीश्राद्धे 'दैवे क्षणः क्रियताम्' इति द्वौ युगपन्निमन्त्र्य ओंतथे
विप्राभ्यां युगपदुक्ते प्राप्नुतां भवन्तौ प्राप्नुवाव इति वैश्वदेववत् पित्र्ये च द्विवचनान्
विप्रद्वये प्रयोगं कुर्यात् । आहिताग्निस्तु हेमाद्रौ ब्राह्मे–'योग्नौ तु विद्यमानेपि वृद्धौ पिण्ड
निर्वपेत् । पतन्ति पितरस्तस्य नरके स च पच्यते ॥' बह्वृचपरिशिष्टे–'द्वौ द
पवित्रे पवित्राणि चत्वारि । शंनोदेवीत्यनुमन्त्रितासु यवानावपति ॥' 'यवोसि सोम
वत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीमुखान्पितॄनिमाँल्लोकान् प्री
याहि नः स्वाहेति स्वाहार्घ्याः' इति पृच्छति । 'विश्वेदेवा इदं वो अर्घ्यं नान्दीमुख
पितर इति यथालिङ्गमर्घ्यदानं गन्धादिदानं द्विर्द्विः । पाणौ होमोग्नये कव्यवाहन
स्वाहा सोमाय पितृमते स्वाहा 'अतो देवा अवंतु न इत्यङ्गुष्ठग्रहणम् । पावमानीः शं
वतीरैन्द्रीरप्रतिरथं च श्रावयेन्मधुवाता ऋचः स्थाने उपास्मै गायतेति पञ्च मधुम
श्रावयेदक्षन्नमीमदंतेति च षष्ठी भुक्तशेषेणैकैकस्य द्वौ द्वौ पिण्डौ दद्यात्' इति । चन्

ग्निर्वा आदौ वैश्वदेवं कुर्यात् । 'आदौ वृद्धौ क्षये चान्ते मध्ये श्राद्धे तु पार्वणे । दिष्टे निवृत्ते तु वैश्वदेवो विधीयते' ॥ इत्याशार्के **शाङ्खायनपरिशिष्ट** **हेमाद्रौ** तु—'शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः । श्राद्धाह्नि श्राद्धशेषेण वैश्वदेवं चरेत् ॥' इति **चतुर्विंशतिमता**न्नान्दीश्राद्धेप्यन्ते वैश्वदेव उक्तः । **बह्वृचाना** वृत्त्यालोचनात्तथैव पूर्वोक्तं तु येषां परिशिष्टं, तद्विषयमन्यविषयं वा ज्ञेयम् । अत्र श्र ङ्गतर्पणं नेत्युक्तं प्राक् । इति **निर्णयसिन्धौ वृद्धिश्राद्धम्** ॥

**अथ जीवत्पितृकश्राद्धम्** । तत्रानेकपक्षा दृश्यन्ते । जीवन्तं पितरं भोज परयोः श्राद्धं कुर्यादित्येकः । होमान्तमेव कुर्यादित्यन्यः । 'हो पितृयज्ञः स्याज्जीवे पितरि जानतः । पितरं भोजयित्वा वा

जीवत्पितृकश्राद्ध-निर्णयः ।

निपृणुयात् परौ ॥' इति **यज्ञपार्श्वोक्तेः** । 'यदि जीवत्पिता न दद्यादाहोमात् विरमेत्' **इत्यापस्तम्बोक्तेश्च** । 'जीवतां पिण्डानग्नौ हुत्वा परेभ्यो देयम्' इत्यप 'जुहुयाज्जीवेभ्य' **इत्याश्वलायनोक्तेः** । जीवतामजीवतां च पिण्डदानमितीत 'जीवतामजीवतां वा देयमेवेति हिरण्यकेतुः' इति **निगमात्** । 'तस्माज्जीवत्पिता द्वाभ्यामेव न संशयः' इति **भविष्योक्ते**र्द्वाभ्यामेवेत्यन्यः । एते पक्षाः कलौ निषि 'प्रत्यक्षमर्चनं श्राद्धे निषिद्धं मनुरब्रवीत् । पिण्डनिर्वपणं चापि महापातकसम्मित इति **पृथ्वीचन्द्रोदयभविष्योक्तेः** । **चन्द्रिका**प्येवम् । तस्मात् पितरि ज श्राद्धानारंभ एवेत्येकः पक्षः । 'सपितुः पितृकृत्येषु अधिकारो न विद्यते ।' इति **का यनोक्तेः** । 'जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् । इति **हारीतोक्तेश्च** । पित्रादिभ्यो दद्यादिति **सिद्धान्तः**। 'भ्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् ।' इति म 'पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः ।' इति **कात्यायनोक्तेश्च** । अयं बहु पक्षः । अन्ये शाखाभेदेन ज्ञेयाः । एवं जीवन्मातामहेनाप्यूहेन कार्यम् । 'मातामहमप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥' **विष्णूक्तेः** । 'एवं मात्रादिकस्यापि तथा मातामहादिके ।' इति **पृथ्वीचन्द्रोदये** **राणाच्च** । पितरि जीवति तु स्वमातरि मृतायामपि पितुरेव मातृमातामहयोः कु 'येभ्य एव पिता दद्यात्' इति वक्ष्यमाणवचनात् इति **पितामहचरणाः** । **मदन** तु—'जीवत्पिता स्वमातृमातामहयोर्दद्यात्' इत्युक्तम् । **कालादर्शे**प्येवम् । मृते तु जीवन्मातृकः पितामह्यादिभ्यो वृद्धौ दद्यात्' इति **स्मृतितत्त्वादिगौडग्रन्थ**

जीवतीत्यर्थः । मृते तु संन्यस्ते तदाद्ये एव देयम् । मृतेति परेभ्य एवेति **गौडाः**
**कात्यायनोऽपि**'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते । व्युत्क्रमाच्च मृते देयं ये
एव ददात्यसौ ॥' अयं च संन्यस्तपित्रादेरपि शेषात्सर्वश्राद्धेऽधिकारः । एतत्त्रिदण्डि
रम् । एकादशाहपार्वणवार्षिकाद्यपि तस्यैव । 'अहन्येकादशे प्राप्ते पार्वणं तु विधीयते
इत्युक्त्वा—'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ।' इत्युशनसा विशेषोक्तेः । 'ब्रा
णादिहते' इत्यादिनिषेधस्त्वेकदण्डादिपरः । अतः परमहंसानां वार्षिकादिकमपि न क
मिति **शूलपाणिश्राद्धतत्त्वादयो गौडग्रन्थाः** । इदमेव तु युक्तम् । यत्तु **हेमा**
**कौण्डिन्यः**—'दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् । न जीवत्पितृकः कुर्यात्ति
स्तर्पणमेव च ॥' इति तत्संन्यस्तपित्राद्यतिरिक्तविषयम् । **मैत्रायणीयपरिशिष्टे**—'उ
पुत्रजनने पित्र्येष्ट्यां सौमिके मखे । तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥' **तत्रै**
'महानदीषु सर्वासु तीर्थेषु च गयामृते । जीवत्पितापि कुर्वीत श्राद्धं पार्वणधर्मवित्
गयामृते इति मातृव्यतिरिक्तविषयम् । 'अन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥' इति **तत्रैवोक्तेः** । गयाप्राप्तौ प्रास
क्यात् । 'गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेत् ।' इति **वचनात्** । तेन मृत
तृको गयायां तत्पार्वणमात्रं कुर्यात् । तज्जीवने तु तीर्थश्राद्धमपि नेति **कालादर्श**
**तिदर्पणादयः** । अन्ये तु गत्वा श्राद्धं नेति निषेधार्थः । सामान्यतः प्राप्तं तीर्थश्रा
भवत्येव गयायामित्याहुः ॥

यदा तु पितुः प्रतिनिधित्वेन गयां याति, तदा यजमानस्य पितृपितामहप्रपिता
इत्येवं श्राद्धम् । तत्र मातुः पितृपत्नीत्वेनैकोद्दिष्टं कृत्वा मातृत्वेन पुनः पार्वणं कुर्या
**त्रिस्थलीसेतौ** । 'तच्च फल्गुविष्णुपदाक्षय्यवटेष्वेवेति **केचित्** । आद्यान्ते एवेत्यन
मध्यमान्ते इत्यपरे । संकोचे हेत्वभावात्तत्रत्यसर्वश्राद्धानि मातुः कार्याणीत्युक्तं प्रतिभा
यत्तु **मदनपारिजाते**—'न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः । येभ्य एव
दद्यात्तेभ्यः कुर्वीत साग्निकः ॥' इति **सुमन्तूक्तेः** । साग्नेरेव जीवत्पितृकस्य तीर्थादि
द्धमुक्तम् । साग्नेरपि **मैत्रायणीयशाखीयस्यैव** नान्येषाम् । 'षडेते जीवतः पितुः'
तत्परिशिष्टे एवोक्तेरिति **रत्नावलीदिवोदासाद्यास्तदयुक्तम्** । **सौमन**
पिण्डपितृयज्ञविषयं सन्न्यस्तपित्राद्यतिरिक्त विषयं वेति **पृथ्वीचन्द्रोदयोक्तेः** । वृद्धौ
चेत्यादेः साधारण्येनास्यापि तथात्वाच्च । तथा निरग्नेरपि नान्दीश्राद्धमुक्तं प्राक् ।
पितामहजीवनेऽपि ज्ञेयम् । विशेषः **पितृकृतजीवत्पितृकनिर्णये** ज्ञेयः ॥

सर्वसंमतः पक्षः । यत्तु छन्दोगपरिशिष्टे–'पितामहे ध्रियमाणे पितुः प्रेतस्य निर्व
पितुस्तस्य च वृत्तस्य जीवेच्चेत् प्रपितामहः ॥' इति एकपुरुषं द्विपुरुषं वा पार्वण
तत्तीर्थपितृयज्ञपरम् । वृद्धौ पूर्वोक्तमेव । एवं पूर्वयोर्मृतयोः प्रपितामहे जीवति पितृमा
परयोर्जीवतोश्च वृद्धप्रपितामहादिभ्यो ज्ञेयम् । 'जीवन्तमतिदद्याद्वा प्रेतायान्नोदके
इति कात्यायनोक्तेश्च । एतत्सर्वं मनसि कृत्वाऽह हेमाद्रौ विष्णुः–'पितरि
यः श्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां पितरि पितामहे च जीवति येषां पितामहः
पितामहे प्रपितामहे च जीवति नैव कुर्यात् । यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं
पितामहात् पराभ्यां द्वाभ्यां दद्यात् । यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स पित्रे
निधाय पितामहात्पराभ्यां दद्यात् । यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं
प्रपितामहात् पराभ्यां दद्यात् । यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ
पितामहप्रपितामहाय दद्यात् ॥' 'मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । म
यथान्यायं शेषाणां मन्त्रवर्जितम् ॥' इति । अत्र पितृवन्मातामहे जीवति तत्पित्रा
यथा तत्र त्रिषु जीवत्सु नैव कुर्यात्तथात्रापीत्यादि सर्वमतिदेश्यम् । एवं मातृजीव
शूलपाणिकालादर्शौ । तन्न । येभ्य एवेत्यादौ यच्छब्दादेर्व्यक्तिविशेषवा
तदप्रसङ्गादिति दिक् । उत्तरार्धं व्याख्यातं प्राक् । यत्त्वत्र विज्ञानेश्वरेणोक्तं
पिण्डं निधायेति पितुरेकोदिष्टविधिना श्राद्धं कृत्वा प्रपितामहादिभ्यः पार्वणं कु
तद्व्युत्क्रममृतसपिण्डीकरणाभावपक्षे सपिण्डीकरणस्थानापन्नं ज्ञेयम् । 'व्युत्क्रमात्तु प्र
नां नैव कार्या सपिण्डना ।' इति वचनात् । दर्शादौ तु पितुरेकोदिष्टमेव कार्य
जीवन्तमतिददाति' इति श्रुतेः । 'जीवेत्पितामहो यस्य पिता चान्तरितो भवेत् ।
कस्य दातव्यमेवमाहुर्मनीषिणः ॥' इति यज्ञपार्श्वोक्तेः । 'पितामहे जीवति
येव समापयेत् ।' इति हारीतोक्तेश्च । शिष्टास्तु–'व्युत्क्रमात्तु प्रमीतानां नैव
सपिण्डता॥यदि माता यदि पिता भर्ता नैष विधिः स्मृतः॥' इति माधवीये स्या
व्युत्क्रममृतसपिण्डीकरणाभाव पितृव्यादिविषय इत्याहुः । एष विधिर्निषेधरूपः

त्रिषु जीवत्सु विष्णुराह–'त्रिषु जीवत्सु नैव कुर्यात्'इति । तद्दर्शादिविषयम् ।
श्राद्धं तु परेभ्यस्त्रिभ्यो भवत्येवेति कल्पतरुः । पृथ्वीचन्द्रोदयस्तु–'दद्या
परेभ्यस्तु जीवेच्चेत् त्रितयं यदि ।' इति मनूक्तेः सर्वत्र विकल्पः । स च देशाच
वतिष्ठत इत्याहुः । सुदर्शनभाष्ये तु मासिकश्राद्धं जीवत्पित्रादिना व्युत्क्रमम्
दिना च कार्यमेवेत्युक्तम् । मदनरत्ने क्रतुः–'अष्टकादिषु संक्रान्तौ मन्वादिषु

तथाखिलम् ॥' अन्ये विशेषाः श्रीपितृकृतजीवत्पितृकनिर्णये, भट्टकृतत्रि
सेतौ च ज्ञेयाः । इति निर्णयसिन्धौ जीवत्पितृकादिश्राद्धम् ॥

अथ विभक्ताविभक्तनिर्णयः । पृथ्वीचन्द्रोदये मरीचिः–'बहवः
पुत्राः पितुरेकत्र वासिनः । सर्वेषां तु मतं कृत्वा ज्येष्ठेनैव
कृतम् । द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥'

विभक्ताविभक्तनिर्णयः ।

कर्तृत्वेपि सर्वे फलभागिन इत्यर्थः । तेन ये ब्रह्मचर्यादिनियमास्ते फलित
त्वात्सर्वैः कार्याः । एवं संसृष्टिनामपि तुल्यत्वात् । मिताक्षरायां ना
'भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते । विभागे सति धर्मोपि भवेत्तेष
क्पृथक् ॥ बृहस्पतिरपि–'एकपाकेन वसतां पितृदेवद्विजार्चनम् । एकं
भक्तानां तदेव स्याद्गृहे गृहे ॥' अत्र यद्यप्यविशेषश्रवणात् ब्रह्मयज्ञ
दिष्वप्यविभक्तानां पृथङ्निषेधः प्राप्नोति तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिष्वेव
द्रव्यस्यानेकस्वामिकत्वेनैकस्य व्ययेऽनधिकारात् । यानि तु द्रव्यासाध्यानि म
पवाससन्ध्याब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु पृथगेवाधि
द्रव्यव्ययाभावेनुमत्यनपेक्षणात् । 'द्रव्येण वा विभक्तेन' इत्यस्याविषयत्वात् । पृ
कपाकानां ब्रह्मयज्ञो द्विजातिनाम् । अग्निहोत्रं सुरार्चा च सन्ध्या नित्यं भवेत्त
इति प्रयोगपारिजाते आश्वलायनस्मृतेश्च । अग्निहोत्रशब्दोऽग्निसाध्यश्रौत
नित्यकर्मपरः । तेष्वप्यन्यानुमत्यैवाधिकारेण न्यायसाम्यात् । पितृश्राद्धादि
फलेषु नित्येष्वनुमतिं विनाप्येकस्याधिकारः । 'एकोपि स्थावरे कुर्याद्दानाध्य
यम् । आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः ॥' इति वचनात् । ध
वश्यकर्तव्ये पितृश्राद्धदाविति विज्ञानेश्वरः । केचित्त्वविभक्तानामपि पृथ
देशान्तरे च दार्शिकाब्दिकयोः पृथक्त्वमाहुः । भ्रातॄणामविभक्तानां पृथक् पाक
द्यदि । वैश्वदेवाब्दिकं श्राद्धं कुर्युस्ते वै पृथक्पृथक् ॥' इति हारीतोक्तेः ।
भक्तेन पुत्रेण पितृमेधो मृताहनि । देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च ।
यमोक्तेश्चेति । तत्र मूलं चिन्त्यम् । तदयमर्थः । पञ्चमहायज्ञमध्ये देव
मनुष्ययज्ञानन्यानुमत्या ज्येष्ठ एव कुर्यात् । 'होमाग्रदानरहितं न भोक्तव्यं क
अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतम् ॥' इति व्यासोक्तेश्च । यस्य तु
कृते वैश्वदेवेन्नं सिद्ध्येत्तेन तूष्णीमग्नौ किंचित् क्षिप्त्वा भोक्तव्यम् । यस्य त
तोन्नं सिद्ध्येत्स नियुक्तमग्नौकृत्वाग्रं ब्राह्मणाय दत्त्वा भुञ्जीतेत्यविभक्ताधिकारे
चन्द्रोदये गोभिलोक्तेः ॥

वा पृथक्पाका द्विजातयः । कुर्युः पृथक्पृथग्यज्ञान् भोजनात् प्राग्दिने दिने ॥' 
ब्रह्मयज्ञसंध्यास्नानतर्पणादि तूक्तहेतोः पृथगेव । देवपूजा तूक्तवचनद्वयादेकत्र पृथ
दर्शग्रहणश्राद्धादि त्वेकस्यैव । तीर्थश्राद्धाद्यपि युगपत्सर्वेषामविभक्तानां प्राप्तावेक
भेदेन प्राप्तौ भिन्नम् । गयाश्राद्धेप्येवम् । 'एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्वि
तेषां तु समवेतानां यद्येकोपि गयां व्रजेत् । तारिताः स्मो वयं तेन स याति
गतिम् ॥' इति हेमाद्रौ कौर्मोक्तेः ॥ काम्येपि दानहोमादावन्यानुमत्यै
कारः । द्रव्यासाध्याजपादौ तां विनापि । अपरार्के पैठीनसिः—'विभक्तस्तु
क्कार्यं प्रतिसंवत्सरादिकम् । एकेनैवाविभक्तेषु कृते सर्वैस्तु तत्कृतम् ॥' सांवत
पूर्वाणि मासिकान्येकत्रैव तदाह लघुहारीतः—'सपिण्डीकरणान्तानि यानि श्रा
षोडश । पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित् ॥ सपिण्डनं मासिको
णम् । 'अर्वाक्संवत्सराज्ज्येष्ठः श्राद्धं कुर्यात्समेत्य तु । ऊर्ध्वं सापिण्डीकरणात् सर्वे
पृथक्पृथक् ॥' इति व्यासोक्तेः । उशनाः—'नवश्राद्धं सपिण्डत्वं श्राद्धान्या
षोडश । एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥ मघात्रयोदशीश्राद्धं त्वविभक्ता
पृथक्॥'इत्युक्तं प्राक् । यत्तु वृद्धवसिष्ठः—'मासिकं च वृषोत्सर्गं सपिण्डीकरणं
ज्येष्ठेनैव प्रकर्तव्यमाब्दिकं प्रथमं तथा ॥' इति तन्निर्मूलम् । बह्वृचपरि
'नवश्राद्धं सह दद्युः ॥' इति ॥

अथ तीर्थश्राद्धम् ॥ तत्र यद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेवजागर्ति
किंचिदुच्यते । तत्र यात्रायां—'सहाग्निर्वा सपत्नीकोगच्छेत्ती
संयतः । प्रायश्चित्ती व्रती तीर्थं पत्नीविरहितोपि वा । यज्ञेष्वन

तीर्थश्राद्धनिर्णयः ।

वा यश्च वा मन्त्रसाधकः ॥' इति कौर्मादिवचनात्साग्नेः सपत्नीकस्यैवाधिक
भारते—'ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम । न वियोनिं व्रजन्त्येते स्नान
महात्मनः ॥' स्कान्दे विधवाधर्मेषु—'स्नानं दानं तीर्थयात्रां विष्णुनामग्रहं मु
एतत् पुत्राद्यनुमत्यैव । सधवायाः पत्या सहैवेति प्रागुक्तम् । काशीखंडे—'मातुः
क्षेप्तुमनास्तथास्थि सुतस्तु कुर्यात् खलु तीर्थयात्राम् ।' तद्विधिः स्कान्दे—'तीर्थ
चिकीर्षुः प्राग्विधायोपोषणं गृहे । गणेशं च पितॄन् विप्रान् साधून् शक्त्या प्रपूज्य च
पारणको हृष्टो गच्छेन्नियमधृक् पुनः । आगत्याभ्यर्च्य च पितॄन् यथोक्तफलभाग्भ
उपवासात् प्राग मुण्डनं च कार्यम् । 'प्रयागे तीर्थयात्रायां पित
वियोगतः । कचानां वपनं कुर्याद्यथा न विकचो भवेत् ॥'

तीर्थयात्राविधिः ।

ये भारतेऽस्मिन् पितृकर्मतत्पराः संधार्य केशानतिभक्तिभाविताः । ऋणक्षयार्थं
मागतास्तेषामृणं संक्षयमेष्यति ध्रुवम् ॥' इति निषेधात् । गयायात्राङ्गं वपनं
मित्याहुः । वस्तुतस्तु–'गयाधिकरणकस्यैवायं निषेधः । न तु यात्राङ्गस्य श्र
इत्युक्तेः । 'विशालं विरजं गयाम्' इत्यनेनैकवाक्यत्वाच्च । श्राद्धं च षण्णव
वा घृतेन कार्यम् । 'गच्छेद्देशान्तरं यस्तु श्राद्धं कुर्यात्ससर्पिषा ।' इति विष्णु
यात्राङ्गवृद्धिश्राद्धोक्तेश्च ॥

श्राद्धं च पारणादिने एव । 'उपोष्य रजनीमेकां प्रातः श्राद्धं विधाय च
ब्राह्मणान्नत्वाभुक्त्वा प्रस्थितवान् सुधीः ॥' इति **स्कान्दलिङ्गात्** । **गौ**
**गौतमः**–'तीर्थयात्रासमारम्भे तीर्थात् प्रत्यागमेपि च । वृद्धिश्राद्धं प्रकुर्वीत
समन्वितम् ॥' वृद्धिपदं तद्धर्मार्थं श्राद्धोत्तरं यात्रासंकल्प इति **भट्टाः** व
उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः । विधाय कार्पटीवेषं ग्रामं गत्वा
ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ॥' घृतस्य भोजनं, तच्च क्रोशमध्
त्तरं क्रोशगमननिषेधात् । 'ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः ।' गयाय
न्यत्रेति **केचित्** । **हेमाद्रिस्तु**–'गयायां श्राद्धदिने एव प्रस्थानम् ॥
श्राद्धोत्तरदिने' इत्याहुः । **प्रभासखण्डे**–'यच्चान्यं कारयेच्छक्त्या तीर्थयात्र
स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणम् ॥' यात्रामध्ये आशौचे रजसि
पर्यन्तं स्थित्वा तदन्ते गच्छेत् । मार्गवैषम्ये त्वदोषः । यात्रामध्ये तीर्थान्तरप्र
दि कार्यमेव । वाणिज्याद्यर्थं गतेन तु मुण्डनोपवासादि न कार्यमिति प्र
**भट्टाः** । वस्तुतस्तु तत्रापि मुण्डनोपवासश्राद्धादि कार्यम् । 'अर्धं तीर्थफ
प्रसङ्गेन गच्छति ।' इति **ब्राह्मोक्तेः** । **स्कान्दे**–'द्विभोजनं तृतीयांशं हरे
च । वाणिज्यं त्रींस्तथा भागान् हन्ति सर्वं प्रतिग्रहः ॥' यानं धर्मचतुर्थांशं ह
च ।' इत्युत्तरार्धपाठान्तरम् ॥

अत्र नदीषु **विशेषः**–'मार्गेन्तरा नदीप्राप्तौ स्नानादि परपारतः ।
स्त्वत्या एष मार्गगतो विधिः ॥' यत्तु–'पितॄन् स तर्पयित्वा तु नदीस्तरति
तस्यासृक्पानकामास्ते भवन्ति भृशदुःखिताः ॥' इति तत्सरस्वतीपरम् ।
'तीर्थं प्राप्यानुषङ्गेण स्नानं तीर्थे समाचरेत् । स्नानजं फलमाप्नोति तीर्थ
तु ॥' **स एव**–'न स्रवन्तीमतिक्रामेत्' । अनवसिच्य तीर्थप्राप्तौ तु **प्रभ**
'यानानि तु परित्यज्य भाव्यं पादचरैर्नरैः । लुठित्वा लोठनीं तत्र कृत्वा

शिनी ॥' इति मन्त्रवत्स्नानं च वपनोत्तरं कार्यम् । 'पूर्वमावाहनं तीर्थे
नं तदनन्तरम् । ततः स्नानादिकं कुर्यात् पश्चाच्छ्राद्धं समाचरेत् ॥' इत्युक्त
यत्तु—'गत्वा स्नानं प्रकुर्वीत वपनं तदनन्तरम् ।' इति तन्मुशलस्नानपरम् । क
खण्डे—'तीर्थोपवासः कर्तव्यः शिरसो मुण्डनं तथा ॥' उपवासे तत्रैवोक्तम्—
तीर्थप्राप्तिः स्यात्तदह्नः पूर्ववासरे । उपवासः प्रकर्तव्यः प्राप्तेऽह्नि श्राद्धदो भवेत् ॥'
'उपवासं ततः कुर्यात्तस्मिन्नहनि सुव्रतः ।' इति प्राप्तिदिनेषूपवासोक्तेर्विकल्पः ।
तु स्कान्ददेवलौ—'मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः । वर्जयित्वा कुरुक्षेत्रं
विरजं गयाम् ॥' विरजं लोणारप्रसिद्धम् । महातीर्थपरः सर्वतीर्थशब्दः ॥

अत्र विशेषः स्मृत्यन्तरे—'ऊर्ध्वमब्दाद्द्विमासोनात्पुनस्तीर्थं व्रजेद्यदि । मुण्ड
वासं च ततो यत्नेन कारयेत् । तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विज ।' इति वा
'प्रयागे प्रतियात्रे तु योजनत्रय इष्यते । क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सिता
तथा च बृहस्पतिः—'क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवम् । पित्रादिमृत
प्रायश्चित्तेथ तीर्थके ॥' अपरार्के स्कान्दे—'उदङ्मुखः प्राङ्मुखो वा वपन
येत्सुधीः । केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ॥' इदं प्रयागे सधव
समूलं भवतीति भट्टाः । युक्तं तु—'सर्वान् केशान् समुद्धृत्य छेदयेदंगुलि
एवमेव हि नारीणां शस्यते वपनक्रिया ॥' इति । तच्चाकृतचूडानां न क
केचित् । तत्त्वं तु नैमित्तिकत्वात् पित्रादिमृतवत् कार्यमेवेति । तदपि प्रयागे
नान्यत्र । तच्च यतिभिस्तीर्थेपि ऋतुसंधिष्वेव कार्यं नान्यदा । 'कक्षोपस्थशि
मृतुसंधिषु वापयेत् ।' इति स्मृतेः । इदं जीवत् पितृकेणापि तीर्थे कार्यम् । न च
पिण्डदानं च इति दक्षवचनेन निषेधः । 'विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं
यो वापयति लोमानि स पुत्रः पितृघातकः ॥' इति स्मृत्या तत्संकोचात्
प्रयागे प्रतियात्रम् । अन्यतीर्थे आद्ययात्रायामेवेति शिष्टाः । ततः स्नानम

परार्थे तु मार्कण्डेयपुराणे—'मातरं पितरं जायां भ्रातरं सुहृदं गुरुम्
द्दिश्य निमज्जेत अष्टमांशं लभेत सः ॥' पैठीनसिः—'प्रतिकृतिं कुशमयीं ती
मज्जयेत् । मज्जयेच्च यमुद्दिश्य सोष्टभागफलं लभेत् ॥' ततस्तर्पणश्राद्धे पृथ्वी
दये ब्रह्मदेवीपुराणकाशिखण्डादिषु—'अकालेप्यथ वा काले तीर्थश्राद्धं
णम् । अविलम्बेन कर्तव्यं नैव विघ्नं समाचरेत् ॥' मात्स्ये—'पितृणां चैव
इति तुर्यपादः । तत्र देवता महालये प्रागुक्ताः । शङ्खदेवलौ—'तीर्थद्रव्योप

तस्मान्न कालस्तत्र कारणम् ॥' आशौचेपि कार्यम् । 'विवाहदुर्गयज्ञेषु यात्रायां कर्मणि । न तत्र सूतकं तद्वत्कर्म यज्ञादि कारयेत् ॥' इति **पैठीनसिस्मृतेः** । नीमकरणे त्वाशौचान्ते एव कुर्यात् । **प्रभासखण्डे**–'न वारं न च नक्षत्रं न का कारणम् । यदैव दृश्यते तीर्थं तदा पर्वसहस्रकम् ॥' मलमासेपि कार्यम् । 'नित्ये त्तिके कुर्यात् प्रयतः सन्मलिम्लुचे । तीर्थश्राद्धं गजच्छायां प्रेतश्राद्धं तथैव इति **बृहस्पतिस्मृतेः** ॥

एतच्चाशौचे प्रकृतभोजनस्य रात्रौ वा स्नानश्राद्धादिकमाकस्मिकतीर्थप्राप्तावा श्राद्धविषयं ग्रहणादिवत् । न तु बुद्धिपूर्वमाशौचादौ तीर्थप्राप्तिः कार्या । मलमा मासद्वये तीर्थश्राद्धं कार्यमिति **चन्द्रिकायां देवीपुराणे**–'श्राद्धं च तत्र कर्तव्य वाहनवर्जितम् ॥' **हेमाद्रौ**–'अर्घ्यमावाहनं चैव द्विजांगुष्ठनिवेशनम् । तृप्ति विकिरं तीर्थश्राद्धे विवर्जयेत् ॥' **भविष्ये**–'आवाहनं विसृष्टिश्च तत्र तेषां न वि आवाहनं न तीर्थे स्यान्नार्घ्यं दानं तथा भवेत् ॥ आहूताः पितरस्तीर्थे कृ संति वै यतः ॥' अग्नौकरणं च नेति **रत्नावल्याम्** । अत्र षड्दैवते श्र मात्रादीनां पिण्डमात्रं देयम् । 'हविःशेषं ततो मुष्टिमादायैकैकमादृतः । पितृपत्नीनां पिण्डनिर्वपणं चरेत् ॥' इति तीर्थोपक्रमे **देवलोक्तेरिति पृथ्वीचन्द्रः** सामान्यपिण्डं दद्यात् । 'ततः पिण्डमुपादाय हविषः संस्कृतस्य च । ज्ञातिवर्गस्य सामान्यं पिण्डमुत्सृजेत् ॥' इति तेनैवोक्तेः । **पाद्मे**–'तीर्थश्राद्धं प्रकुर्वीत पक्वान्नेन षतः । आमान्नेन हिरण्येन कन्दमूलफलैरपि ॥'

पिण्डद्रव्याणि **देवीपुराणे हेमाद्रौ ब्राह्मे च**–'सक्तुभिः पिण्डदानं च पायसेन वा । कर्तव्यमृषिभिः प्रोक्तं पिण्याकेन गुडेन वा ॥' पिण्डानां ती एव । नान्या प्रतिपत्तिरित्युक्तं प्राक् । एतच्च विधवयाऽपुत्रया कार्यम् । न सपुत्रये प्राक् । 'सपुत्रया न कर्तव्यं भर्तुः श्राद्धं कदाचन ।' इति **स्मृतेश्च** । अनुपनीते कार्यम् । 'एतच्चानुपनीतोपि कुर्यात्सर्वेषु पर्वसु' । इति **पाद्मे** तीर्थश्राद्धमुपक्रम्यो एतच्च जीवत्पितृकेणापि कार्यमित्युक्तं प्राक् । 'न कुर्यात्सूतकं भिक्षुः श्राद्धपिण्ड क्रियाम् । त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ॥ गोत्रादिचरणं सर्वं पितृमा धनम् ।' इति **स्मृतेः** । गयायां तूक्तं **वायवीये**–'दण्डं प्रदर्शयेद्भिक्षुर्गयां गत्व पिण्डदः । दण्डं स्पृष्ट्वा विष्णुपदे पितृभिः सह मुच्यते । गयायां मुण्डपृष्ठे च कूपे यू तथा । दण्डं प्रदर्शयन् भिक्षुः पितृभिः सह मुच्यते' ॥ **कृत्यरत्ने प्रभासखण्डे**– चेत् प्रतिगृह्णाति ब्राह्मणो वृत्तिदुर्लभः । दशांशमर्जितं दद्यादेवं कुर्वन्न हीयते ॥'

॥ श्रीः ॥

# अथाशौचप्रकरणम् ।

नारायणात्मजश्रीमद्रामकृष्णस्य सूनुना ।
कमलाकरसंज्ञेनाशौचं निर्णीयतेधुना ॥ १ ॥

**मरीचिः**–'आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्य
शाहं सूतकं भवेत् ॥' **बृहत्पराशरः**–'गर्भस्रावे तु नैरुक्ता रात्रयो माससंमिताः । ग
गर्भस्य विद्वांसो मासादर्वाक् चतुर्थकात् ॥ पातमूर्ध्वं वदन्त्येके तत्राधिकं तु सूतक
स्रावे मातुस्त्रिरात्रं स्यात्सपिण्डाशौचवर्जनम् । पाते मातुर्यथामासं सपिण्डानां दि
यम् ॥' अत्र सर्वत्र मूलं **मिताक्षरायां** ज्ञेयम् । अत्र मासत्रये त्रिरात्रं स्यादित्यनुव
रजस्वलात्वेनैव तत्सिद्धेः । यद्यप्यनेन चतुर्थमासेपि त्रिरात्रं प्राप्त

जननाशौचम् ।

तथापि–'षण्मासाभ्यन्तरं यावद्गर्भस्रावो भवेद्यदि । तदा मास
स्तासां दिवसैः शुद्धिरिष्यते ॥' **इत्यादिपुराणात्** । 'रात्रिभिर्मासतुल्याभिर्गर्भ
विशुद्ध्यति ।' इति **मनूक्तेः** गर्भस्रावे यथामासमचिरे तूत्तमे त्रयः ।' इति **मरी**
**क्तेश्चतूरात्रं** ज्ञेयम् । अचिरे त्रिमासमध्ये । उत्तमे ब्राह्मणे । अत्र सपिण्ड
स्नानम् । सद्यःशौचं सपिण्डानां गर्भस्य पतने सति' । इति **तत्रैवोक्ते**
एतदाचतुर्थमासात्पाते त्रिदिनस्योक्तेः । अकारणायाः शुद्धेरसंभवात्सद्यः
स्नानपरम् । एवमग्रेपि । 'गर्भस्रावे स्नानमात्रं पुरुषस्य' इति **वृद्धवसिष्ठोक्ते**
पुरुषस्येति सपिण्डोपलक्षणं पूर्वोक्तवचनात् । आचतुर्थमासं सपिण्डानां न स्
किंतु पुंस एव । पाते त्रिदिनं निर्गुणपरम् । गुणवतस्तु–'अजातदन्ते तनये शिशौ
च्युते तथा । सपिण्डानां तु सर्वेषामेकरात्रमशौचकम् ॥' इति **यमोक्तेरे**काह
**मदनपारिजातः** ॥

सप्तममासादि दशाहम् । एतत्सर्ववर्णविषयम् । 'तुल्यं वयसि सर्वेषामतिक्रान्ते
च ।' इति **व्याघ्रोक्तेः** । **पराशरः**–'जाते विप्रो दशाहेन द्वादशाहेन भूमिपः । वै
पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥' **संवर्तः**–'जाते पुत्रे पितुः स्नानं सचै
विधीयते । माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ॥' पुत्रपदात्कन्योत्पत्तौ
पितुः **स्नानमिति हारलतायाम्**।तन्न।पुत्रपदस्य 'पौत्री मातामहस्तेन' इति कन्याय

मिति **स्मार्तगौडास्तन्न** । मूलैक्येन ज्ञानमात्रपरत्वात् । इदं सर्ववर्णसमम्
तिका सर्ववर्णेषु दशरात्रेण शुद्ध्यति । ऋतौ च न पृथक् शौचं सर्ववर्णेष्वयं वि
इति **हारलतायां प्रचेतसोक्तेः** । यत्तु **ब्राह्मे**–'ब्राह्मणी क्षत्रिया वैश्या
दशभिर्दिनैः । गतैः शूद्रा च संस्पृश्या त्रयोदशभिरेव च ॥' इति **प्रयोगपारि**
**पारस्करः**–'द्विजातेः सूतिका या स्यात्सा दशाहेन शुद्ध्यति । त्रयोदशेह्नि संप्र
शुद्ध्यत्यसंशयः ॥' इति, तदस्पृश्यत्वपरम् ॥

**अङ्गिराः**–'सूतके सूतिकावर्ज्यं संस्पर्शो न निषिध्यते । संस्पर्शे सूतिकायास्तु
मेव विधीयते ॥ नाशौचं सूतके पुंसः संसर्गं चेन्न गच्छति । रजस्तत्राशुचि ज्ञे
पुंसि न विद्यते ॥' संसर्गो मैथुनम् । स्पर्श इत्यन्ये । मातुरेव सूतकम् । तां स्पृ
**हारलतायां सुमन्तूक्तेरिति** तन्न । 'संस्पर्शे सूतिकायास्तु स्नानमेव विधी
इति स्नानमात्रोक्तेः । **सौमन्तवचनस्य** स्नानपर्यन्तमस्पृश्यत्वमात्रबोधकत्वात्
कारो वालस्पृश्यत्वार्थः । **माधवस्तु**–'यस्तैः सह सपिण्डोपि प्रकुर्याच्छयना
बान्धवो वा परो वापि स दशाहेन शुध्यति ॥' इति **बृहस्पतिस्मृतेः** ।
सनादिरूपं संसर्गमाह **पराशरः**–'यदि पत्न्यां प्रसूतायां द्विजः संपर्कमृच्छति ।
तु भवेत्तस्य यदि विप्रः षडङ्गवित् ॥' पितृवत्सापत्नमातुः प्राक् स्नानादस्पृश्यत
सूतिकास्पर्शे तु यावदाशौचम् 'अन्याश्च मातरस्तद्वत्तद्गृहं न व्रजन्ति च ।' इति
**क्तेरिति शुद्धितत्त्वादयस्तन्न** । 'तद्गेहं गत्वा सूतिकां यदि न स्पृशति, त
श्या अन्यथा न' इति तस्यार्थः ॥

कर्मानधिकारमाह **पैठीनसिः**–सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि
न्मासेन स्त्रीजननीम् ।' इदमाशौचोत्तरम् । अन्यथा शूद्र्याः सपिण्डानामाशौचे त
स्याद्विध्यनुवादविरोधश्च । एतच्च सोमयागादिश्रौतभिन्नपरम् । 'प्रजातायाश्च द
दूर्ध्वं स्नानात्' इति **कात्यायनोक्तेः**। **व्यासः**–'प्रथमे दिवसे षष्ठे दशमे चैव
त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥' पुत्रशब्दोपत्यमात्रपरः । **ब्राह्मे**–
पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयान्ति तस्मात्तदहः पुण्यं षष्ठं च सर्वदा ॥'
विशेषः प्रागुक्तः ॥

अत्र **प्रयोगपारिजातः**–'पुंप्रसवे दशाहः स्त्र्यपत्ये तु त्र्यहः । पुंजन्मनि
ण्डानां दशाहाच्छुद्धिरिष्यते । त्र्यहादेकोदकानां च एकाहं सूतकं क्वचित् । स्त्रीज
सपिण्डानां सोदकानां त्र्यहाच्छुचिः । स्त्रीषु त्रिपुरुषं ज्ञेयं सापिण्डत्वं द्विजोत्तम
इत्यग्निस्मृतेरित्याह । **मेधातिथिरपि**–'अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञा

अत्रेदं **तत्त्वम्**—'पञ्चमात्सप्तमाद्धीमान् यः कन्यामुद्वहेद्द्विजः । गुरुतल्पी स विज्ञेय
इत्यादिविरोधात्त्रिपुरुषं प्रकरणान्मरणाशौचपरम् । **वासिष्ठे** तदग्रे उदकदानोक्तेः
तेन कन्याप्रसवेपि साप्तपौरुषं दशरात्रमेव । न च कन्यापुत्रकृतं प्रसवे बलाबलं क्वापि
क्तम् । **अग्निस्मृति**स्त्वनुकल्पो विगीता वेति **सर्वसिद्धान्तः** । अन्यथा त्रिपु
सापिण्डानामष्टमादिसोदकानां च त्र्यहं साम्यायोगात् । चतुर्थादिसप्तमान्तानां
किमपि न स्यात् । तेन कन्याप्रसवे दशाह एव । किंच—स्त्रीजन्मोद्देशेन त्रिपु
सापिण्ड्यं तेषां च त्रिरात्रमित्यनेकार्थविधिः कथं स्यात् । वाक्यभेदापत्तेः
न च चतुर्थादीनां सोदकत्वं क्वापि सिद्धम् । तेन त्रिपुरुषं चतुर्थादीनां स्त्रीजन्मनि सो
कत्वं विधाय पुनस्तेषां त्रिरात्राशौचविधौ विध्यनुवादविरोधो वाक्यभेदद्वयं चेत्यसंबा
र्थाग्निस्मृतिर्हेया ॥

**अथ मृताशौचम्** ॥ **हारीतः**—'जातमृते मृतजाते वा सपिण्डानां दशाहम्
इति स्वाशौचपरम् । जातमृते नालच्छेदोर्ध्वम् । 'यावन्न छिद्यते
तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥'

मृताशौचनिर्णयः ।

**जैमिन्युक्तेः** 'नाड्यां छिन्नायामाशौचम्' इति **हारीतोक्तेश्च** । नाडीछेदात
मातुः स्पर्शेपि न दोष इति **शुद्धितत्त्वोक्तिः** परास्ता । नाभिच्छेदात्प्राक् मृ
**बृहन्मनुः**—'जीवञ्जातो यदि ततो मृतः सूतक एव तु । सूतकं सकलं मातुः पित्रा
त्रिरात्रकम् ॥' इदं च प्रसवाशौचमेव । शावनिमित्तं स्नानमात्रम् । 'प्राङ्नामक
त्सद्यः शौचम्' इति **शंखोक्तेः** ॥

अत्र **कश्चिदाह**—'नामकरणमाशौचान्तकालोपलक्षणम् ॥' 'आशौचव्य
नामधेयम्' इति **विष्णूक्तेः** । 'आशौचे च व्यतिक्रान्ते नामकर्म विधीयते ।' इति
क्तेश्च । नाम्नो नियतकालत्वात् । न च—'नामधेयं दशम्यां तु द्वादश्यां वापि कार
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥' इति **मनूक्ते**रनियतकालत्वम् । दश
मतीतायां विप्रः । द्वादश्यामतीतायां क्षत्रियः । वैश्यः । षोडशे । शूद्र एकत्रिंशे इ
ज्ञेयम् । पुण्य इत्याद्यनुकल्पः । तेन नाम्नः कालोपलक्षणम् । एवं दन्तजननेपि । '
जन्म सप्तमे मासि' **इत्युपनिषदि** नियतकालत्वात् । चौले तु न कालोपलक्ष
'प्रथमेब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ।' इति **मनूक्तेः** । 'ततः संवत्सरे पूर्णे
कर्म विधीयते । द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनात् ॥' इति **यमो**
तस्या नियतकालत्वात् । इति **तन्मन्दम्** । चौलवन्नामदन्तजननयोरपि स्व

मा च विष्णुवचनाद्दाहाभावविषयेति वक्ष्यामः । त्रिवर्षादावपि स्यादिति चेन्न
दन्तादिनिमित्तविशेषाशौचैः पूर्वस्य बाधात् । तदुक्तम्—'पूर्वाबाधेन नोत्पत्ति
र्हि सिध्यति ।' इति । 'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे च' इति पा
द्वादश्यामपरे रात्र्यां मासे पूर्णे तथापरे । अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषि
इति भविष्ये च नाम्नः कालानियमाच्च । न च प्राथम्याद्दशरात्रेऽतीते इ
कालः अन्यस्त्वनुकल्प इति वाच्यम् । चौलेऽपि तथापत्तेः । न च दन्तजनन
लक्षणे सदन्तजातमृतस्य दाहैकाहप्रसङ्गः । दशाहेन बाधात् । नामकरणोत्तरं
प्रवृत्तेः । 'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः । शावाशौचं न कर्तव्यं सू
विधीयते ॥' इति बृहन्मनूक्तेश्च । आशौचं दाहोपलक्षणम् । 'सूतकवत्' इ
स्करोक्तेः । यत्तु विष्णुः—'अनिवृत्ते दशाहे तु पञ्चत्वं यदि गच्छति ।
विशुद्धिः स्यान्न प्रेतं नोदकक्रिया ॥' इति तदपि प्रेताशौचनिषेधार्थं न तु सद्यस
वाक्यभेदात् । किंच—नामकालात्प्राङ्मृतस्य स्नानम् तदुत्तरं त्वेकाहादि ।
त्वेकादशाहे मृतस्य न किमपि स्यात् । अथ शंख वचने ल्यब्लोपे पञ्चमी, तदा
नोपपद्येत । 'नाम्नि वापि कृते सति' इति मन्वादिविरोधात् । कृतनाम्न इति
मिताक्षरादिविरोधाच्च न कालोपलक्षणं क्वापीति दिक् ॥

नामोत्तरं दन्तोत्पत्तेः प्राग्दाहे त्र्यहः । 'अदन्तजाते तनये शिशौ गर्भच्युते
सपिण्डानां तु सर्वेषामहोरात्रमशौचकम् ॥' इति यमोक्तेः
भावे तु स्नानमात्रम् । 'अदन्तजाते प्रेते सद्य एव नास्याग्निसंस्क

दन्तोत्पत्तेः प्रागाशौच-निर्णयः ।

इति विष्णुना दाहाभावे तदुक्ते । 'आ दन्तजन्मनः सद्यः' इति याज्ञवल्की
दाहविकल्पं चाह लौगाक्षिः—'तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च
कृतचूडानामन्यत्रापीच्छया द्वयम् ॥' अन्यत्राकृतचूडे । अत्र चूडाकरणं तृतीय
कालोपलक्षणार्थमिति मेधातिथिहरदत्तौ । मनुरपि—'नात्रिवर्षस्य कर्तव्या
वैरुदकक्रिया । जातदन्तस्य वा कुर्युर्नाम्नि वापि कृते सति ॥' इति । उदकं दाह
णम् । दन्तोत्पत्त्यनन्तरं प्राक्त्रिवर्षान्तान्मृतेऽहः । 'दन्तज
कृतचूडे त्वहोरात्रेण शुद्धिः ।' इति विष्णूक्तेः । त्रिवर्षोर्ध्वं
ऽकृतचूडे वा प्रागुपनयनात् त्र्यहः । 'यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः ।
दाहयित्वनमाशौचं त्र्यहमाचरेत् ॥' इत्याङ्गिरसोक्तेः । अकृतायामपि चूडायां
र्ध्वं दाहादि नियतम् । 'नात्रिवर्षस्य' इति वचनात् । कृतायां वर्षत्रयत्वादपि
तूष्णीमेव । अत्र ...

दन्तोत्पत्त्यनन्तरमाशौ-चनिर्णयः ।

उभयविधौ वाक्यभेदात् । त्रिवर्षात्प्राक् चूडाभावेऽग्निदाने त्र्यहस्तदभावे विष्णूक्तेरेक
इति माधवः । यत्तु कश्चिदाह—अत्र त्रिवर्षविषयादस्मादेवार्थात् त्रिवर्षोर्ध्वमपि तत्सिद्धि
विज्ञानेश्वरोक्तं च त्रिवर्षोर्ध्वमकृतचूडाविषयत्वं चिन्त्यम् । जातदन्तपदवैयर्थ्यादि
तत्तुच्छम् । दाहस्याविधेयत्वात् । 'नृणामकृतचूडानामशुद्धिर्नैशिकी स्मृता ।' इ
मनूक्तेः । त्रिवर्षोर्ध्वमेकाहापत्तेरर्थात् त्र्यहासिद्धेः । त्वयाप्यग्रे तथाङ्गीकारात्पदवैयर्थ्य
साम्याद्वाक्यार्थाज्ञानाच्चेत्यलं मिताक्षरार्थानभिज्ञदूषणेन । प्रथमवर्षादौ कृतचूड
सदा त्र्यहः । निवृत्तचूडकानां तु त्रिरात्राच्छुद्धिरिष्यते ।' इति मनूक्तेः । एतत्सर्वं प्रागु
सपिण्डानाम् ॥

मातापित्रोस्तु दशाहोर्ध्वं मृते सर्वत्र त्रिरात्रम् । 'बालानामजातदन्तानां त्रिरात्रे
शुद्धिः ।' इति कश्यपोक्तेः । 'वैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहम् ।' इति म
क्तेश्च । शुद्धितत्त्वादयो गौडास्तु—'अजातदन्तमरणे पित्रोरेकाहमिष्यते । दन्तज
त्रिरात्रं स्याद्यदि स्यातां तु निर्गुणौ ॥' इति कौर्मात्काश्यपं शूद्रपरम् । 'अनूढा
तु कन्यानां तथा वै शूद्रजन्मनाम् ।' इति त्र्यहानुवृत्तौ शंखोक्तेः । 'त्रिरात्रं तु भ
च्छूद्रे षण्मासेपि शिशौ मृते ।' इति मात्स्यसूक्ताच्च । दन्तजाते शूद्रे तु पञ्चाहः
यथाहाङ्गिराः—'शूद्रे त्रिवर्षान्न्यूने तु मृते शुद्धिस्तु पञ्चभिः । अत ऊर्ध्वं मृते शूद्रे द्व
शाहो विधीयते ॥ षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि । मासिकं तु भवेच्छौच
त्याङ्गिरसभाषितम् ॥' इति । यत्तु 'अनूढभार्यः शूद्रस्तु' इति शंखोक्तं मासाशौचं त
गुणशूद्रपरम् । निर्गुणे त्वनूढभार्ये शूद्रे त्रिवर्षोर्ध्वं द्वादशाहः । षडब्दोर्ध्वं मासः । ष
ब्दात् प्रागपि कृतोद्वाहे मास इत्याहुः । एतत् 'तुल्ये वयसि सर्वेषाम्' इति विरोधाच्छि
ष्टविगानान्नादर्त्तव्यमिति विज्ञानेश्वरादयः । दाक्षिणात्यानां तथैव । अन्यदेशे प्रागु
मिति गौडाः । एवं कन्यास्वपि । तास्वप्यजातदन्तासु मृतासु पित्रोरेकरात्रमि
माधवः । यत्तु विज्ञानेश्वरेणोक्तम्—'ऊनद्विवर्ष उभयोः सूतकं मातुरेव हि ।' इ
याज्ञवल्क्योक्तेः । गर्भस्थे प्रेते मातुर्दशाहं जाते उभयोः कृतनाम्नि सोदराणां च
पैङ्ग्योक्तेश्च पित्रोः सोदराणां च दशाहमस्पृश्यत्वमिति तन्नेदानीं प्रचरति । अत
स्मृत्यर्थसारे तन्नाद्दतम् । कन्यासु चौलात्प्राङ्मृतौ स्नानम् । 'अचूडायां तु कन्या
सद्यः शौचं विधीयते ।' इत्यापस्तम्बोक्तेः । इदं त्रिपुरुषमध्ये । 'अप्रत्तानां तु स्त्री
त्रिपुरुषी विज्ञायते' इति वासिष्ठोक्तेः । इदं वाग्दानोत्तरम् इति गौडास्तन्न । 'अ
त्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् ।' इति वचनात् ॥

चौलोत्तरं वाग्दानात्पूर्वं तास्वेकाहः । अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः

अतः शूद्रस्योपनयनस्थानीयविवाहात्पूर्वं त्रिरात्रम् । विवाहोत्कर्षे तु षोडशाब्द
त्रमेवेत्यपरार्काद्याः । शूद्रे निर्गुणे तु त्र्यब्दोर्ध्वं पञ्चाहः । षडब्दोर्ध्वं तु
द्वादशाहमिति गौडाः । सगुणानां षोडशाब्दोर्ध्वं तु विवाहाभावेपि पूर्णाशौच
तदुत्तरं प्राग्विवाहाद्भर्तृकुले च सप्तपुरुषावधि त्रिरात्रम् । 'अवारिपूर्वं प्रत्ता
प्रतिपादिता । असंस्कृता तु सा ज्ञेया त्रिरात्रमुभयोः स्मृतम् ॥' इति **मरी**
**रत्नाकरे शुद्धितत्त्वे च शङ्खः**–'पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृ
मृतायां नाशौचं कदाचिदपि शाम्यति ॥' यावज्जीवमाशौचमिति **वाचस्पति**

अथानुपनीते किंचिदुच्यते । नाम्नः पूर्वं खननमेव । तदूर्ध्वं वर्षत्रयात
भावेऽग्न्युदकदानविकल्पः । नात्रिवर्षस्य कर्तव्या बान्धवैरुदकक्रिया । जात
कुर्युर्नाम्नि वापि कृते सति ॥' इति **मनूक्तेः** । उदकक्रियासाहचर्याद्दाहोप
खनने तु नान्यदौर्ध्वदेहिकम् । 'ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः
**याज्ञवल्क्योक्तेः** । उदकमन्त्यकर्मपरमित्यपरार्कः । **यमः**–'ऊनद्विव
घृताक्तं निखनेद्भुवि । यमगाथां गायमानो यमसूक्तमनुस्मरन् ॥' **माधवीये**
'स्त्रीणां तु पतितो गर्भः सद्यो जातो मृतोऽथ वा । अजातदन्तो मासैर्वा मृतः
र्बहिः । वस्त्राद्यैर्भूषितं कृत्वा निःक्षिपेत्तं तु काष्ठवत् । खनित्वा शनकैर्भूमौ
विधीयते ॥' **अलंकरणमपि** वक्ष्यते । कृतचूडस्य तु त्रिवर्षात्प्रागूर्ध्वं वा
नियतम् । यत्तु **वासिष्ठः**–'ऊनद्विवर्षे प्रेते गर्भपतने वा सापिण्डानां त्रिरात्र
तत्प्रथमाब्दचूडापरम् । वर्षत्रयादूर्ध्वमकृतचूडस्यापि नियतम् । वर्षत्रयोर्ध्वमु
च तूष्णीमग्न्युदकदानम् । 'तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च ।' इ
**लौगाक्षिस्मृतेः** । पिण्डदानमपि कार्यम् । 'असंस्कृतानां भूमौ पिण्डं द
तानां कुशेषु' इति **प्रचेतसोक्तेः** । 'उदकदानं सापिण्डैः कृतचूडस्य' इ
**मोक्तेः** । उदकग्रहणमौर्ध्वदेहिकपरमिति **हरदत्तः** । 'द्वादशाद्वत्सरादर्वाक्
मरणे सति । सापिण्डीकरणं न स्यादेकोद्दिष्टानि कारयेत्' ॥ इति **हरदत्तधृ**
**तेश्च** । **मरीचिरपि**–'प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् ।' इति ।
तपरमिति **विज्ञानेश्वरः** । अत्र चूडैव पूर्वावधिः । पूर्ववाक्ये तु तद
उदकग्रहणस्योपलक्षणत्वाद्दाहः पूर्वावधिरिति **केचित्** । द्वादशाद्वत्सरादित
द्विजानूढशूद्रविषयम् । त्र्यहाशौचे पिण्डदानविधिमाह **पारस्करः**–'प्रथमे दि
स्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥ त्रींस्तु
येहि वस्त्रादि ...

विपत्तितः ॥ एकादशे द्वादशाहं वृषोत्सर्गविधिं विना ॥' तथा—'यत्र प्रमीयते बाल
प्रायः प्रदीयते । किंचित्समानवयसां संस्कृत्यान्नं यथाविधि ॥ भक्ष्यं भोज्यं च दा
तथा च सुखभक्षिका । तद्वस्त्राणि प्रदेयानि सोपानत्कानि तत्समे॥ कुमाराणां च बाल
भोजनं वस्त्रवेष्टनम् । यच्चोपजीवते बालस्तत्तद्विप्राय दीयते ॥' तथा—'भूमिनिक्ष
बाले आवर्षद्वयमाशिखम् । ततः परं खगश्रेष्ठ देहदाहो यथाविधि ॥' अचूडेप्यूर्ध्वं
ननिवृत्त्यर्थमावर्षद्वयमिति । प्रागपि कृतचूडस्य तन्निवृत्त्यर्थमाशिखामिति । तथा '
कर्मणि संजाते विपत्तिस्तु यदा भवेत् । सूतकान्ते प्रकर्तव्यं वृषस्योत्सर्जनं तथा ॥
दाहः प्रकर्तव्य उदकं तत्र निश्चितम् । श्राद्धानि शोडशापि स्युः सपिण्डीकरणं विन
इदं पञ्चवर्षोत्तरम् । 'जन्मतः पञ्चवर्षाणि भुङ्क्ते दत्तमसंस्कृतम् । पञ्चवर्षाधिके बाले
त्तिर्यदि जायते ॥ वृषोत्सर्गादिकं कर्म कर्तव्यमुदकं ततः । अहन्यहनि संप्राप्ते कु
श्राद्धानि षोडश ॥ पायसेन गुडेनैव पिण्डं दद्याद्यथाक्रमम् । उदकुम्भप्रदानं च प
नानि यानि च ॥ दीपदानानि यत्किंचित्पञ्चवर्षाधिके सदा । कर्तव्यं तु खगश्रेष्ठ
र्वाक् प्रेततृप्तये ॥ स्वाहाकारेणैव कार्याण्येकोद्दिष्टानि षोडश । ऋजुदर्भैस्तिलैः
प्राचीनावीतिना तथा ॥' इति तत्रैवोक्तेः । अत्र मूलं चिन्त्यम् । वार्षिकादि तु न
त्येव । सपिण्डनाभावे पितृत्वायोगाद्वचनाभावाच्च ॥

**दिवोदासीये**—'अव्रते निधनं प्राप्ते विप्रादौ शूद्रजातिवत् । क्रियाः सर्वाः समु
सापिण्डीकरणं विना ॥ उदकं पिण्डदानं च कृतचूडे विधीयते' ॥ इति । स्त्रीणां
हात्प्रागुदकपिण्डदानविकल्पः । 'स्त्रीणां चैके प्रत्तानाम्' इति **गौतमोक्तेः** । '
द्राश्च सधर्माणः' इति वचनात् शूद्रेप्येवम् । एतद्योनिमित्ताशौचं सर्ववर्णसमम् ।
वयसि सर्वेषामतिक्रान्ते तथैव च ।' इति **व्याघ्रपादोक्तेः** । यानि तु—'निर्वृत्त
विप्रे त्रिरात्राच्छुद्धिरिष्यते ।' इति । 'निर्वृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते ।
त्रिवर्षे न्यूने तु मते शुद्धिस्तु पञ्चभिः ॥ अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते ।
वर्षान्तमतीते तु शूद्रे मासमशौचकम्' ॥ इत्यङ्गिरसादीनि, तानि विशिष्टविगाना
व्यानीति **विज्ञानेश्वरमदनपारिजातादयः** । तेनैतद्वशाच्छूद्राणां व्यवस्था प्र
हेयैव । 'तुल्ये वयसि सर्वेषाम्' इति **दाक्षिणात्यपरम्** । अन्यदेशे कौमोक्ता
स्थेति शुद्धितत्त्वे ॥

**अथ जात्याशौचम्** । तच्च द्विजपुंसामुपनयनोर्ध्वं प्रवर्तते । 'त्रिरात्रमाव्रतादे
रात्रमतः परम् । क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु ॥ त्रिंश

चपरत्वे 'दशरात्रमतः परम्' इत्यनेन पौनरुक्त्यापत्तेरिति **शुद्धिविवेकादयस्तन्न** स्मृतिभेदात्त्रिरात्रं दशरात्रं वेति विकल्पायोगाच्च। यस्तु पुत्राणां वेदानध्याप्य वृत्तिं विद धाति तत्राहाश्वलायनः–'द्वादशरात्रं महागुरुषु दानाध्ययने वर्जयेरन्' इति ॥ अत्र यावदुक्तनिषेधो वास्पृश्यत्वमात्रं वा न तु कर्मानधिकारः । एकादशाहान्ते वैश्वदेवो क्तेः ॥ 'एकादशाहिकं मुक्त्वा तत्र ह्यंते विधीयते ।' इति । **शुद्धितत्त्वे** तु–'त्रयः पुरु षस्यातिगुरवो भवन्ति माता पिताचार्यश्च' इति **विष्णूक्तेः** पित्रादयो महागुरवः । भर्ता प्युक्तो **रामायणे**–'पतिर्बन्धुर्गतिर्भर्ता दैवतं गुरुरेव च ।' **शातातपः**–'पतिरेको गुरु स्त्रीणां सर्वस्याभ्यागतो गुरुः ।' एकपदमूढानां पितृमातृनिषेधार्थम् । सोदकानां त्रिरा त्रम् । 'त्र्यहात्तूदकदायिनः' इति **मनूक्तेः** । **अग्निपुराणे**–'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते । समानोदकभावस्तु निवर्तेत चतुर्दशे ॥ जन्मनामस्मृतेर्वैके तत्पर गोत्रमुच्यते ॥' **बृहस्पतिः**–'दशाहेन सपिण्डास्तु शुद्धयन्ति प्रेतसूतके । त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्धयन्ति गोत्रजाः ॥'

स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जात्याशौचम् । 'वैवाहिको विधिः स्त्रीणामौपनायनिक स्मृतः ॥' इत्युक्तेः । 'दत्तानां भर्तुरेव हि ।' 'स्वजात्युक्तमशौचं स्यान्मृतके जातके तथा। इति **माधवीये** ब्राह्माच्च । शूद्रस्य विवाहाभावेपि षोडशवर्षोर्ध्वं मासः । 'अनूढभार्य शूद्रस्तु षोडशाद्वत्सरात्परम् । मृत्युं समधिगच्छेच्चेन्मासात्तस्यापि बान्धवाः । शुद्धिं सम धिगच्छन्ति नात्र कार्या विचारणा ॥' इत्यपरार्के **शंखोक्तेः** । **निर्णयामृतमदन पारिजातादौ** त्वन्यथोक्तम् । **हारीतः**–'आमौञ्जीबन्धनाद्विप्रः क्षत्रियश्च धनुर्ग्रहात् आप्रतोदग्रहाद्वैश्यः शूद्रो वस्त्रद्वयग्रहात् ॥' धनुःप्रतोदावष्टमेब्दे द्वादशे वस्त्रद्वयमिति **मेधातिथिस्तु**–'त्रिरात्रमाव्रतादेशात्' इत्यत्र व्रतं कालोपलक्षणार्थम् । स च कालः स्वकीयः सर्वेषां चाष्टमवर्षरूपः । तेन चतुर्णामपि वर्णानामुपनयनाभावेप्यष्टमादूर्ध्वं पूर्णमेवाशौचम् । तत्रापि 'प्रागष्टमाच्छिशवः प्रोक्ताः' इति स्मृत्यन्तरादूर्ध्वं संपूर्णमर्वाक् त्रिरात्रम् । **येपि** 'आषोडशाद्भवेद्बालः' इत्याहुः । तेषामप्यष्टमादूर्ध्वं शूद्रे मास एव 'ऊर्ध्वमष्टभ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकी ।' इति वचनादित्याह । **हारलताशु द्धितत्त्वादिगौडग्रन्थेष्वप्युक्तम्** । 'अनुपनीतो विप्रः' इत्युक्त्वा-'म्रियते यत्र तत्र स्यादाशौचं त्र्यहमेव हि । द्विजन्मनामयं कालस्त्रयाणां तु षडाब्दिकः ॥' इत्यादिपुरा णोक्तेरुपनयनं कालोपलक्षणम् । षडब्दपदं मासत्रयाधिकपरम् । 'गर्भाष्टमेष्टमे वाब्दे' इत्युक्तेः । यत्तु **जाबालः**–व्रतचूडा द्विजानां च प्रतीतिषु यथाक्रमम् । दशाहत्र्यह

एकाहैः शुद्ध्यन्त्यापि हि निर्गुणाः ॥' इति । द्विजा दन्ताः । इदं प्रतीतिष्वित्युक्तेः
ब्दोपनीतपरामिति । तदेतन्नाद्रियन्ते वृद्धाः ॥

यानि तु **पराशरः**—'एकाहाद्ब्राह्मणः शुध्येद्योऽग्निवेदसमन्वितः । त्र्यहात्केवल
द्विहीनो दशभिर्दिनैः ॥' केवलवेदः केवलश्रौताग्नेरप्युपलक्षणम् । अयं संकोचो होम
यनपर एव । न तु संध्यादाविति **हारलतायाम्** । **अङ्गिराः**—'सर्वे
वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥' **देव**
आशौचं दशरात्रं तु सर्वेषामपरे विदुः । निधने प्रसवे चैव पश्यन्तः कर्मणः क्षय
अत्यन्तोत्कृष्टस्य कर्महानौ पीडावतो विप्रपरिचर्यापरम् । शूद्रे दशरात्रमिति **हा**
**तायाम्** । **दक्षः**—'सद्यःशौचं तथैकाहस्त्र्यहश्चतुरहस्तथा । षड्दशद्वादशाहश्च
मासस्तथैव च । मरणान्तं तथा चान्यद्दशपक्षास्तु सूतके ॥' **मिताक्षरायां** स्
न्तरे—'चतुर्थे दशरात्रं स्यात्षण्निशाः पुंसि पञ्चमे । षष्ठे चतुरहाच्छुद्धिः सप्तमे
तु ॥' इत्यादीनि तान्यापदनापद्गुणवदगुणवद्विषयाणि देशान्तरभेदाद्वा ज्ञेयानि ।
शौचादिषडहान्ताः पक्षा यायावरादिपराः । अत्र मरणान्तं जननादिनिमित्ताद्वि
'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु ।' इत्युक्तत्वान्मधुपर्कपश्वालम्भवत्
विगानान्नादर्तव्यमिति **विज्ञानेश्वरः** । 'अस्नात्वा चाप्यहुत्वा च अदत्त्वाश्
द्विजः । एवंविधस्य विप्रस्य सर्वदा सूतकं भवेत् ॥' इति **दक्षोक्त्या** 'अन्यपूर्वा
गेहे भार्या स्यात्तस्य नित्यशः । आशौचं सर्वकार्येषु देहे भवति सर्वदा ॥' इति ब्र
दिवशाद्व्यवस्थेत्य**परार्कमदनपारिजातादयः** ॥

**माधवस्तु**—'वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा ।' इति कलिवर्ज्येषूक्
'दशाह एव विप्रस्य सपिण्डे मरणे सति । कल्पान्तराणि कुर्वाणः कलौ भवति
ल्विषी' ॥ इति **हारीतोक्तेश्च** न्यूनाशौचपक्षा युगान्तरविषया । मरणान्तादिप
निन्दार्थवादः । अन्यथा—'नामधारकविप्रस्तु दशाहं सूतकी भवेत् ।' इति
स्यादित्याह । यत्तु **देवलः**—'दशाहादित्रिभागेन कृते संचयने क्रमात् । अङ्गस
मिच्छंति वर्णानां तत्त्वदर्शिनः' ॥ इति पूर्णाशौचे स्पृश्यतामाह । यच्चानुपनी
क्रान्ताशौचे त्रिरात्रादौ तेनैवोक्तम् । 'स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभाग
इति । तदपि युगान्तरेषु। अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च॥' इति **माधवीये** ।

१—अत्रिपराशरयोस्तु 'दिनत्रयात्' इत्येव पाठो दृश्यते । २—इदं च 'कलौ पाराशराः
इति कलिमहिम्न्यैव प्रवृत्तायाः पराशरस्मृतेर्युगान्तरपरत्वं वदन्तस्तु स्त्रीयप्रतिभाभारक्रान्

तन्निषेधात् । यत्तु **हारलतायाम्**-'चतुर्थेहनि कर्तव्यः संस्पर्शो ब्राह्मणेन तु'। इति **प्रचेतसोक्तेस्त्र्यहैकाहाशौचेपि** चतुर्थाह एवाङ्गस्पर्श इति तन्न । **देवलादिवशेनास्य** दशाहगोचरत्वात् । ये तु वर्णसंकरजा मूर्धावसिक्ताद्यास्तेषामाशौचे विशेषः कलौ नोपयुक्त इति नोच्यते । प्रतिलोमजानां नाशौचम् । मलापकर्षणार्थं तु स्नानमात्रमिति **विज्ञानेश्वरः** । **माधवस्तु**-'शौचाशौचे प्रकुर्वीरन् शूद्रवर्णस्य संकराः।' इति **ब्राह्मोक्तेः शूद्रवदाह** । **हारलतायामप्येवम्** ॥

दत्तक्रीतकृत्रिमादिपुत्रेषु अहीनवर्णगासु स्त्रीषु च सपिण्डत्वेपि प्रसवे मरणे च पूर्वापरपित्रोर्भर्तुश्च त्रिरात्रमेव न दशाहादि । 'अनौरसेषु पुत्रेषु जातेषु च मृतेषु च । परपूर्वासु भार्यासु प्रसूतासु मृतासु च ॥' इति त्रिरात्रानुवृत्तौ **विष्णूक्तेः** । सापिण्डानां त्वेकाहः । 'परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च । भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु सपिण्डतः' ॥ इति **माधवीये हारीतोक्तेः** । 'सूतके मृतके चैव त्रिरात्रं परपूर्वयोः । एकाहस्तु सापिण्डानां त्रिरात्रं यत्र वै पितुः॥' इति **मरीच्युक्तेश्च** । **शंखः**-'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च । परपूर्वासु च स्त्रीषु त्रिरात्राच्छुद्धिरिष्यते ॥' परपूर्वा पुनर्भूः । इदं सवर्णासु । हीनवर्णासु तु **शंखलिखितौ**-'परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च। नानध्यायो भवेत्तस्य नाशौचं नोदकक्रिया ॥' **ब्राह्मेपि**-'आशौचं तु त्रिरात्रं स्यात्समवर्णेषु निश्चितम् ॥' यत्तु **षडशीतौ**-'अन्यपूर्वावरुद्धासु त्रिदिनाच्छुद्धिरिष्यते । तास्वेवानन्यपूर्वासु पञ्चाहोभिर्विशुद्ध्यति ॥' तत्र पञ्चाहे मूलं चिन्त्यम् । यत्तु **याज्ञवल्क्यः**-'अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च ।' इत्येकाहमाह तदसंनिधौ ज्ञेयम् । यदा पितुरेकाहस्तदा सापिण्डानां स्नानम् । 'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥' इति **प्रजापत्युक्तेः** । पितेति वोढुरुपलक्षणम् । तथोपक्रमात् । यत्तु दत्तके पालकप्रतियोगिकपुत्रत्वात्पूर्वपितुर्न त्रिरात्रम् । पूर्वसंबन्धनिवृत्तेश्च न दशाहादीति कश्चित्तन्न ॥ जनकेपि-'बैजिकादभिसंबन्धादनुरुध्यादघं त्र्यहम् ।' इति वाचनिकाशौचस्यानिवार्यत्वात् ॥

पितृमरणेपि दत्तकादीनां त्रिरात्रम् । **शुद्धितत्त्वे ब्राह्मे**-'दत्तकश्च स्वयं दत्तः कृत्रिमः क्रीत एव च ।' इत्युपक्रम्य-'सूतके मृतके चैव त्र्यहाशौचस्य भागिनः । इत्युक्तेः । **स्मृतिकौमुद्यां हारलतायामप्येवम्** । दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिण्डानामेकाहः । बीजिनश्चेति **गौतमेन** सप्तपौरुषसापिण्ड्योक्तेः । सपिण्डानां

ऊढकन्यानां तु **विष्णुराह**—'संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे, तत्प्रसवमरणे चेत् पितृगृहे स्यातां तदैकरात्रं त्रिरात्रं च' इति । प्रसवे एकरात्रं मरणे त्रिरात्रमिति **विज्ञानेश्वरापरार्कौ** । **माधवस्तु**—प्रसवेपि त्रिरात्रं पित्रोः, एकरात्रं भ्रात्रादिबन्धुवर्गस्य । 'दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा । तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभिः ॥' इति **ब्राह्मोक्तेरि**त्याह । यत्तु **कश्चिदाह**—पक्षादेन भ्रातरो गृह्यन्ते । वाक्यान्तरेण भगिनीमृतौ त्रिरात्रोक्तेरिति तच्चिन्त्यम् । तदभावे तद्विरोधाच्च । भ्रातुः प्रसवे एकाहः । मृतौ त्रिरात्रमिति **केचित्** । युक्ता तु पक्षिणी। परस्परं मृतौ भ्रातृभगिन्योः पक्षिणी भवेत् ।' इति **ब्राह्मात्** । भ्रातृभिन्नानामेकाहः । वर्गोक्तेः । 'इतरेषां तु यथाविधि' इति वक्ष्यमाणवचनाच्च । यत्तु प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातुस्त्र्यह इति **कश्चित्** स निर्मूलत्वात् 'नाशौचं पितृपक्षे' इत्येतद्विरोधाच्च **भ्रान्तः**॥ दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा । म्रियते वा सदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनैः' ॥ इति **कल्पतरौ शुद्धितत्त्वे** च । पतिगृहे प्रसवे तु पित्रादीनामाशौचं नास्ति । मृतौ पित्रोस्त्रिरात्रमस्त्येव । 'प्रत्ताप्रत्तासु योषित्सु संस्कृतासंस्कृतासु च । मातापित्रोस्त्रिरात्रं स्यादितरेषां यथाविधि ॥ अजातदन्तासु पित्रोरेकरात्रम्' इति **माधवीये शंखकार्ष्णाजिनिस्मृतेः** ।'वैजिकादभिसंबन्धात्' इत्युक्तेश्च **स्मृत्यर्थसारेऽप्येवम्**॥

**माधवस्तु** इदं त्रिरात्रं जातदन्तपरम् । दन्तोत्पत्तेः प्रागेकरात्रं पित्रोः । 'सद्यस्त्वप्रौढकन्यायां प्रौढायां वासराच्छुचिः । प्रदत्तायां त्रिरात्रेण दत्तायां पक्षिणी भवेत्' इति **पुलस्त्योक्तेः** । अन्यत्र कन्यामृतौ पित्रोः पक्षिणीत्याह । **षडशीतावपि**— 'पितृगेहादतोन्यत्र यदि पुत्री प्रमीयते । पक्षिणी तत्र पित्रोः स्यान्नान्येषामिति निश्चयः ॥ इति आमान्तरे इयमिति **स्मृत्यर्थसारे** । भ्रातुस्तु पक्षिणी । 'श्वशुरयोर्भगिन्यां च मातुलान्यां च मातुले । पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम् ॥' इति **वृद्धबृहस्पतिस्मृतेः शुद्धितत्त्वे कौर्मे**—'आदन्तात्सोदरे सद्य आचूडादेकरात्रकम् । आप्रदानात् त्रिरात्रं स्याद्दशरात्रमतः परम् ॥' पित्रोर्मृतौ

पित्रोर्मृतौ स्त्रीणामाशौचनिर्णयः।

स्त्रीणां त्रिरात्रम् । 'पित्रोरुपरमे स्त्रीणामूढानां तु कथं भवेत् । त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान् यमः ॥' इति **माधवीये वृद्धमनूक्तेः** । इदं दशाहान्तः । ऊर्ध्वं तु पक्षिणी । भ्रातुर्भगिनीगृहे, तस्या वा तद्गृहे मृतौ त्रिरात्रम् । अन्यत्र तु पक्षिणीति **षडशीतावुक्तम्** । **ब्राह्मेपि**—'परस्परं मृतौ भ्रातृभगिन्योः पक्षिणी भवेत् । मातुलाशौचवत्पुत्र्याः पितृव्याशौचमिष्यते ॥' इति । **शिष्टा**-

विरतौ मातुले मातुलान्यां चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे। शिष्यो पाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम्।रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसंबन्धयुक्ते स्नानं वासोयुतं स्यादिदमा सकलं सर्ववर्णेषु तुल्यम्॥' इति। अत्र मूलं **मिताक्षरादौ** स्पष्टम् दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रम्। अनुपनीतयोः पक्षिणी। 'सं

दौहित्रभागिनेययोः।

स्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थि तः॥' इति **वृद्धमनूक्तेः**। संस्कृते दाहेन। तेन दाहे त्रिरात्रं नान्यथेति **गौडास्तन्न** विशेषवैयर्थ्यात्। मातुलादौ सन्निधिविदेशाभ्यां पक्षिण्येकाहयोर्व्यवस्था। **मनुः**-'त्रिरा त्रमाहुराशौचमाचार्ये संस्थिते सति। तस्य पुत्रे च पत्न्यां च दिवारात्रमिति स्थितिः॥ श्रोत्रिये स्वगृहे मृते त्रिरात्रम्। 'श्रोत्रिये तूपसंपन्ने त्रिरात्रमशुचिर्भ वेत्।' इति **स्मृतेरिति माधवः**। एकग्रामीणे त्वेकाहः। ऋत्विङ्

श्रोत्रिये स्वगृहेमृते।

बह्वल्पकालश्रौतस्मार्तयाजनपरे त्रिरात्रैकरात्रे ज्ञेये। यद्यपि कर्म कुर्वत एष वाचक शब्दो भवतीति **शम्बराचार्यैः** कर्ममध्ये ऋत्विक्त्वमुक्तं तथा कर्मण्याशौचनिषेधात्तदुत्तरमेवैतज्ज्ञेयम्। **गौडास्तु**-'एकोदकानां

ऋत्विग्विषये।

त्र्यहो गोत्रजानामहः स्मृतम्। मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा॥' इ **जाबालोक्तेर्मातृबन्धुष्वेकाहमाहुः**। शिष्ये स्वोपनीते त्र्यहः। 'शिष्यसतीर्थ्यब्रह्मचारि क्रमेण त्रिरात्रमहोरात्रमेकाहः।' इति **माधवीये बौधायनोक्तेः**। अन्यत्र **मनुः**-'मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च।' इति। बन्धुत्रयम्-आत्मपितृ ष्वसृमातृष्वसृमातुलपुत्राः पितुः पितृष्वसृमातृष्वसृमातुलपुत्राः॥ मातुः पितृष्वसृमातृष्व सृमातुलपुत्राश्चेति **विज्ञानेश्वरः**। अत्र पक्षिणी। 'पितृष्वस्रादि कन्यानामूढानां त्वेकाहः। तद्बन्धुवर्गस्त्वेकेन' इति पूर्वोक्त**ब्राह्मात्**

पितृष्वस्रादिकन्यानाम्।

**यत्तु षडशीत्याम्**-'एवं पित्रोर्भगिन्यौ ये ये पितामहयोस्तथा। ये मातामहयोश्च भगिन्यौ तत्प्रजाश्च याः॥ मातुलाः स्वस्य पित्रोश्च पत्न्यश्चैषां प्रजाश्च याः॥ भ्रातर श्चेति सर्वेषु पक्षिणी स्वगृहे त्र्यहम्॥ एवं श्वशुरजामातृदौहित्रविपदि स्मृतम्॥'**यच्च यमः**- 'जामातरि मृते शुद्धिस्त्रिरात्रेणोभयोः स्मृता। पक्षिणी शालकानां स्यादिति शातातपो ब्रवीत्॥' इति। निर्मूलत्वान्**मिताक्षरादि**विरोधाच्चोपेक्ष्यम्॥

**मदनपारिजाते विष्णुः**-'असपिण्डे स्ववेश्मनि मृते एकरात्रम्।' अत्र **हरदत्तः**-

स्वगृहे संस्थितेषु च ।' इति कौर्मे व्याख्यातम् । शुद्धितत्त्वे बृहन्मनुः—'श्व
तिताश्चान्त्या मृताश्चेद् द्विजमन्दिरे । शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथ
दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः । द्वाभ्यां तु पतिते गेहमन्त्ये मासचतुष्ट
अत्यन्ते वर्जयेद्गेहमित्येवं मनुरब्रवीत् ॥' अन्त्यो म्लेच्छः अत्यन्तः श्वपा
वाचस्पतिः । तत्रैव यमः—'द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात् ॥' सं
'गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिते । प्रोत्सृज्य मृन्मयं भाण्डं सिद्धमन्नं तथै
गोमयेनोपलिप्याथ छागेन घ्रापयेद्बुधः । ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुशवारि
सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयम् ॥' बृहद्विष्णुः—'ग्राममध्यगतो या
स्तिष्ठति कस्यचित् । ग्रामस्य तावदाशौचं निर्गते शुचितामियात् ॥' गृहे
मृतेप्येवम् ॥

यत्तु माधवीये प्रचेतसा मातृष्वस्रादिषु त्रिरात्रमुक्तम्—'मातृष्वसाम
श्वश्रूश्वशुरयोर्गुरोः । मृते चर्त्विजि याज्ये च त्रिरात्रेण विशुध्यति ॥' इति । गुरु
ऋत्विक् कुलागतः । तत्स्वगृहमृतौ ज्ञेयम् । श्वशुरयोरन्यत्र मृतावपि संनिधौ
त्रम् । असंनिधौ पक्षिणी । देशान्तर एकरात्रम् । वक्ष्यमाणविष्णूक्तेरिति
वर्गौडादयः । अन्यत्र तु मातृष्वस्रादिषु पक्षिणी । 'पित्रोः स्वसरि तद्वच्च
क्षपयेन्निशाम् ।' इति वृद्धमनूक्तेः । यत्तु वृद्धमनुः—'भगिन्यां संस्कृतायां
र्येऽपि च संस्कृते । मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ शालके तत
सद्यः स्नानेन शुद्ध्यति ॥' इति । तद्भ्रातृदौहित्रादौ देशान्तरे, शालकसुत
स्वदेशे ज्ञेयम् । शालके तु स्वदेशे एकाहः । आचार्यपत्नीपुत्रोपाध्यायमातुल
श्वशुर्यसहाध्यायिशिष्येष्वेकरात्रम्' इति माधवीये विष्णूक्तेः । हरदत्ती
श्लोक्यामप्येवम् । श्वशुर्यः शालकः । देशान्तरे स्नानम् । श्वशुरयोर्देशान्तरे
जाबालः—'एकोदकानां तु त्र्यहो गोत्रजानामहः स्मृतम् । सर्वत्र मूल्याभावे
कर्तुर्दशाहतः । गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरेत् ॥ प्रेताहारैः समं
रात्रेण शुद्ध्यति ॥' इति मनूक्तेः । शिष्य इत्युपलक्षणम् । 'निरन्वये सपि
साति दयान्वितः । तदशौचं पुरा चीर्त्वा कुर्यात्तु पितृवत्क्रियाम् ॥' इति म
ब्राह्मोक्तेः । दिवोदासीये—'सगोत्रो वाऽसगोत्रो वा योऽग्निं दद्यात्सखे न
कुर्यान्नवश्राद्धं शुद्ध्येच्च दशमेऽहनि ॥' यत्रैकविषये पक्षिण्येकाहादिपक्षद्वयमुक्तं,
धिविदेशमैत्र्यादिकृता व्यवस्था ॥

युद्धे मृतस्य।

स्तथाशौचमिति स्थितिः ॥' इति **मनूक्तेः** । यज्ञोन्त्यक तदैवेत्यर्थः । यस्तु **भारते राजधर्मेषु**-'अशोच्यो हि स्वर्गलोके महीयते । न ह्यन्नमुदकं तस्य न स्नानं नाप्यशौचकम् ॥' इति निषेधः स पुत्राद्यभावपरः । अत एव तत्र कर्णादीनां श्राद्धमुक्तम् । अन्ये तु निषेधमाहुर्यतिवत् । यत्तु **पराशरः**-'आवहेपि हतानां च एकरात्रमशौचकम् तद्युद्धक्षतेन कालान्तरमृतेर्ज्ञेयम् । 'असन्निधौ स्नानम्' इति । **माधवः** । शु **अग्निपुराणे**-'दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः । ये स्वाम्यर्थे ह राजन्स्वर्गं न संशयः ॥ सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः ॥' यत्तु **बृह** 'डिम्बाहवे विद्युता च राज्ञां गोविप्रपालने । सद्यः शौचं मृतस्याहुस्त्र्यहं चान्ये तच्छस्त्रं विना पराङ्मुखहते च त्रिरात्रम् । राज्ञा वध्ये हते सद्यः शौचमन्यत्र **तथैव व्याघ्रः**-'क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा । आसप्ताहात्त्रिरा रात्रमतः परम् ॥ शस्त्राघाते त्र्यहादूर्ध्वं यदि कश्चित्प्रमीयते आशौचं प्राकृतं वर्णेषु नित्यशः ॥' शस्त्राघाते क्षतं विना शवस्पर्शे तु **हारीतः**-'शवस्पृशो प्रविशेयुरानक्षत्रदर्शनात्-रात्रौ चेदादित्यस्य॥' यत्तु **मनुः**-'अह्ना चैकेन रात्र्या त्रैरेव च त्रिभिः । शवस्पृशो विशुद्ध्यंति त्र्यहात्तूदकदायिनः ।'इति । अह्ना रात्र्य रात्रमित्युक्तम् । त्रिभिस्त्रिरात्रैरिति नवरात्रमेवं दशरात्रमित्यर्थः । तत्तदन्नाशने सेनापदि च ज्ञेयम् । **अङ्गिराः**-'आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रि न लुप्यन्ते गृह्याणां च न तद्भवेत्' ॥

**अथ निर्हाराद्याशौचम्** । स्नेहेन सवर्णनिर्हारे तदन्नाशने तद्गृहवासे च तदन्नाशने तद्गृहावासे त्र्यहः । गृहावासे चाभक्षणे चैकाहः । **भृतिग्रहणेन**

निर्हाराद्याशौचनिर्णयः।

च तज्जात्याशौचम् । 'यदि निर्हरति प्रेतं प्रलोभाक्रान्तमानस हेन द्विजः शुद्ध्येद्द्वादशाहेन भूमिपः ॥ मासार्धेन तु वैश्य मासेन शुद्ध्यति ॥' इति **कौर्मोक्तेः** । विजातीयनिर्हारे तु शवजातीयमाशौच भृतिग्रहे द्विगुणम् । 'अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि । वहेच्छवं तदाशौ द्विगुणं भवेत् ॥' इति **व्याघ्रोक्तेः** । **कौर्ममेतदिति गौडाः** । दाहेप्येवम् **ब्राह्मे**-'योसवर्णं तु मूल्येन नीत्वा चैव दहेन्नरः । आशौचं तु भवेत्तस्य प्रेत नृप ॥' इति । तदापदि ज्ञेयम् । सोदकनिर्हारे तु दशाह इति **माधवः** । तु **शंखः**-'कृच्छ्रपादोसपिण्डस्य प्रेतालंकरणे कृते । अज्ञानादुपवासः स्यादशक मिष्यते ॥' धर्मार्थमनाथसवर्णहरणे क्रियाकरणे च द्विजस्यानन्तयज्ञफलम्

**गौतममिताक्षरायां वृद्धात्रिः**—'सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवम्
आर्तवाद्द्विगुणा सूतिस्ततोपि शवदाहकः ॥' अत्र पूर्वेणोत्तरनिवृत्तिरित्यर्थः । विष्णु
'मृतं द्विजं न शूद्रेण हारयेन्न शूद्रं द्विजेन ॥' देवलः—'ब्रह्मचारी न कु
शववाहादिकक्रियाम् । यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमेव च ॥' याज्ञवल्क्य
'आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।' अनुगमने तु सापिण्डे न दोष
'विहितं हि सपिण्डानां प्रेतनिर्हरणादिकम् । तेषां करोति यः कश्चित्तस्यापि
न विद्यते ॥' इति **देवलोक्तेः** । 'दोषः स्यात्त्वसपिण्डस्य तत्रानाथक्रियां वि
इति **हारीतोक्तेश्च** । **समोत्कृष्टवर्णे** तु **माधवीये** **कण्वः**—'अनुगम्य शवं बु
स्नात्वा स्पृष्ट्वा हुताशनम् । सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुद्ध्यति ॥' इ
'हीनवर्णे तु क्षत्रियेऽहः, वैश्ये पक्षिणी, शूद्रे त्रिरात्रम् क्षत्रियस्य वैश्येऽहः, शूद्रे पक्षि
वैश्यस्य शूद्रेऽहः ।' इति **विज्ञानेश्वरः** । **माधवस्तु**—'विप्रस्य वैश्ये द्व्यहः, क्ष
शूद्रेप्येवम् । अन्यत् प्राग्वत् स्नानाग्निस्पर्शघृताशनानि सर्वत्रेत्याह । हीनवर्णस्य दाहौ
र्ध्वदैहिककरणे तु **ब्राह्मे**—'ब्राह्मणो हीनवर्णस्य न कुर्यादौर्ध्वदेहिकम् । कामाल्लोभ
मोहात्कृत्वा तज्जातितां व्रजेत् ॥' **मनुः**—'व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म
अभीचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति ॥' परेषां सर्ववर्णानां हीनेषु तद्द्वैगु
गुण्यचातुर्गुण्याद्यूह्यम् ॥

रोदने निर्णयः ।

**अथ रोदने समोत्तमवर्णयोः** संचयनात्पूर्वं सचैलस्नानमूर्ध्वमाचमनम् । हीन
तु **संचयात्प्राक्** सचैलमूर्ध्वं स्नानमात्रम् ॥ विप्रस्य क्षत्रवैश्यविष
**ब्राह्मे**—'अस्थिसंचयने विप्रो रौति चेत्क्षत्रवैश्ययोः । तदा
सचैलस्तु द्वितीयेहनि शुद्ध्यति । कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत् ।'
वैश्येप्येवम् । शूद्रे तु संचयात्प्राक् विप्रस्य त्रिरात्रम् । क्षत्रवैश्ययोर्द्विरात्रम् । ऊ
द्विजानामेकाहः । शूद्रस्य शूद्रे स्पर्शं विना संचयात्पूर्वमेकाहः । ऊर्ध्वं सज्यो
**माधवीये** ज्ञेयम् । **शुद्धितत्त्वे पारस्करस्तु**—'अस्थिसंचयनादूर्ध्वं मासं याव
तयः । दिवसेनैव शुद्ध्यन्ति वाससां क्षालनेन च ॥ सजातेर्दिवसेनैव त्र्यहात्क्ष
श्ययोः ।' इत्युक्तम् । **सपिण्डानां** रोदननिर्हारादावदोष इत्युक्तं प्राक् । **विज्ञा**
**रस्तु**—'मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम् । वर्जयेत्तदहोरात्रं दानश्राद्ध
च ॥' इति **पारस्करोक्तेः** । सर्वत्रैकरात्रमाह ॥

अथाशौचान्नभक्षणे विष्णुः—'ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्ना

हपञ्चाहसप्ताहोपवासाः । दश विंशतिः षष्टिः शतं च प्राणायामाः । पञ्चगव्या
अभ्यासे द्विगुणम् । आपदि तु प्राणायामशतं पञ्चशतमष्टशतमष्टसहस्रं गायत्री
मत्यापादि तु सवर्णाशौचे त्रिरघमर्षणं गायत्र्यष्टसहस्रं च । क्षत्रियाशौचे उप
वैश्याशौचे त्रिरात्रोपवासश्च । शूद्राशौचे कृच्छ्रः । क्षत्रवैश्ययोः पञ्चशतमष्टशतं
जपः । उत्तमेषु शूद्रस्य सर्वत्र स्नानम् । मत्यानापदि विप्रस्य वर्णेषु सांतपन
हासांतपनचान्द्राणि । अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिका
**माधवीयादौ** ज्ञेयम् ॥

अथ दासस्य स्वदास्युत्पन्नस्य सपिण्डमृतौ स्नानमात्रेण स्वामिकार्ये स्पृश
भक्तदासस्य त्र्यहोर्ध्वम् । 'सद्यःस्पृश्यो गर्भदासो भक्तदासस्त्र्यहाच्छुचिः।' इति
**न्तरोक्तेः** । 'मूल्यकर्मकराः शूद्रदासीदासास्तथैव च । स्नाने शरीरसंस्कारे गृह
दूषिताः॥' इति **शातातपोक्तेश्च** । एतच्चानन्यसाध्ये तत्कार्यमात्रे । अन्यत्र मास
चमस्त्येव । एवं दास्यामपि । सूतिकायास्तस्या अस्पृश्यत्वमपि मासमात्रम् ।
दासश्च सर्वो वै यस्य वर्णस्य यो भवेत् । तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूत
**इत्यङ्गिरसोक्तेः** । **षडशीतावपि**–'स्वामिशौचेन दासाद्याः स्पृश्या मासात्तु
योग्यास्युर्मासतो दासी सूती चेत्स्पृश्यतामियात् ॥' दत्तदासादीनां स्वसपिण्डम
स्वाम्याशौचसमसंख्यदिनोर्ध्वं सत्यपि मासाद्याशौचे स्वामिकार्ये स्पृश्यतेति **हर**
'दासान्तेवासिभृतकाः शिष्याश्चैकत्रवासिनः । स्वामितुल्येन शौचेन शुद्ध्यन्ति
तके' ॥ इति **बृहस्पतिस्मृतेः** । दासश्चात्र–'गृहजातस्तथा क्रीतो लुब्धो
पागतः । अन्नकालभृतस्तद्वदाहितः स्वामिना च यः । मोक्षितो मतहश्चर्णाद्यु
पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥ भक्तदासश्च विज्ञेयस्तथै
वाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥' इति **नारदोक्तेषु**
भक्तदासौ विना ज्ञेयाः । वडवा दासी तयाहृतस्तामुद्वाह्य दासो जात इत्यर्थः ।
वास्यापि **तेनैवोक्तः**–'स्वशिल्पमिच्छन्नाहर्तुं वान्धवानामनुज्ञया । आचार्यस्य व
कृत्वा कालं सुनिश्चितम् । आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।' इति ।
स्तत्तुल्यो विद्यार्थी । दासादेः स्वामितत्सापिण्डमरणे तु **विष्णुः**–'पत्नीनां दासा
नुलोम्येन स्वामितुल्यमाशौचम् । मृते स्वामिन्यात्मीयम् ।' इति प्रतिलोम
नामाशौचाभावः । 'वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः।'इति **याज्ञवल्क्यो**

**अथ रात्रौ जनने मरणे वा**–रात्रिं त्रिभागां कृत्वाऽऽद्यभागद्वये चेत्पूर्वं दि

साग्निराहिताग्निः । 'आहिताग्निश्चेत्प्रवसन्म्रियेत पुनःसंस्कारं कृत्वा शववदाशौचम्' । इति वसिष्ठे विशेषोक्तेः । 'दाहादेव तु कर्तव्यं यस्य वैतानिको विधिः ।' इति ब्रा- ह्माच्च । यत्तु-धूर्तस्वामिना रामाण्डारेण चोक्तम्-'आहिताग्नेरपि मरणाद्येव दशरात्रं दशाहं शावमाशौचम् ।' इति मरणनिमित्तत्वात्तस्य । यत्तु दाहादेव तस्याशौ- चमुक्तं तत्संस्कारनिमित्ताशौचं पृथगेव । तेन गृह्याग्नेः संस्काराङ्गं त्रिरात्रम् । श्रौता- ग्नेस्तु दशरात्रम् । मरणनिमित्तं तूभयोर्दशाहम् । दाहात्प्रागपीति । तद्वचनविरोधात्पूर्व- स्यैवोत्कर्षान्मूलकल्पनालाघवाच्च चिन्त्यम् ॥

**अथातिक्रान्ताशौचम्** । तत्राशौचमध्ये जननादौ ज्ञाते तच्छेषेण शुद्धिः 'विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम् । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥' इति **मनूक्तेः** । अत्र केचिदेतत्पुत्रातिरिक्तवि- षयम् । तेषां त्वाशौचमध्ये श्रवणेपि तदाद्येव दशाहादि 'पितरौ चेन्मृतौ स्यातां दूर- स्थोपि हि पुत्रकः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥' इत्यस्य सर्वापवादत्वा- दित्याहुस्तन्न । ज्ञातमरणस्य निमित्तत्वात् । 'अनग्निमत उत्क्रान्तेः' इत्यादिविरोधाच्च **स्मृत्यर्थसारेपि**-'जनने मरणे वा प्रथमदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिः' इति । **षडशीतावपरार्के चैवम्** । दशाहादूर्ध्वं ज्ञाते तु **वृद्धवसिष्ठः**-'मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुद्ध्यति' ॥ जन- नेत्वतिक्रान्ताशौचं नास्त्येव । 'नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपि ।' इति देव- लोक्तेः । पितुः स्नानं तत्रापि भवत्येव । 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च सवासा जलमाप्लुत्य शुद्धो भवति मानवः ॥' इति **मनूक्तेः** । तच्चातिक्रान्ताशौ- चं दशाहादिजात्याशौचविषयम् । न त्वनुपनीतादिनिमित्तत्रिरात्रादौ । 'उपनीते तु विष- मं तस्मिन्नेवातिकालजम् ।' इति **व्याघ्रोक्तेः** । 'निर्दशं ज्ञातिमरणम्' 'अतिक्रान्ते दशा- हे तु' इति **मनूक्तेश्च** । **माधवीये देवलस्तु**-'आ त्रिपक्षात्त्रिरात्रं स्यात्षण्मासात्पक्षिणी ततः । परमेकाहमावर्षादूर्ध्वं स्नातो विशुद्ध्यति' इत्याह । तत्रापदनापद्विषयत्वेन व्यव- स्था । इदं चैकदेशे ॥

अतिक्रान्ताशौचनिर्णयः ।

---

१-'मरणारब्धमाशौचं संयोगो यस्य नाग्निभिः । आदाहात्तस्य विज्ञेयं यस्य वैतानिको विधिः ।' इति शंखलिखितौ । २-मृतम् । ३-स्नात्वोदकदानं च । कार्यम् । 'प्रेते दत्त्वोदकं शुचिः' इति वचनात् । यत्तु देवलनाम्ना पठ्यते-'आशौचाहे व्यतिक्रान्ते बन्धुश्चेच्छ्रूयते मृतः । तस्य त्रिरात्रमाशौचं पक्षिणी चार्धवत्सरे । ऊर्ध्वं संवत्सरार्धात्तु श्रूयते चेन्मृतः स्वकैः । भवेदेकाहमेवात्र तच्च संन्यासि-

देशान्तरे तु स्नानमात्रम् । 'देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे यतौ । स्
शुध्यन्ति गर्भस्रावे च गोत्रिणः' इति **पराशरोक्तेरिति विज्ञानेश्वरः**
वत्सरान्ते । 'अर्वाक्त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् । अहः संवत्सरा
न्तरमृतेष्वपि ॥' इति **विष्णूक्तेरिति माधवः** । इदं सपिण्डानाम् ।
स्नानं सोदकानामिति युक्तम् । लक्षणं त्वाह **बृहस्पतिः**–'महानद्यन्तरं य
व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ देशान्तरं वदन्त्ये
योजनमायतम् । चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैवच' इति ॥ एतत्सर्वं मा
न्नविषयम् । 'तयोस्तु पितरौ चेत्' इति पूर्वपैठीनसिवाक्यात्सदा पूर्णमेव त
**स्मृत्यर्थसारेपि**–'मातापितृमरणे दूरदेशेपि संवत्सरोर्ध्वमपि पुत्रो दशाहा
माशौचं कुर्यात् । स्त्रीपुंसयोः परस्परं सपत्नीषु चैवम् ।' इति । **शुद्धित**
**गौडास्तु**–'ऊर्ध्वं संवत्सरादाद्याद्बन्धुश्चेच्छ्रूयते मृतः । भवेदेकाहमेवात्र तच्च स
न तु ।' इति **देवलोक्तेः** । पित्रोरब्दमध्ये त्रिरात्रमूर्ध्वमेकाहः । बन्धु
भर्ता च । पूर्वोक्तदशाहस्तु कलिङ्गादिदेशपर इत्याहुः । ते बन्धुपदस्य पु
मानाभावादुपेक्ष्याः । सापत्नमातुस्तु **दक्षः**–'पितृपत्न्यामपेतायां मातृव
त्तमः । संवत्सरे व्यतीतेपि त्रिरात्रमशुचिर्भवेत् ॥' हीनवर्णमातृषु सपत्नीषु चै
**स्मृत्यर्थसारे** । **केचित्** 'पितुः पत्न्यां प्रमीतायामौरसे तनये तथा ।' इ
क्तेरौरसेपीदमाहुः । **षडशीतावप्येवम्** । एतत्सर्ववर्णतुल्यम् । 'तुल्यं वयसि
तिक्रान्ते तथैवच ।' इति **व्याघ्रोक्तेः** ॥

अशौचसंपत्तिनिर्णयः ।

**अथाशौचसंपाते** उच्यते ॥ तत्र शावे शावं, सूतके सूतकम् । शावे सू
शावं वा । तत्राप्युत्तरं कालतः पूर्वेण समं न्यूनमधिकं चे
भेदाः । यदैकादिने समं न्यूनमधिकं वाशौचद्वयं तत्र तन्त्रेणा
द्वयोरेककालत्वात् । यदा तु द्वितीयादिदिनेषूत्तरं सजातीयं शावे जननं वा
न्यूनकालं वा परं स्यात्तदा षट्सु पक्षेषु पूर्वशेषेण शुद्धिः । 'अन्तरा जन्मम
होभिर्विशुद्ध्यति ।' इति **याज्ञवल्क्योक्तेः** । अन्तरा ज्ञाते इत्यर्थः । ज्ञात
नादेर्निमित्तत्वात् । पूर्वाशौचोत्तरं तन्मध्योत्पन्ने जाते तूत्तरमेव कार्यम् । श
प्युक्तम्–पूर्वाशौचान्तरुत्पन्नं समानं लघु वा निमित्तं तत्कालादुपरिश्रुतं स
रेव । अज्ञातं तु न । 'अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथंचन ।' इत

शौचे एव पूर्वशेषेण शुद्धिः । त्र्यहाद्यल्पाशौचसंपाते तूत्तरेणैव शुद्धि
हरदत्तोप्येवमाह । गौडा अप्येवम् । तन्न । याज्ञवल्क्यादिवशे
तुल्यकालशौचोपलक्षणत्वात् । 'समानाशौचसंपाते प्रथमेन समापयेत् । अ
त्तीयेन धर्मराजवचो यथा ॥' इति माधवीये शंखोक्तेः । अपरा
रादिविरोधाच्च ॥

यदा तु सूतके शावं समन्यूनमधिकं वा, तदा न पूर्वशेषाच्छुद्धिः । तदा
'सूतके मृतकं चेत्स्यान्मृतके त्वथ सूतकम् । तत्राधिकृत्य मृतकं शौचं कुर्य
षट्त्रिंशन्मते–'शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् । शावेन शु
सूतिः शावशोधिनी ॥' चतुर्विंशतिमतेपि–मृतेन शुध्यते जातं न
तु ॥' अतो यदा दशाहजननमध्ये तदन्ते वा त्र्यहादि शावं तदा पूर्वेण शु
मित्तमस्पृश्यत्वं भवत्येव । 'मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ।' इति
गौतमव्याख्यायां वृद्धात्रिरपि–'सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्त
वाद् द्विगुणा सूतिस्ततोपि शवदाहकः ॥' अत्र पूर्वपूर्वेण नोत्तरोत्तरा
त्वाधिक्यादित्यर्थः । षडशीतावपि–'स्वभाववहुसूतिस्तु न्यूनशावा
इति । रात्रिशेषादौ वर्धितद्वित्रिदिनैरागन्तुकैः सूतेर्वहुत्वं न स्वभावेन । अ
शावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनेत्युक्तम् । ब्राह्मेपि–'नाग
राशौचमपनुद्यते । न च पातनिमित्तेन शावस्यान्यस्य शोधनम् ॥' इति
पक्षाः । यदा तु त्र्यहाद्यल्पाशौचमध्ये सजातीयं विजातीयं वा दीर्घकाल
त्तरं पूर्णं कार्यम् । न पूर्वेण शुद्धिः । 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं
पूर्वेण विशुद्धिः स्यात् स्वकालेनैव शुध्यति ॥' इत्युशनसोक्तेः । तेन
मध्ये दशाहादिसूतकेपि न पूर्वेण शुद्धिरित्यपरार्कः । शावनिमित्तमस्पृ
त्येव । शुद्धिविवेके तु–'शावेन शुध्यते सूतिः ।' इति प्रागुक्तेस्तत्राप
त्तिरुक्ता । तन्न । उत्तरस्य कालाधिक्येन बलवत्त्वात् । माधवीये यमो
मदाशौचं पश्चिमेन समापयेत् । यथा त्रिरात्रे प्रक्रान्ते दशाहं प्रविशेद्य
पुनरागच्छेत्तत्समाप्य विशुध्यति ॥' हारीतोऽपि–'गुरुणा लघु शुध्ये
तद्गुरु ।' इति गुरुत्वं लघुत्वं च कालकृतमेव । पूर्वानुरोधात् । एतच्च हर
क्तम् । मिताक्षरायामप्येवम् । यत्तु 'अघानां यौगपद्ये तु ज्ञेया शुद्धि
णोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥' इति हारीतकौर्मादि । तत्रा

क्वचिदल्पकालेनापि दीर्घकालाशौचनिवृत्तिमाह देवलः—'परतः परतो शुद्धिर
विर्धीयते। स्याच्चेत्पञ्चतमादह्नः पूर्वेणैवात्र शिष्यते॥' अस्यार्थः—अघवृद्धौ दीघ
परतः शुद्धिः परमाशौचम्। यदि पूर्वाशौचमुत्तरस्य पञ्चमदिनात्परतोऽनुवर्तते तद
णैव शुद्धिः। पूर्वस्योत्तराशौचार्धाधिककालव्यापित्वे पूर्वशेषाच्छुद्धिरित्यर्थः। यथा
मासे गर्भपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः। यथा वा त्र्य
स्रावपातनिमित्तचतुरहपञ्चाहयोरिति **कश्चित्**। तन्न। दशाहावधिपूर्वशेषशुद्ध्या वेद
विरोधात्। षष्ठादिदिने पूर्णाशौचमन्त्यरात्रौ तु द्व्यह इत्यनौचित्याच्च। **अस्मद्गु**
पञ्चतमादह्न आशौचं ततो न्यूनं त्र्यहादिचेत्स्यादस्मिन्विषये पूर्वेणैवाशुद्धिः शि
दशाहादिरात्रिशेषे त्र्यहादिपाते त्र्यहाद्यल्पाशौचानां परस्परं रात्रिशेषे संपा
न द्व्यहादिवृद्धिरित्यर्थमाहुः। क्वचित्पूर्वशेषेण शुद्धेरपवादमाह **गौतमः**—'रा
सति द्वाभ्यां प्रभाते तिसृभिः' इति। प्रभातेन्त्ययामे 'रात्रिशेषे द्व्यहाच्छुद्धिय
शुचिस्त्र्यहात्।' इति **शातातपोक्तेः**। इदं शावान्ते सूतकपाते सजातीये वा तुल
अत्र **केचित्**। रात्रिशब्दोऽहोरात्रपरः। 'अहःशेषे द्वाभ्यां प्रभाते तिसृभिः' इति **श**
**लिखितोक्तेः**। 'अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमानवमाद्दि
ऊर्ध्वं द्विरात्रेण, व्युष्टायां त्रिरात्रेण' इति **बौधायनोक्तेः**। 'पुनः पाते दशाह
पूर्वेण सह गच्छति। दशमेह्नि पतेद्यस्याहर्द्वयात्स विशुद्ध्यति' इति। 'प्रभाते तु त्रि
दशरात्रेष्वयं विधिः।' इति **देवलोक्तेश्च**। नवमदशमशब्दौ चोपान्त्यान्त्यदिन
तेन क्षत्रियादावपि तथेत्याहुः। **माधवीयेप्येवम्**॥

**अन्ये त्वाहुः**—'अन्तर्दशाहे स्यातां चेत्पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो
यत्तत्स्यादनिर्दशम्॥' इति। **मनुपराशराद्यैर्दशमदिनेनोत्तरस्य** शुद्धेरुक्तत्वाद्विरोध
एव। विरोधे च—'यद्वै किंचन मनुरवदत्तद्भेषजम्।' 'कलौ **पाराशरस्मृतिः**' इ
पूर्ववचसां बाधः। अत एव **वाचस्पतिना** तेषामनाकरत्वमुक्तम्। साव
जातिमात्रविप्रादिविषयं देशान्तरविषयं वा युगान्तरविषयं वास्तु। तेन **गौतमीये**
शब्दो नाहोरात्रपरः। 'रात्रिमात्रावसिष्टे' इति **मिताक्षरोक्तेश्च**॥ न कुकविक्रो
न्यथा व्याख्या युक्ता। **माधवस्तु**—'अनिर्गतदशाहम्' इतिपूर्वस्वग्रन्थविरोध

---

१—चतुरहान्तर्विदेशस्थमरणे श्रुते शेषशुद्ध्या तत्पञ्चदिनाधिकमाशौचम्। तत्र दशाहपा
शुद्धिरित्यत्रापि द्रष्टव्यमिति टीका। २—'अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचम
द्दिवसात्। अत ऊर्ध्वं द्विरात्रेण, व्युष्टायां त्रिरात्रेण, इति बौधायनवाक्यस्थेनानवमाद्दिवसा
विरोधादित्यर्थः। इति टीका। एवंचाभिः प्रत्यक्षस्मृतिभिर्विरोधात्। 'आद्यभागद्वयं याव
तु सूतकम्।' इत्यादि शुद्धिविवेकलिखितब्रह्मपुराणवाक्यं तु 'श्रुतिस्मृतिपुराणानां विरो
दृश्यते। तत्र श्रौतं प्रमाणं स्यात्तयोर्द्वैधे स्मृतिर्वरा।' इति व्यासवचनेन शिष्टैर्नादर्तव्यम्।

इति । अस्मत्पितृचरणास्तु **बौधायनीये**—'आनवमाद्दिवसात्' इति द्वितीयाशौचस्य नवमं दिनं प्रथमस्य दशममेवाहुः । द्व्यहादिवृद्धेः[1] पूर्वशेषापवादत्वात् । तस्य[2] च न्यायतो द्वितीयदिनादेव प्रवृत्तेः । अत ऊर्ध्वमिति दशमरात्रिपरम् । **शङ्खलिखितोक्तौ देवलोक्तौ** चाहःशेषे दशमेह्नि चातीते रात्रौ पतेदित्यर्थः । दशम्यां पिता नाम कुर्यादितिवत् । तेन न मन्वाद्यैर्विरोधो नापि **मिताक्षराद्यै**रित्याहुः[3] । **अपरार्के निर्णयामृतस्वरसोप्येवम्** । यत्तु तत्रैव **ब्राह्मे**—'आद्यं भागद्वयं यावत्सूतकस्य तु सूतके । द्वितीये पतिते त्वाद्यात्सूतकाच्छुद्धिरिष्यते । अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः । एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥ मृतकस्यान्तरे यत्र सूतकं प्रतिपद्यते । सूतकस्यान्तरे वाथ मृतकं यत्र विद्यते ॥ मृतकान्ते भवेत्तत्र शुद्धिर्वर्णेषु सर्वशः ।' इति । अस्यार्थस्तत्रैवोक्तः । पूर्वाशौचचरमाहोरात्रस्य दिनरूपे आद्यभागद्वयेऽन्याशौचपाते पूर्वेण शुद्धिः । भागद्वयोर्ध्वं रात्रौ सूतकान्तरे द्वितीयात्पूर्वभिन्नात्सूतकान्ताद्व्यहादिरूपाच्छुद्धिरिति । **अपरार्के** त्वाशौचकालं त्रिधा विभज्य निर्गुणविषयत्वेनेदमुक्तम् । अस्य वचनस्य निर्मूलत्वोक्तिरज्ञोक्तिरेव । अतः पूर्वाशौचान्त्यरात्रावन्याशौचेहोरात्रद्वयमधिकं रात्रेरन्त्ययामे तु दिनद्वयमिति **भट्टचरणोपदिष्टः पन्थाः** । एतत्संपूर्णाशौचसंपाते एव । रात्रिशेषे त्रिरात्रादिसंपाते तु पूर्वशेषेणैव शुद्धिः । द्विरात्रादिवृद्धेः पूर्ववाक्यैर्दशाहविषयत्वादपवादाभावे शेषशुद्धेरेव सामान्यतः प्रवृत्तेः । **षडशीतौ** तु दशाहान्ते त्र्यहपातेपि द्वित्रिदिनवृद्धिरुक्ता । 'रात्रिशेषे यदाशौचं पूर्वानाधिकमापतेत् । ऊर्ध्वं दिनद्वयं पूर्वाद्यामशेषे दिनत्रयम् ।' इति । अनधिकं समं न्यूनं वा तच्चुच्छम् । निर्मूलत्वादन्ते पक्षिण्यादिपातेपि द्विरात्रादिवृद्ध्यापत्तेश्च । पूर्वाशौचान्तर्वर्धितद्वित्रिदिनमध्येऽधिकाशौचान्तरपाते तु वर्धितस्याल्पत्वादधिकेनैव शुद्धिः । न च वर्धितस्य पूर्वशेषत्वं शङ्कनीयम् । रात्रिशेषपूर्वशेषशुद्ध्यपवादे नैमित्तिकावृत्तिन्यायोज्जीवनात् । अपवादाभावे उत्सर्गस्य प्राप्तेः ॥

अपवादान्तरमाह **शङ्खः**—'मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥' पादत्रयं स्पष्टम् । तुर्यस्य त्वयमर्थः—पित्राशौ-

---

१—नन्वेवंविधविषये द्विरात्रादिवृद्धिप्रसङ्गः । 'अत ऊर्ध्वं द्विरात्रेण' इत्यनुपदमुक्तेरित्यत आह—द्व्यहादीति । २—तस्य द्वितीयाशौचस्य । ३—आहुरित्यनेन 'आनवमाद्दिवसात्' इत्यस्योक्तव्याख्याने यत्र द्वितीयादिदिनं तत्राष्टदिनाद्युपलक्षणत्वं वाच्यम् । तादृशव्याख्याने प्रयोजनाभावश्चेत्यस्वरसः सूचितः । अत क्ततस्त—आनवमाद्दिवसादित्याङोभिविध्यर्थकतयानवमपदे दशमलक्षणायाश्चाप्राकरणिकतया अत

चमध्ये मातृमृतौ पित्राशौचान्ते मातुः पक्षिणीमधिकां कुर्यादिति । अत्राशुद्धावित्युक्तेरा-त्महादेः पितुराशौचाभावान्मातृमरणे न पक्षिणी । किंतु पूर्णमेवाशौचम् । इयं च पक्षिणी तृतीयादिदिनपरा । नाद्यदिनद्वये प्रतिनिमित्तनैमित्तिकावृत्तिन्यायापवादपूर्वशेषा-पवादत्वादिति **पितृचरणाः** । सपिण्डाद्याशौचेन मातापित्रोराशौचापगमो नास्त्येव । एवं भर्तुरपि । इयं च पक्षिणी दशमदिनात्पूर्वं मातृमरणे ज्ञेया दशम्यां रात्रौ तत्प्रभाते वा मातृमरणे द्व्यहत्र्यहसमुच्चिता पक्षिणीति **कश्चित्** । तन्न । संख्यान्तरोपजननापत्त्या त्र्यहादिश्रुतिबाधापत्तेः । अत एवैका देया षड्देया इत्यादौ श्रुतसंख्याबाधापत्तेः समु-च्चयो निरस्तो द्वादशे । गुरुणि लघोरन्तर्गते 'गुरुणा लघु शुद्ध्येत्' इत्युक्तेश्च ॥

मातुरन्वारोहणे तु न पक्षिणी । 'यदा नारी विशेदग्निं प्रियस्य प्रियवाञ्छया । तदाशौचं विधातव्यं भर्त्राशौचक्रमेण हि ॥' इति **पृथ्वीचन्द्रोदये लघुहारीतोक्तेः**।तत्रैव **षडशी-तिमतेपि**–'मृतं पतिमनुव्रज्य पत्नी चेदनलं गता । न तत्र पक्षिणी कार्या पैतृकादेव शुध्यति ॥ पुत्रोन्यो वाग्निदस्तस्यास्तावदेवाशुचिस्तयोः । नवश्राद्धं च पिण्डं च युगपत्तु समापयेत् ॥' गृहीताशौचानां पुत्राणां पितुः संस्कारे मातुः सपिण्डस्य वा मरणे अतिक्रान्तकालाद्विद्यमाननिमित्तस्य बलवत्त्वात् । द्वादशवर्षोत्तरं संस्काराशौचमध्ये सपिण्डमरणेप्येवम् । यत्तु **अपरार्के ब्राह्मे**–'ऋग्वेदवादा साध्वी स्त्री न भवेदात्मघा-तिनी । त्र्यहाशौचे तु निर्वृत्ते श्राद्धं प्राप्नोति शास्त्रवत् ॥' इति, तद्भर्तृराशौचोत्तरमन्वा-रोहणे त्रिरात्राशौचपरम् । इति **पृथ्वीचन्द्रः** । ब्राह्मणादेः क्षत्रियाद्यनुगमनेल्पाशौच-**परमित्यपरार्कः** । **शुद्धितत्त्वादयो गौडास्तु**–भर्तुराशौचोत्तरमन्वारोहणे त्रिरात्रम् सहगमने तु संपूर्णम् । युद्धहतस्य सद्यः शौचेन्वारोहणे **ब्राह्मोक्ते**स्त्रिरात्रत्वात् । भर्तुरपि त्र्यहेण पिण्डदानम् । एकचितौ तु सद्यः शौचमित्याहुः । अन्यत्प्रागुक्तम् ।

पूर्वशेषेण शुद्धेरपवादान्तरमुक्तं **षडशीत्याम्** । 'पूर्वाशौचेन या शुद्धिः सूतके मृतके च सा । सूतिकामग्निदं हित्वा प्रेतस्य च सुतानपि ॥' **निर्णयामृते स्मृतिसं-ग्रहेपि**–'इयं विशुद्धिरुदिता सूतिकामग्निदं विना ॥' इदं मूल्येन दाहकरणे मातुलादि-संबन्धेन । दाहमात्रकरणे तु त्रिरात्रमेवेत्युक्तं प्राक् । **वृद्धात्रिः**–'सूतकाद्द्विगुणं शावं शावाद् द्विगुणमार्तवम् । आर्तवाद् द्विगुणा सूतिस्ततोपि शवदाहकः ॥' तथाशौचसं-पातेपि न शावजनननिमित्तकार्यप्रतिबन्धः । 'आशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥' इति **प्रजापतिस्मृतेः** ॥ आशौचे तु द्विविधेपि **शातातपः**–'अन्तर्दाहे च जननात्पश्चात्स्यान्मरणं यदि । प्रेत-मुद्दिश्य कर्तव्यं पिण्डदानं यथाविधि ॥ प्रारब्धे प्रेतपिण्डे तु [illegible]

'दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ।' इति शुचित्वं मेहेकोद्दिष्टाङ्गविप्रनिमन्
परामिति वदता तत्र शुद्धेरङ्गत्वं दर्शितम् । एवं वृषोत्सर्गशय्यादानादावपि । देवया
केन त्वाशौचान्तरेपि भवत्येवेत्युक्तम् ॥

**अथाशौचापवादः** ॥ स च पञ्चधा । कर्तृतः कर्मतः द्रव्यतः मृतदोषतः

आशौचापवादनिर्णयः ।

नाच्च । आद्यो ब्रह्मचारियत्यादिषु । 'नैष्ठिकानां वनस्थानां य
ब्रह्मचारिणाम् । न शौचं कीर्तितं सद्भिः पतिते च तथा मृते ॥
**कौर्मोक्तेः** । तुर्यपादे 'शावे वापि तथैव च' इति **देवलपाठः** । आशौचमन
र्मोपलक्षणम् । 'ब्रह्मचारी न कुर्वीत शववाहादिकाः क्रियाः । यदि कुर्याच्चरेत्कृच्छ्
संस्कारमेव च ॥' इति **देवलोक्तेः** । एतत्पित्राद्यतिरिक्तविषयम् । 'आचार्यं स्व
ध्यायं मातरं पितरं गुरुम् । निर्हृत्य तु व्रती प्रेतं न व्रतेन वियुज्यते ॥' इति म
**हारीतः**—'आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् । निर्हृत्य तु व्रती प्रेतं न
वियुज्यते ॥ मातापित्रोस्तु यत्प्रोक्तं व्रतचारी तु पुत्रकः । व्रतस्थोपि हि कुर्वीत
दानोदकक्रियाम् ॥ भवत्यशौचं नैवास्य न वाग्निस्तस्य लुप्यते । स्वाध्यायं च प्र
पूर्ववद्विधिदर्शितम् ॥' **संवर्तः**—'अन्यगोत्रोपसंबन्धः प्रेतस्याग्निं ददाति यः ।
चोदकदानं च स दशाहं समाचरेत् ॥' निर्हरणमन्त्यकर्मपरम् । एवं मातामहस्य
व्रतस्थोपि सुतः पितुः कुर्यात् क्रियां नृप । तथा मातामहस्यापि दौहित्रः कर्तुमर्हा
**इत्यपरार्के भविष्योक्तेः**—'मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् । कुर्वन्मा
स्यापि व्रती न भ्रश्यते व्रतात् ॥' इति **कालादर्शाच्च** । तत्रान्त्यकर्मनिमित्तमस्
दशाहमस्त्येव । 'सगोत्रो वासगोत्रो वा योग्निं दद्यात्सखे नरः । सोपि कुर्यान्न
शुद्ध्येत्तु दशमेहनि ॥' इति **दिवोदासोक्तवचनात्** । अत एव 'ब्रह्मचारिणः
र्मिणो व्रतान्निवृत्तिरन्यत्र मातापित्रोर्गुरोश्च' इति **गौतमीये** व्रतनिवृत्तिरेवप
नाशौचस्य । संध्यादिकर्मलोपस्तु नास्ति । 'न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्व
इति **छन्दोगपरिशिष्टात्** । 'पित्रोर्गुरोर्विपत्तौ तु ब्रह्मचार्यपि यः सुतः । सुत्र
कुर्वीत अग्निपिण्डोदकक्रियाम् ॥' तेनाशौचं न कर्तव्यं संध्या चैव न लुप्यते । अ
च कर्तव्यं सायं प्रातश्च नित्यशः ॥' इति **चन्द्रिकायां संवर्तोक्तेश्च** । अत्र
धिकाररूपाशौचनिषेध एव **अपरार्कमाधवादयस्तु**—एकाहमाशौचमाहुः । '
वाप्युपाध्यायं गुरुं वा पितरं च वा । मातरं वा स्वयं दग्ध्वा व्रतस्थस्तत्र भोज
कृत्वा पतति नो तस्मात् प्रेतान्नं तत्र भक्षयेत् ॥ अन्यत्र भोजनं कुर्यान्न च तैः स

प्रजापतिवचनात् । द्वितीयाहादौ पिण्डदानकाले एवास्पृश्यत्वमात्रं नान्यदेत्या
दशाहमस्पृश्यत्वेपि कर्माङ्गस्नानविधानार्थमेतदिति युक्तम् । अन्त्यकर्माकरणे तु ब्र
चारिणः पित्रादिमरणेप्याशौचाभाव एव । सोपि ब्रह्मचर्यकाल एव । समावर्तनोत्त
पूर्वमृतानां त्र्यहाशौचं भवत्येव ।'आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् । स
तूदकं दत्त्वा त्रिरात्रमशुचिर्भवेत् ॥' इति मनूक्तेः । तत्रापि विकल्पः 'पितर्यपि
नैषां दोषो भवति कर्हिचित् । आशौचं कर्मणोन्ते स्यात् त्र्यहं वा ब्रह्मचारिणाम्
इति छन्दोगपरिशिष्टात् । तथा कृतजीवच्छ्राद्धेन किमप्याशौचं न कार्यं
हेमाद्रिः । शुद्धितत्त्वे कौर्मे-'सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रवे । डि
हवहतानां च विद्युता पार्थिवैर्द्विजः ॥' उपद्रवेत्यन्तमरके । 'उपसर्गमृते चैव सद्यः
विधीयते' । इति पराशरोक्तेः । उपसर्गोऽत्यन्तमरक इति शूलपाण्यनिरुद्धभ
दयः ॥ याज्ञवल्क्योपि-'आपद्यपि च कष्टायां सद्यःशौचं विधीयते' । इति म
समयेपि नाशौचम् । तथा च शुद्धिरत्नाकरे दक्षः-'स्वस्थकाले त्विदं सर्वं सू
परिकीर्तितम् । आपद्गतस्य सर्वस्य सूतकेपि न सूतकम् ॥ अतः सति वैराग्ये संन्या
प्यातुरस्य भवतीति केचित् ॥

कर्मतआशौचनिर्णयः।

**अथ कर्मतः** त्रिंशच्छ्लोक्यां-'तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वके
भ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्पातुराणाम् । संप्रारब्धेषु दा
पनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष
तदर्थे ॥' नाशौचमिति शेषः । सत्री अन्नसत्रवान् । मुख्यसत्रस्य दीक्षितपदात्सिद्धे
व्रती अनन्तव्रतादिनियमवान् । 'न व्रतिनां व्रते' इति विष्णूक्तेः । प्रचेताः-'का
शिल्पिनो वैद्यदासीदासास्तथैव च । राजानो राजभृत्याश्च सद्यःशौचाः प्रकीर्तिताः
कारवः सूपकाराद्याः । शिल्पिनश्चैलनिर्णेजकाद्याः । आतुरस्य व्याधिनाशार्थं दान
तुलादानादेः । प्रारम्भो नान्दीश्राद्धं संकल्पो वा यजनं तडागोत्सर्गकोटिहोमादि
लघुविष्णुः-'व्रतयज्ञविवाहेषु श्राद्धे होमेर्चने जपे । आरब्धे सूतकं न स्यादनारब्धे
सूतकम् ॥ प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नान्दीश्राद्धं विवाहादौ श्र
पाकपरिक्रिया' ॥ इति । पाकस्य परिसमंतात्क्रिया । पाकप्रोक्षणमिति शुद्धिप्रदीप
न्मन्दम् । रूढेर्योगाद्बलवत्त्वात् । तीर्थेति आशौचे आकस्मिकतीर्थप्राप्तौ । 'विवाह
यज्ञेषु यात्रायां तीर्थकर्मणि । न तत्र सूतकं तद्वत् कर्मयज्ञादि कारयेत् ॥' इति पै
नसिस्मृतेः । अत्र विशेषः प्रागुक्तः । जपः पुरश्चरणादिः स्तोत्रपाठः, अवि

नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥' राघवभट्टीये नारदः—'अथ मन्त्रिणः पूजां वक्ष्याम्यागमचोदिताम् । स्नात्वा नित्यं च निर्वर्त्य मानस्या क्रियया तु वै ॥ बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत् । यदि कामो न चेत्कामी नित्यं पूर्ववदाचरेत् ॥' यत्तु नृसिंहकल्पे—'सदा मन्त्रजपं मुक्त्वा यदि स्यादशुचिर्नरः । मनसावहितस्तत्र स्मरेन्मन्त्रं न तूच्चरेत् ॥' तन्मूत्राद्याशौचपरम् । रामार्चनचन्द्रिकायाम्—'अशुचिर्वाशुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि । मन्त्रैकस्मरणो विद्वान् मनसैव सदाभ्यसेत् ॥ 'कालनियमाभावे तु स्तोत्रहरिवंशादि ह्येयमेव । उत्सवो रथयात्रादिः । एषु नाशौचम् । अयं चाशौचाभावोऽनन्यगतित्वे आर्तौ च ज्ञेयः । अत्र मूलमाकरे स्पष्टम् ॥

अत्र दीक्षितस्य अवभृथात्पूर्वमेवाशौचाभावः । तदादित्वाशौचमस्त्येव । 'तेन वैतानोपासनाः कार्याः' इति वैतानत्वेऽप्यवभृथादि न भवत्येव । अत एवोक्तं माधवीये ब्राह्मे—'तद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे । स्नाने त्ववभृथे यावत्तावत्तस्य न सूतकम् ॥' इति । वैतानोपासनाः कार्या इत्यनेनैव सिद्धेर्ऋत्विजां दीक्षितानां चेति पुनर्दीक्षितग्रहणं यजमाने स्वयं कर्तृत्वार्थं स्नानप्राप्त्यर्थं वेति विज्ञानेश्वरः । वस्तुतस्तु दीक्षणीय संस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं दीक्षितग्रहणम् । तेन ततः पूर्वं निषेध एव । यत्तु 'प्रारम्भो वरणं यज्ञे' इति तदृत्विक्परम् । तथा च छन्दोगपरिशिष्टे—'न दीक्षिण्याः परं यज्ञे न कृच्छ्रादितपश्चरन् ।' इति । शुद्धितत्त्वेऽप्येवम् । ऋत्विजां च मधुपर्कोत्तरमाशौचाभावः । 'गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः । पश्चादशौचे पतिते न भवेदिति निश्चयः इति ब्राह्मात् । अत एव रामाण्डारः—'चतुर्णां वरणपक्षेऽन्येषामाशौचेऽन्य आगमयितव्यः' इत्याह । एवं स्मार्तेऽपि तुलाकोटिहोमादौ मधुपर्के सति दोषाभाव ज्ञेयः । यत्तु 'प्रारम्भो वरणं यज्ञे' इति, तत्रापि मधुपर्कान्तं ज्ञेयम् । तेनाधानेष्टिपशुबन्धा तदभावादन्ये भवन्तीति सिद्धम् ॥

अपवादान्तरमाह याज्ञवल्क्यः—'वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात् । तत्र त्यागमात्रे स्नानोत्तरं स्वयंकर्तृत्वम् । 'श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्यात् ।' इति स्मृतेः । त्यागातिरिक्ते तु श्रौते स्मार्ते चान्यस्यैव कर्तृत्वम् । 'सूतके मृतके चैव अशक्तौ श्राद्धभोजने । प्रवासादिनिमित्तेषु हावयेन्न तु हापयेत् ॥' इति बृहस्पत्युक्तेः । 'नित्यानि निवर्तेरन्वैतानवर्ज्यम् । शालाग्नौ चैकेऽन्य एतानि कुर्युः' इति पैठीनसिस्मृतेश्चेति विज्ञानेश्वरः । एकग्रहणं पूजार्थम् । तेन स्मार्तं कार्यमेवेति हा लतायाम् । दाक्षिणात्यास्तु विकल्पमाहुः । अपरार्कादिनिबन्धास्तु—श्रौतं

कर्म वैतानिकं च यत् सूतकेपि त्यजेन्मोहात्प्रायश्चित्तीयते द्विजः ।' इति म
'जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते । शालाग्नौ केवलो होमः कार्य
त्रजैः । इति जाबालोक्तेश्चेत्याहुः । आचारार्केप्येवम् । याज्ञिका
'सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् । पिण्डयज्ञं चरुं होममसगोत्रेण
इति जातूकर्ण्योक्तेश्च । चरुः स्मार्तस्थालीपाकः । श्रवणाकर्मादिश्चेति
प्रारब्धं तु सपिण्डेनापि कार्यम् । 'न च तत्कर्म कुर्वाणः सनाभ्योप्यशुचि
मनूक्तेः । छन्दोगपरिशिष्टेपि-'होमः श्रौते तु कर्तव्यः शुष्कान्नेन फले
हावयेत् स्मार्ते तदभावे कृताकृतम् ॥' अकृतं व्रीह्यादि । कृताकृतं तन्दुला
होमादौ तु विकल्पो ज्ञेयः । 'शालाग्नौ चैके' इति प्रागुक्तेः । यदा करणं त
अत्रेदं तत्त्वम् । येषां बह्वृचादीनां द्वादशरात्रमहोमेपि नाग्निविच्छेदस्ते
तैत्तिरीयाद्यैः कार्यम् । 'त्रिरात्रमहूयमानेऽग्निर्लौकिकः संपद्यते ।' इति सु
वचनात् । समारूढे त्वग्नौ तेनापि न कार्यम् । किंतु पुनराधानमेव । समा
हयोराशौचापवादाभावादनन्यकर्तृकत्वाच्च । अन्यथा पुनराधानमपि स्यात् ।
लायनः-'तौ चापि सूतके शावपर्वणीष्टिं महापदि । पुष्पवत्यां च भार्यायां
कदाचन ॥ स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः । श्रौताग्निस्तु सकृ
वा स्वयं हुनेत् ॥' इति । तदपि समारूढपरम् । तदाह स एव-'स्मार्ताग्नि
षामभावे सूतकादिषु । समारोप्य तदन्तेषु विहृत्य जुहुयात्स्वयम् ।' इ
मनुः-'प्रत्यूहेन्नाग्निषु क्रियाः' इति 'वैश्वदेवस्य त्वग्निसाध्यत्वेपि वचनान्निवृ
दशाहमासीत वैश्वदेवविवर्जितः ॥' इति संवर्तोक्तेः । यद्यपि-'पञ्चयज्ञविध
कुर्यान्मृतजन्मनोः' इति तेनैवोक्तेः । पूर्वनिषेधो व्यर्थस्तथाप्यापस्तम्बाद
देवस्य पञ्चयज्ञभिन्नत्वात् पृथङ्निषेधः । हरदत्तस्त्वाशौचेपि बह्वृचैर्वैश्वदे
'तस्य द्वावनध्यायौ यदात्माशुचिर्यद्देशः ।' इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य

सन्ध्यादीनामप्यपवादमाहापरार्के पुलस्त्यः-'सन्ध्यामिष्टिं चरुं होमं
समाचरेत् । न त्यजेत्सूतके वापि त्यजन् गच्छेदधो द्विजः ॥ सूतके मृतके
कर्म समाचरेत् । मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः ॥' यत्तु चा
जाबालः-'सन्ध्या पञ्चमहायज्ञा नैत्यकं स्मृतिकर्म च । तन्मध्ये हापयेत्त
हान्ते पुनःक्रिया ॥' इति । यच्च संवर्तः-'सूतके कर्मणां त्यागः सन्ध्याद
यते ॥' यच्च विष्णुपुराणम्-'सर्वकालमुपास्या तु सन्ध्ययोः पार्थिवेष्यते

माह—'सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्यं ध्यायन्नमस्कुर्यात् ॥' **प्रयोगपारिजाते भारद्वाजोपि**—'सूतके मृतके कुर्यात् प्राणायाममन्त्रकम् । तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् । मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ॥' ग्रहणे श्राद्धादावप्याशौचापवादमाह **व्याघ्रः**—'स्मार्त कर्मपरित्यागो राहोरन्यत्र सूतके ।' इति । **लैङ्गेपि**—'सूतके मृतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥' **प्रयोगपारिजाते बृहस्पतिः**—'कन्याविवाहे संक्रान्तौ सूतकं न कदाचन ॥' **वृद्धशातातपः**—'यदा भोजनकाले तु अशुचिर्भवति द्विजः । भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति ॥ भक्षयित्वा तु तं ग्रासमहोरात्रेण शुद्ध्यति । अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति ॥' इदमविशेषा-त्सूतकादिपरमपीति **शुद्धितत्त्वे शूलपाणौ** च ॥

**अथ द्रव्यतः । मरीचिः**—'लवणे मधुमांसे च पुष्पमूलफलेषु च । शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च । तिलौषधाजिने चैव पक्कापक्के स्वयंग्रहः ॥ पण्येषु चैव सर्वेषु नाशौचं मृतसूतके ।' स्वयमेव स्वाम्यनुज्ञया ग्राह्यं न तद्धस्तादित्यर्थः । क्रये तु तद्धस्तादपि न दोषः । पक्वं लड्डुकादि । अपक्वं तण्डुलादि । एतदन्नसत्रपरम् । 'अन्नसत्रे प्रवृत्तानामाममन्नमगर्हितम् । भुक्त्वापक्वा-मेतेषां त्रिरात्रं तु व्रती भवेत् ॥' **इत्याङ्गिरसोक्तेः** । पक्वान्नमोदनादि न तु भक्ष्य-म् । **षट्त्रिंशन्मते**—'उभाभ्यामपरिज्ञाते सूतकं नैव दोषकृत् । एकेनापि परिज्ञाते भोक्तुर्दोषमुपावहेत् ॥ विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके । अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ॥' **बृहस्पतिः**—'विवाहोत्सव' इत्याद्युक्त्वा—'पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः ॥' **षडशीतौ**—'संसर्गाद्यस्य वाशौचं यस्यातिक्रान्तकालता । तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित् ॥' **शुद्धितत्त्वे**—'शुद्ध्येत्'—इत्यनुवृत्तौ **विष्णुः** 'प्रोक्षणेन पुस्तकम्' इति ॥

द्रव्यतः शुद्धिनिर्णयः ।

**अथ मृतदोषे हेमाद्रौ षट्त्रिंशन्मते कौर्मे च**—'व्यापादयेद्य आत्मानं स्वयम-ग्न्युदकादिभिः । विहितं तस्य नाशौचं नापि कार्योदकक्रिया ।' शवदर्शनं यावदाशौचमस्त्येव । 'हतानां नृपगोविप्रैरन्वक्षं चात्मघाति-नाम् ।' इति **याज्ञवल्क्योक्तेः । शुद्धितत्त्वे कौर्मे**—सद्यः शौचं समाख्यातं शापा-दिमरणे तथा । आदिपदादभिचारहते । **भविष्ये**—'स्वेच्छयामरणं विप्राच्छृङ्गि-

मृतदोषे निर्णयः ।

नमपतनैश्वेच्छताम् ॥' इति नाशौचामिति शेषः । अङ्गिराः-'चण्डालादुदक
ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिण्ड
प्रेतेभ्यो यत्प्रदीयते । नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति ॥' षड्त्रिंश
प्येवम् । ब्राह्मेऽपि-'श्रृंगिदंष्ट्रिनखव्यालविषवह्निक्रियाजलैः ॥' व्यालो गजः
रात्परिहर्तव्यः कुर्वन् क्रीडांमृतस्तु यः । नागानां विप्रियं कुर्वन् हतश्चाप्यथ वि
'निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् । परदारान् हरन्तश्च द्वेषात्तु पतिभिर्ह
असंमानैश्च संकीर्णैश्चण्डालाद्यैश्च विग्रहम् । कृत्वा तैर्निहतास्तद्वच्चण्डालादीन् समाश्रि
शस्त्राग्निगरदाश्चैव पाखण्डाः क्रूरबुद्धयः । क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं ज
गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः ॥ कुशिल्पजीविनो ये च सूनालंकारधा
मुखेभगास्तु ये केचित् क्लीबप्राया नपुंसकाः ॥ ब्रह्मदण्डहता ये च ये चापि ब्र
हताः । महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥ पतितानां न दाहः स्यान्नान्
नास्थिसंचयः । न चाश्रुपातः पिण्डो वा कार्यं श्राद्धादिकं क्वचित् ॥ एतानि पति
तु यः करोति विमोहितः । तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्न चान्यथा ॥'

एतद्बुद्धिपूर्वं सर्वेषां करणे तु **माधवीये वसिष्ठः**-'य आत्मत्यागिनां कुर्यात्
त्प्रेतक्रियां द्विजः । स तप्तकृच्छ्रसहितं चरेच्चान्द्रायणव्रतम् ॥' अज्ञाने तु-'कृत्वाग्नि
कं स्नानं संस्पर्शं वहनं कथाम् । रज्जुच्छेदाश्रुपातं च तप्तकृच्छ्रेण शुद्ध्यति ॥'
ज्ञेयम् । प्रत्येकं बुद्धिपूर्वं एतदिति **मदनपारिजातः** । प्रत्येकं तु स्पर्शाश्रुणोर्मि
**क्षरायाम्**-'तच्छवं केवलं स्पृष्टमश्रु वा पतितं यदि । पूर्वोक्तानामकारी चेदेकरा
भोजनम् ॥ एकरात्रं तु नाश्नीयात् त्रिरात्रं बुद्धिपूर्वकम् ।' इति **माधवीये** उत्तरा
अन्येषु तु **संवर्तः**-'एषामन्यतमं प्रेतं यो वहेत दहेत वा । कटोदकक्रियां कृत्वा कृ
सांतपनं चरेत् ॥' अज्ञाने त्वर्धम् । एतदनाहिताग्नेः आहिताग्नेः कृच्छ्र एवेति **माध**
**मिताक्षरायाम्**-'आत्मनस्त्यागिनां नास्ति पतितानां तथा क्रिया । तेषामपि
गङ्गातोये संस्थापनं हितम् ॥

आहिताग्नेस्तु विशेषो **हेमाद्रौ भविष्ये**-' वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्प
पात्राणि तु दहेदग्नौ साग्निके पापकर्मणि ॥' **छन्दोगपरिशिष्टेऽपि**-'महापातक
युक्तो दौरात्म्यादग्निमान्यदि । पुत्रादिः पालयेदग्नीन्युक्त आदोषसंक्षयात् ॥ प्रायश्चि
न कुर्याद्यः कुर्वन्वा म्रियते यदि । गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येच्छपरिच्छदम् ॥ पा
णि दद्याद्द्विजाय दहेदप्स्वेव वा क्षिपेत् ॥' **माधवीये पराशरः**-'...

मन्त्रेण पृथगेनं पुनर्दहेत् ॥' **हेमाद्रौ** तु–'दाहयित्वा शवं तेषां शूद्रैरविधिपूर्वकम् ॥' इत्युक्तम् । एतद्दर्पादिना मरणे ज्ञेयम् । 'तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ।' इति । **श्रुतावात्महनने एव दोषोक्तेः** । प्रमादमरणे त्वाशौचादि सर्वं भवत्येव । **तदाहाङ्गिराः**–'अथ कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तस्याशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥' **ब्राह्मेपि**–'प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः । शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः ॥ चण्डालैरथ वा चोरैर्निहतो वापि कुत्रचित् । तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥' इति । प्रमादमरणे त्रिरात्रमाशौचमिति **गौडाः शुद्धितत्त्वादयः** । दशाहादिति **दाक्षिणात्याः** । अस्यापवादो **हेमाद्रौ भविष्ये**–'प्रमादादिच्छया वापि न कुर्यात्सर्पतो मृते ॥' नागपूजां विना न कुर्यादित्यर्थः । **बौधायनोपि**–'बुद्धिपूर्वात्महन्तॄणां क्रियालोपो विधीयते ॥' क्रियान्त्यकर्म ॥

तत्र दुर्मरणनिमित्तं दानादि कार्यम् । तत्र **विश्वप्रकाशादौ शातातपीये च**–'व्याघ्रेण निहते विप्रे विप्रकन्यां विवाहयेत् । सर्पदष्टे नागबलिर्देयः सर्पश्च काञ्चनः ॥ चतुर्निष्कमितं हैमं गजं दद्याद्गजैर्हते । राज्ञा विनिहते दद्यात्पुरुषं तु हिरण्मयम् ॥ चौरेण निहते धेनुं वैरिणा निहते वृषम् । वृषेण निहते दद्याद्यथाशक्त्या तु काञ्चनम् ॥ शय्यामृते प्रदातव्या शय्यातूलीसमन्विता । निष्कमात्रसुवर्णस्य विष्णुना समधिष्ठिता ॥ शौचहीने मृते चैव द्विनिष्कं स्वर्णजं हरिम् । संस्कारहीने च मृते कुमारमुपनाययेत् ॥ निष्कत्रयं स्वर्णमितं दद्यादश्वं हयाहते । शुना हते क्षेत्रपालं स्थापयेन्निजशक्तितः ॥ सूकरेण हते दद्यान्महिषं दक्षिणान्वितम् । कृमिभिश्च मृते दद्याद्गोधूमान्पञ्चखारिकाः ॥ वृक्षं वृक्षहते दद्यात्सौवर्णं वस्त्रसंयुतम् । शृङ्गिणा निहते दद्याद्वृषभं वस्त्रसंयुतम् । शकटेन हते दद्याद्रथ्यं सोपस्करान्वितम् ॥ भृगुपातमृते चैव प्रदद्याद्धान्यपर्वतम् । अग्निना निहते कार्यमुदपानं स्वशक्तितः ॥ दारुणा निहते चैव कर्तव्या सदने सभा । शस्त्रेण निहते दद्यान्माहिषीं दक्षिणान्विताम् ॥ अश्मना निहते दद्यात्सवत्सां गां पयस्विनीम् । विषेण च मृते दद्यान्मेदिनीं हेमनिर्मिताम् ॥ उद्बन्धनेन च मृते कपिं कनकनिर्मितम् । मृते जलेन वरुणं हैमं दद्याद्द्विनिष्कजम् ॥ विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान् । घृतधेनुः प्रदातव्या कण्ठान्नकवले मृते ॥ कासरोगेण च मृते अष्टकृच्छ्रं व्रतं चरेत् । अतिसारमृते लक्षं गायत्र्याः प्रयतो जपेत् ॥ शाकिन्यादिग्रहग्रस्ते जपेद्रुद्रं यथोदितम् । विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥

तथा वैधमरणेपि न दोषः । तदाहतुर्मनुवृद्धगार्ग्यौ–'वृद्धः शौचमृते लुप्तप्र
तभिषक्क्रियः । आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ तस्य त्रिरात्र
द्वितीये त्वस्थिसंचयः । तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥' इति हे
विष्णुधर्मेपि–'नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुम् । असूर्या नाम ते
अन्धेन तमसा वृताः ॥ तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः । अरिष्टै
ज्ञात्वा मृत्युकालमुपस्थितम् ॥ व्याधितो भिषजा त्यक्तः पूर्णे वायुषि चात्मनः
युगानुसारेण संत्यजेदात्मनस्तनुम् ॥ तस्मिन्काले तनुत्यागाद्यथेष्टं फलमाप्नुयात्
षस्तु पुरा दृष्टं मरणं ब्राह्मणस्य च ॥' नेति गौडानामपपाठः उत्तरार्धे अस
'क्षत्रियस्य तु संग्रामे मृते भर्तरि योषितः ॥' अपरार्के ब्रह्मगर्भः–'यो
न शक्नोति महाव्याध्युपपीडितः । सोग्न्युदकं महायात्रां कुर्वन्नात्र न दुष्य
अत्रोक्तवक्ष्यमाणवचोनिचयात्प्रयागातिरिक्तेऽचिकित्स्यरोगाद्युपहतानामधिकारः
जीर्णवानप्रस्थस्यैवेति विज्ञानेश्वरदैवयाज्ञिकादयः ॥ अत एव मिताक्ष
भृगुपातानशनादिकं वानप्रस्थस्यैवोक्तम् । मनुरपि–'आसां महर्षिचर्याणां त
न्यतमया तनुम् । वीतशोकभयो विप्रो ब्रह्मभूयाय कल्पते' ॥ इति । तेनान्यत्रा
षयतैव मूलैक्यादिति केचित् । तन्न । वानप्रस्थमरणे आशौचनिषेधात् । तेन
दिपरमेवेदम् । तेन यतेर्नाधिकारः । काम्येऽनधिकाराच्च । नैमित्तिकत्वे त्वकरणे
नित्यता च स्यात् । प्रयागे त्वरोगिणां रोगिणां च । यत्तु–'शूद्राश्च क्षत्रिय
अन्त्यजाश्च तथाधमाः । एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजं नृप ॥
ब्राह्मणस्तत्र ब्रह्महा चात्महा भवेत् ॥' इति तन्निर्मूलमिति भट्टाः । तत्त्वं तु हे
व्रतकाण्डेऽलिखनान्निर्मूलत्वं चिन्त्यमेव । प्रक्रमात्तु पतितेवेति भृगुपातमात्रपरं
ब्राह्मणस्याप्यनुज्ञातमिति वक्ष्यमाणविरोधाच्च । यत्त्वादित्यपुराणे–'अब्राह्म
स्वर्गादिमहाफलजिगीषया । प्रविशेज्ज्वलनं तोयं करोत्यनशनं तथा ॥ ' इति
गातिरिक्तपरमिति केचित् । हेमाद्रौ त्वेतदग्रे–'प्रयागवटशाखाग्रात्' इत्युक्तेर्ब्रा
प्रयागेपि नेति प्रतीयते ॥

माधवीयेऽपरार्के चादित्यपुराणे–'दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुम
प्रविशेज्ज्वलनं दीप्तं करोत्यनशनं तथा ॥ अगाधतोयराशिं च भृगोः पतनमे
गच्छेन्महापथं वापि तुषारगिरिमादरात् ॥ प्रयागवटशाखाग्राद्देहत्यागं करोति च
देहविनाशस्य काले प्राप्ते महामतिः ॥ उत्तमान् प्राप्नुयाल्लोकानात्मघाती भवेत्

गतो हरः । प्रणवं तारकं ब्रूते नान्यथा कुत्रचित्कचित् ॥' **हेमाद्रौ** चैवम् । अत्र प्राप्ते काले इत्युक्तेरप्राप्तमरणकालायाः स्त्रिया अन्वारोहणे संपूर्णमेवाशौचम् । पृथ्वीचन्द्र स्त्वत्रापि त्र्यहमाह । **शुद्धितत्त्वादिगौडग्रन्थेष्वप्येवम्** ॥

एतच्च वृद्धादिमरणं कलौ निषिद्धम् । 'भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ।' इति- **माधवेन पृथ्वीचन्द्रेण** च कलिवर्ज्येषूक्तेः । न चात्र यावदुक्तनिषेधः । विशिष्टोद्देशे वाक्यभेदात् । न च कलौ वानप्रस्थाश्रमनिषेधादेव सिद्धेर्मरणनिषेधो व्यर्थ इति वाच्यम् । सर्ववर्णेष्वित्यादिभिस्तद्भिन्नस्यापि प्राप्तेः काम्यं भवत्येव । 'ये वै तन्वं' विसृजन्ति' इति श्रुतेः । स्मृत्या संकोचायोगात् । न चेयं स्वाभाविकमृत्युपरा धीरपदोक्तेः । **मात्स्यभारतादिषु**—'न लोकवचनात्तात न वेदवचनादपि । मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥' इत्युक्तेः । अत एव **विष्णुधर्मे**—रोग्यादिमरणमुक्त्वोक्तम्—'यथायुगानुसारेण संत्यजेदात्मनस्तनुम् ।' इति । काश्यामप्युक्तं **मात्स्ये**— 'अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः । प्रविशन्ति मुखं ते मे निःसंदिग्धं वरानने ॥' **हेमाद्रौ विवस्वान्**—'सर्वेन्द्रियविमुक्तस्य स्वव्यापाराक्षमस्य च । प्रायश्चित्तमनुज्ञातमग्निपातो महापथः ॥ धर्मार्जनासमर्थस्य कर्तुः पापाङ्कितस्य च । ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणम् ॥' **अपरार्के** चैवम् । सहगमनं कलौ भवत्येव । 'कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते' । इति **ब्रह्मवैवर्तात्** । एतेन मरणान्तिकप्रायश्चित्तं **काशीखंडादौ** चातुर्वर्ण्यस्य । तनुत्यागविधयश्च युगान्तरपरा एव ॥

---

१—यत्तु कैश्चिदुक्तम्—पुरुषाणामिव स्त्रीणामप्यात्महननस्य प्रतिषिद्धत्वादातिप्रवृद्धस्वर्गाभिलाषाय प्रतिषेधशास्त्रमतिक्रामन्त्या अयमनुगमनोपदेशः श्येनवदिति । तदयुक्तम् ये तावत् श्येनकरणिका हिंसायां विधिसंस्पर्शाभावेन प्रतिषेधसंस्पर्शात् फलद्वारेण श्येनस्यानर्थत्वं वर्णयन्ति, तेषां मते हिंसा एव स्वर्गार्थितयानुगमनशास्त्रेण विधीयमानत्वात्प्रतिषेधसंस्पर्शाभावादग्नीषोमीयपशुवत्स्पष्टमेवानुगमन श्येनवैषम्यम् । यत्तु मतम्—हिंसा नाम मरणानुकूलो व्यापारः, श्येनश्च परमरणानुकूलव्यापाररूपत्वा द्धिंसैव । कामाधिकारे च करणांशेरागतः प्रवृत्तिसंभवेन विधेरप्रवर्तकत्वाद्रागप्रयुक्तहिंसारूपत्व श्येनः प्रतिषिद्धः स्वरूपेणैवानर्थ इति, तत्राप्यनुगमनशास्त्रेण मरणस्यैव स्वर्गसाधनतया विधानान्मरण यद्यपि रागतः प्रवृत्तिस्तथापि मरणानुकूले व्यापारे अग्निप्रवेशादावितिकर्तव्यतारूपे विधित एव प्रवृ रिति न निषेधस्यावकाशः 'वायव्यं श्वेतमालभेत भूतिकामः' इतिवत् । तस्मात्स्पष्टमेवानुगमन श्येनवैषम्यम । 'तस्मादुह न परायुषः स्वःकामी प्रेयात्' इति श्रुतिविरोधादनु गमनमयुक्तमिति 'स्वःकाम्यायुषःप्राक् न प्रेयात्' इति । स्वर्गफलोद्देशेनायुषः प्रागायुर्व्ययो न कर्तव्यो मोक्षार्थिना

प्रयागेपि **त्रिस्थलीसेतौ स्कान्दे**–'यथाकथंचित्तीर्थेस्मिन्प्राणत्यागं करो
तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि ॥' **पाद्मे विष्णुः**–'देहत्यागं तथ
कुर्वन्ति मम संनिधौ । मत्तनुं प्रविशन्त्येव न पुनर्जन्मने नराः ॥' **कौर्मे**–'
यदि वा दीनः क्रुद्धो वापि भवेन्नरः । गङ्गायमुनमासाद्य यस्तु प्राणान्परित्य
ईप्सिताँल्लभते कामान्वदन्ति मुनिपुंगवाः॥' **तथा**–'या गतिर्योगयुक्तस्य सत्त्वस्थ
षिणः। सा गतिस्त्यजतः प्राणान् गङ्गायमुनसंगमे ॥' **वाराहे**–'तत्र यो मुञ्चति
वटमूलेषु सुन्दरि । सर्वलोकानतिक्रम्य मम लोकं प्रपद्यते ॥' **तथा**–'अकामो वा
वा वटमूलेषु सुन्दरि । शीघ्रं प्राणान्प्रमुञ्चेत यदीच्छेत्परमां गतिम् ॥' **तथा**–'प
नविस्तीर्णे प्रयागस्य तु मण्डले । व्यतीतान्पुरुषान्सप्त भविष्यांश्च चतुर्दश ॥ नर
सर्वान् यस्तु प्राणान्परित्यजेत् ॥' **ब्राह्मे**–'ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्
तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः ॥ दुष्कृतोपि दुराचारो ब्रह्महत्यादिप
हरिं ध्यात्वा त्यजेद्देहं प्रायशो मुक्तिमान्भवेत् ॥' **भविष्योत्तरे**–'समाः सहस्राणि
वै जले दशैकमग्नौ पतने च षोडश । महाहवे षष्टिरशीतिगोग्रहे अनाशके भारत
गतिः ॥' इति सामान्यतोपि फलम् । एवमन्येपि विधयो ज्ञेयाः । यत्तु **गौडाः**
गादिमरणं ब्राह्मणभिन्नविषयमित्याहुस्तद्दूषणं **पितामहचरणैः** प्रयागविधौ कृ
नात्रोच्यते ॥

अत्र दशाहमाशौचम् । त्रिरात्रस्य मासकालगोचरत्वादिति **भट्टाः** । युक्तं तु त्रि
**दिवोदासीयेप्येवम्** । **शुद्धितत्त्वेपि काश्यपः**–'अनशनमृतानामशनिहत
ग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तरमृतानां जातदन्तानां च त्रिरात्रम् ।' इति । प
णान्तप्रायश्चित्तेपि । पूर्वोक्तश्चात्महादेर्दाहाशौचादिनिषेधस्तदानीमेव । वत्सरान्ते तु
र्ध्वदेहिकं कुर्यात् । 'गोब्राह्मणहतानां च पतितानां तथैव च । ऊर्ध्वं संवत्सरात्कु
र्वमेवौर्ध्वदेहिकम्' इति **हेमाद्रौ षट्त्रिंशन्मतात्** । एवं म्लेच्छीकृतानामपि ग
द्धमपि कार्यम् । 'ब्रह्महा च कृतघ्नश्च गोघाती पञ्चपातकी । सर्वे ते निष्कृतिं
गयायां पिण्डपातनात् ॥' इत्य**ग्निपुराणात्** । एवं **ब्राह्मेपि**–'क्रियते पतितानां
संवत्सरे क्वचित् । देशधर्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः । मार्तण्डपादमूले वा
हरिहरौ स्मरन् ।' सूर्यपद इत्यर्थः ॥

तत्र वर्षमध्ये कृत्यमुक्तमपरार्के **वायुपुराणे**–'शुक्लपक्षे तु द्वादश्यां कुर्याच्च
तु वत्सरम् । द्वादशाहनि वा कुर्याच्छुक्के च प्रथमेहनि ॥' ...

'कृत्वा चान्द्रायणं पूर्वं क्रिया कार्या यथाविधि । नारायणबलिः कार्यो लोकगर्हा-भयान्नरैः ॥ पिण्डोदकक्रियाः पश्चाद्वृषोत्सर्गादिकं च यत् । एकोद्दिष्टानि कुर्वीत सपिण्डीकरणं तथा ॥' **दिवोदासीये वृद्धशातातपस्तु**–'पतिते च मृते शुद्धौ प्राजापत्यांस्तु षोडश । मृते चापत्यरहिते कृच्छ्राणां नवतिं चरेत् ॥' इत्याह । इदं प्रायश्चित्तार्हपित्रादिविषयम् । 'इन्द्रियैरपरित्यक्ता ये च मूढा विषादिनः । घातयन्ति स्वमात्मानं चाण्डालादिहताश्च ये ॥ तेषां पुत्राश्च पौत्राश्च दयया समभिप्लुताः । यथाश्राद्धं प्रतन्वन्ति विष्णुनामप्रतिष्ठितम् ॥ तथा ते संप्रवक्ष्यामि नमस्कृत्य स्वयंभुवे ।' **हेमाद्रौ तेनैवोक्तेः**। तत्रैव **बौधायनोपि**–'नारायणबलिं व्याख्यास्यामः–(चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ विषशस्त्ररज्जुपाषाणाद्देशान्तरमृते वा) अभिशस्तपतितसुरापात्मत्यागिनां ब्राह्मणहतानां च द्वादशवर्षाणि त्रीणि वा कुर्वीत ।' इति ॥

**गृह्यपरिशिष्टे** तु–चण्डालादित्याद्युक्त्वा–'दग्ध्वा शरीरं प्रेतस्य संस्थाप्यास्थीनि यत्नतः । प्रायश्चित्तं तु कर्तव्यं पुत्रैश्चान्द्रायणत्रयम् ॥' इत्युक्तम् । **मदनरत्ने ब्राह्मे**–'प्रमादादपि निःशङ्कस्त्वकस्माद्विधिचोदितः । चाण्डालैर्ब्राह्मणैश्चौरैर्निहतो यत्र कुत्रचित् । तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः । चान्द्रायणं तप्तकृच्छ्रद्वयं तस्य विशुद्धये॥यद्वा कृच्छ्रान्पञ्चदश कृत्वा तु विधिना दहेत् । बुद्धिपूर्वमृतानां तु त्रिंशत्कृच्छ्रं समाचरेत् ।' इत्युक्तम् । **स्मृतिरत्नावल्यां** तु–'द्विगुणं प्रायश्चित्तं कृत्वार्वागप्यब्दात्सर्वं कार्यम्' इत्युक्तम् । 'आत्मनो घातशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् । तप्तकृच्छ्रचतुष्कं च त्रिंशत्कृच्छ्राणि वा पुनः ॥ अर्वाक् संवत्सरात्कुर्याद्दहनादि यथोदितम् । कृत्वा नारायणबलिमनित्यत्वात्तदायुषः ॥' इति । इदं चात्मवधनिमित्तं तज्जातिवधप्रायश्चित्तेन समुच्चितं कार्यम् । अत एव **बौधायनोक्तं** 'द्वादश वर्षाणि त्रीणि वा' इति । **मदनपारिजाते स्मृत्यर्थसारे** च–'ब्रह्मादीनां तद्योग्यं प्रायश्चित्तं कृत्वा नारायणबलिः कार्यः ।' इत्युक्तम् । एवं म्लेच्छीकृतानामपि । यत्तु **कश्चिदाह**–'पुत्रकृतेन प्रायश्चित्तेन पितुः पापनाशे मानाभावः आत्मघाते तु वचनादस्तु । महापातके तु कथं स्यादिति । सः स्वयमेवात्मवधप्रायश्चित्तस्य जातिवधनिमित्तेन समुच्चयं वदन् हृदयशून्य एव । नहि जातिवधनिमित्तं पुत्रैः कार्यमिति वचनमस्ति । पुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः । प्रागुक्तबौधायनवचनाच्चेति दिक् । इदं प्रायश्चित्तार्हाणामेव । प्रायश्चित्तानर्हाणां तु पतितोदकमात्रं कार्यम् ।' इति **केचित्** । **मदनपारि-**

जातादिस्वरसोप्येवम् । वस्तुतस्तु-'तदर्हानर्हयोर्वचनेऽनुपादानादविशेषात्तत्रापि न
यणवलिर्गयाश्राद्धं चेति युक्तम् ॥

पतितोदकविधिस्तु-'पित्राद्यतिरिक्तविषयः।' इत्यपरे। स यथा हेमाद्रौ ब्रा
'पतितस्य तु कारुण्याद्यस्तृप्तिं कर्तुमिच्छति । स हि दासीं समाहूय सर्वगां दत्तवेतना
अशुद्धघटहस्तां तां यथावृत्तं ब्रवीत्यपि। हे दासि गच्छ मूल्येन तिलानानय सत्वरम् ॥ 
पूर्णं घटं चेमं सतिलं दक्षिणामुखी।उपविष्टा तु वामेन चरणेन ततः क्षिप ॥ कीर्तयेः पात
संज्ञां त्वं पिबेति मुहुर्वदेः। निशम्य तस्य वाक्यं सा लब्धमूल्या करोति तत्॥ एवं कृते भवे
पतितानां च नान्यथा ।' इति । इदं च मृताहे कार्यम् । पतितस्य दासी मृताह्नि यदा
मपवर्जयेदेतावतायमुपचरितो भवतीति मदनरत्ने विष्णूक्तेः। इदं चात्मत्यागिविष
आत्मत्यागिनः पतितास्ते नाशौचोदकभाजः स्युरित्युपक्रम्य विष्णुना एतस्याभिध
दिति गौडाः। यत्तु कश्चिदाह-'यः पतितो घटस्फोटेन बान्धवैर्बहिष्कृतस्त
याणि क्रियानिषेधवाक्यानि । जीवत्येव तस्मिन्नन्त्यकर्मणः कृतत्वात्तत्पुनः क
भावात् ।' इति। स बन्धुत्यागेन जातवैराग्यस्य कृतप्रायश्चित्तस्याप्यकरणापत्तेर्भि
क्षरादिविरोधमपश्यन् मूर्ख इत्युपेक्षणीयः । न च कृतघटस्फोटस्य संग्रहविधि
वाच्यम्। मनुनाऽकृतघटस्फोटस्य त्यागमुक्त्वा-'प्रायश्चित्ते तु चरिते पूर्णं कुम्भ
नवम् । तेनैव सार्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये ॥' इत्युक्तेः । अन्यथा प्राय
मात्रे एतत्प्रसङ्गात्। अतो घटस्फोटेन वहिष्कृतस्यापि पित्रादेरब्दान्ते नारायणबलि
निषेधास्तु पितृव्यादिपरा इति तत्त्वम् । केचित्तु नारायणबलौ कृतेप्यन्त्यकर्म सपि
नवर्जं कार्यम्। 'गोब्राह्मणहतानां च पतितानां तथैवच । व्युत्क्रमाच्च प्रमीतान
कार्या सपिण्डता ॥' इति वचनात्। 'ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते' इति श्र
प्रकारोक्तेश्चेत्याहुः। ते हेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधान्निर्मूलत्वाच्छ्राद्धप्र
स्य वृद्धिश्राद्धविषयत्वादुपेक्ष्याः ॥

नारायणबलिस्तु हेमाद्र्याद्यनुसारेणोच्यते। तत्रादौ क्रियानिबन्धे ग

नारायणबलिनिर्णयः।

तर्पणमुक्तम् । 'कार्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि । दक्षिणाभि
भूत्वा प्रेतं विष्णुमिति स्मरन् ॥ अनादिनिधनो देवः शङ्खचक्र
धरः । अक्षय्यः पुण्डरीकाक्षः प्रेतमोक्षप्रदोभव ॥' इति शुक्लैकादश्यां देशकालौ 
त्यामुकगोत्रस्यामुकस्य दुर्मरणात्मघातजदोषनाशार्थमौर्ध्वदेहिकसंप्रदानत्वयोग्यत
द्ध्यर्थं नारायणबलिं करिष्ये इतिसंकल्प्य । ब्रह्माणं विष्णुं शिवं यमं प्रेतं च

मयो भवेत् ॥ प्रेतो दर्भमयः कार्यं इति देवप्रकल्पना' इति **गारुडोक्तासु** सर्वासु हैमीषु वा प्रतिमासु षोडशोपचारैः पुरुषसूक्तेनाभ्यर्च्याग्निं प्रतिष्ठाप्य चरुं पुरुषसूक्तेन प्रत्यृच नारायणायेदमिति हुत्वा देवानामग्रे दक्षिणाग्रदर्भेषु विष्णुरूपं प्रेतं स्मरन् नामगोत्राभ्यां मधुघृततिलयुतान् दश पिण्डान् यज्ञोपवीत्येवामुकगोत्रामुकशर्मन् प्रेत विष्णुरूपाय ते पिण्ड उपतिष्ठतामिति दत्त्वा पुरुषसूक्तेनाभिमन्त्र्य तेनैव शंखोदकेनाभिषिच्याभ्यर्च्या मुकशर्माणममुकगोत्रं विष्णुरूपं प्रेतं तर्पयामि' इति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एक मामान्नं ब्रह्मादिपञ्चभ्यो दद्यात् । मन्त्रस्तु–'ब्रह्मविष्णुमहादेवा यमश्चैव सकिंकरः बलिं गृहीत्वा कुर्वन्तु प्रेतस्य च शुभाङ्गतिम् ॥' इति **मिताक्षरायां** तु होमबल्यादि नोक्तम् । ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुगुडघृतानि च निवेद्य पिण्डानभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नव सप्त पञ्च वा विप्रान्निमन्त्र्योपोषितो जागरं कृत्वा श्वोभूते पुन र्विष्णुं यमं संपूज्यैकोद्दिष्टविधिना श्राद्धपञ्चकं करिष्य इत्युक्त्वा विष्णुब्रह्मशिवयम प्रेतान् स्मरन् विप्रानुपवेश्य प्रेतस्थाने चैकं विष्णुं स्मरन् पाद्यावाहनार्घ्ययुतं तृप्तिप्रश्न न्तं कृत्वोल्लेखनादि कृत्वान्नशेषेण विष्णवे ब्रह्मणे शिवाय यमाय सपरिवाराय चतु पिण्डान् दत्त्वा प्रेतनामगोत्रे स्मृत्वा विष्णुनाम्ना पञ्चमं दत्त्वाभ्यर्च्याचान्तेभ्य दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः संतोष्य विप्रैः प्रेतायेदं तिलोदकमुपतिष्ठ तामिति सतिलमुदकं दापयित्वा भुञ्जीतेति । अत्र विशेषान्तरं **भट्टकृतान्त्येष्टिप द्धतौ** ज्ञेयम् ॥

सर्पहते तु वर्षपर्यन्तं पूर्वेद्युरेकभक्तपूर्वं शुक्लपञ्चम्यामुपवासं नक्तं वा कृत्वा पिष्टम नागमनन्तवासुकिशंखपद्मकम्बलकर्कोटकाश्वतरधृतराष्ट्रशंखपालकालियतक्षककपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान् संभोज्य वत्सरान्ते हैमं नागं गां च दत्त्व नारायणबलिं कुर्यात् । एतन्मूलं तु **हेमाद्रौ** ज्ञेयम् । **बौधायनसूत्रे**–'सर्पमृतान नमोस्तु सर्पेभ्यः' इति तिस्र आहुतीर्हुत्वा, 'उदके मृतानां समुद्राय वयुनाय हुत्वेति क्रियां कुर्यादिति शेषः । **व्यासः**–'सौवर्णभारनिष्पन्नं नागं कृत्व तथैव गाम् । व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥' **हेमाद्रौ भवि ष्ये**–'पञ्चम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत् । क्षीराज्यपात्रमध्यस्थ पूज्य विप्राय दापयेत् ॥ प्रायश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुना ।' इति । **अपरार्के स्मृत्यन्तरेपि**–'तदैव शुद्ध्यति प्रेतो नारायणबलौ कृते । यो ददाति क्रियापिण्ड तस्मै प्रेताय वै सुतः ॥ तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः । विष्णुश्राद्धसमाप्तौ

अथ विधानादाशौचाभावः । यथा—यतिशुद्धमृतादिषु 'त्रयाण
च कुर्याद्दाहादिकाः क्रियाः । यतेः किंचिन्न कर्तव्यं नचाश

विधानादाशौचाभावः ।

सः ॥' इति ब्राह्मात् । उशनाः—'एकोद्दिष्टं न कु
चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ सपिण्डीकरणं तेषां
सुतादिभिः । त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥ अथ तत्संस्कारं वक्ष्याम
त्रेयः—'एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् । न कुर्याद्वार्षिकादन्य
भिक्षवे ॥' वार्षिकादिति पूर्वभाविमासिकादिनिषेधो नतु । दर्शादेः ।
नोप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।' इति वायवीयोक्तेः

भिक्षुप्रेतसंस्कारः ।

चन्द्रोदये प्रजापतिः—'अहन्येकादशे प्राप्ते पार्वणं तु
सपिण्डीकरणं तस्य न कर्तव्यं सुतादिभिः ॥' एषु सपिण्डनादिनिषेधानुवा
क्तेस्तत्स्थानापन्नत्वं पार्वणस्य गम्यते । 'न गिरागिरेति ब्रूयादैरंकृत्वोद्वेयम्'
इदं वार्षिकादिविधानं च त्रिदण्डिनामेव एकदंडिपरमहंसादीनां तु न किमपि
पूर्वोक्तोशनोवाक्ये त्रिदण्डिग्रहणादिति शूलपाण्यादयो गौडाः ।
ब्देन मनोदण्डादिदण्डत्रयोक्तेः । 'यस्यैते नियता दण्डाः स त्रिदण्डीति
इति स्मृतेः ॥

बौधायनः—'नारायणबलिश्चास्य कर्तव्यो द्वादशेहनि ॥' अस्य पार्वणे
ज्ञेयः । तं च स एवाह—'कृत्वा विष्णोर्महापूजां पायसं विनिवेदयेत् । अग्नौ
तच्छेषं व्याहृतीभिः समाहितः ॥ यतीन् गृहस्थान्साधून्वा निमन्त्र्य द्वाद
अभ्यर्च्य गन्धपुष्पाद्यैर्मन्त्रैर्द्वादशनामभिः॥ संभोज्य हव्येनान्येन दक्षिणां च
त्रयोदशं द्विजश्रेष्ठमात्मज्ञं संयतेन्द्रियम् ॥ विष्णुं यथातथाभ्यर्च्य पाद्याद्यैश्च
दद्यात् पुरुषसूक्तेन गन्धपुष्पादिकं क्रमात् ॥ वस्त्रालंकरणादीनि यथाशक्ति
उच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य भूतले ॥ भूर्भुवःस्वःस्वधायुक्तैस्तस्मै
त्रयम् । अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ तत्फलं लभते देव य
यतिक्रियाम् ॥'

शौनकस्तु—'शौनकोहं प्रवक्ष्यामि नारायणबलिं परम् । चण्डालादुदका
णाद्विद्युतादपि ॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः । देशान्तरमृतानां
वान्यसाधनैः ॥ जीवच्छ्राद्धमृतानां च कनिष्ठानां तथैव च । यतीनां योगि
मन्येषां मोक्षकांक्षिणाम् ॥ पुण्यायाक्षयार्थाय द्वादशेहनि कारयेत् ॥ द्वाद
[illegible]

विप्रान् संभोज्य तैरेव द्वादशपिण्डान्दद्यादित्यधिकमाह । युद्धमृते तु प्रागुक्तम् ।
वच्छ्राद्धे मृते सपिण्डैराशौचादि कार्यं न वा । तदुक्तं हेमाद्रौ लैङ्गे–'मृते
कुर्याद्वा जीवन्मुक्तो यतः स्वयम् । कालं गते द्विजे भूमौ खनेद्वापि दहेत वा ॥ पु
मशेषं च कृत्वा दोषो न विद्यते ॥' जीवत्यपि विशेषस्तत्रैवोक्तः । 'नित्यं नै
यत्तु कुर्याद्वा संत्यजेत वा । बान्धवोपि मृते तस्य नैवाशौचं विधीयते ॥ सूतकं च
स्नानमात्रेण शुद्ध्यति ॥' एतद्योगिविषयम् । 'योगमार्गरतोपि च' इति तस्या
तथाऽऽहिताग्नौ प्रोषितमृते तदस्थिदाहात्पूर्वं पित्रादीनामाशौचं सन्ध्यादि
पश्च नास्ति । 'अनाग्निमत उत्क्रान्तेराशौचादि द्विजातिषु । दाहादग्निमतो विद्या
मृते सति ॥' इति स्मृतेः । आहिताग्नेर्दाहात्प्रागपि दशाहः । संस्काराङ्गं च भिन्न
इति धूर्तस्वामी रामाण्डारश्च । तच्चिन्त्यम् । मूलैक्याद्वचोविरोधाच्च । एतत
म् । अत्र देहस्यैव संभवे दाहः । 'आहिताग्नौ विदेशस्थे मृते सति कलेवरम्
नाग्निभिर्यावत्तदीयैरपिदह्यते ॥' इति ब्राह्मोक्तेः ॥

तदभावे छन्दोगपरिशिष्टे–'विदेशमरणेस्थीनि आहृत्याभ्यज्य सर्पिषा ।
हिंषाच्छाद्य पात्रन्यासादि पूर्ववत्॥ अस्थ्नामलाभे पर्णानि शकलान्युक्तयावृता
दस्थिसंख्यानि ततः प्रभृति सूतकम्' ॥ हेमाद्रौ षट्त्रिंशन्मते–'कुर्याद
दर्भैस्त्रिशतषष्टिभिः । पालाशीभिः समिद्भिर्वा संख्या चैवं प्रकीर्तिता ॥' भवि
त्वारिंशच्छिरस्थाने ग्रीवायां च दशैव तु । बाह्वोश्चैव शतं दद्याद्विंशतिं च त
उदरे विंशतिंदद्यात्त्रिंशतं कटिदेशयोः । ऊर्वोश्चैव शतं दद्यात् त्रिंशतं जानुजंघयो
दांगुलीषु दश वै एषा च प्रेतकल्पना ॥' मदनरत्ने यज्ञपार्श्वः–'शिरस्यशीत्य
ग्रीवायां तु दशैव तु । बाह्वोश्चैकशतं दद्याद्दश चैवांगुलीषु च ॥ उरसि त्रिंशतं द
जठरोदरे । द्वादशार्द्धं वृषणयोरष्टार्धं शिश्न एव तु ॥ ऊर्वोश्चैकशतं दद्यात्त्रिंशतं
द्वयोः । पादांगुलीषु द्वे दद्यादेतत्प्रेतस्य कल्पनम् ॥ मस्तके नारिकेरं तु अला
तथा ॥ पञ्चरत्नं मुखे न्यस्य जिह्वायां कदलीफलम् ॥ चक्षुषोस्तु कपर्दौ द्वौ न
तु कालकम् । कर्णयोर्ब्रह्मपत्राणि केशे वटप्ररोहकाः ॥ नालकं कमलानां तु अ
विनिक्षिपेत् । मृत्तिका तु वसा धातुर्हरितालकगन्धकौ ॥ शुक्रे तु पारदं दद्यात्पु
लं तथा । संधीषु तिलपिष्टं तु मांसं स्याद्यवपिष्टकम् ॥ मधु स्याल्लोहितस्थाने त्व
मृगत्वचा । स्तनयोर्जम्बीरे देये नासायां शतपत्रकम् ॥ कमलं नाभिदेशे स्
वृषणाश्रिते । लिङ्गे च रक्तमूलं तु परिधानं दुकूलकम् ॥ गोमूत्रं गोमयं गन्धं स

न वार्ता नैव चागमः । ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ॥ कु
संस्कारं यथोक्तविधिना ततः । तदादीन्येव सर्वाणि प्रेतकर्माणि कारयेत् ॥'
प्रतीक्षा पितृभिन्नविषयेति **मदनरत्ने** उक्तम् । **गृह्यकारिकायां** तु-'तस्य
विंशत्यब्दोर्ध्वतः क्रिया । ऊर्ध्वं पञ्चदशाब्दात्तु मध्यमे वयसि स्मृता ॥ द्वाद
र्ध्वमुत्तरे वयसि स्मृता । चान्द्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतैः ॥
कृतिं दग्ध्वा कार्याः शौचादिकाः क्रियाः ।' इत्युक्तम् । **पराशरः**-'
नष्टस्तिथिर्न ज्ञायते यदि । कृष्णाष्टमी ह्यमावास्या कृष्णा चैकादशी च य
पिण्डदानं च तत्र श्राद्धं च कारयेत् ।' इदं मासज्ञाने ॥

तत्राहिताग्नेः पूर्णाशौचम् । अनाहिताग्नेस्तु त्रिरात्रम् । 'अनाहिताग्नेर्देहस्तु त
ग्निना स्वयम् । तदभावे पलाशानां वृन्तैः कार्यः पुमानपि ॥ वेष्टितव्यस्त
कृष्णसारस्य चर्मणा । ऊर्णासूत्रेण बद्धा तु प्रलेप्तव्यो यवैस्तथा ॥ सुपिष्टैर्ज
ग्धव्यश्च तथाग्निना । असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥
दग्ध्वा त्रिरात्रमशुचिर्भवेत् ।' इति **ब्राह्मोक्तेः** । इदं त्रिरात्रं न दशाहमध्ये
'प्रोषिते कालशेषः स्यात्' इत्युक्तेः । किंतु तदूर्ध्वम् । तत्र पत्नीपुत्रयोः पूर्वमग[1]
योर्दशाहाद्येव । गृहीताशौचयोस्तु त्रिरात्रम् । पत्नीमृतौ भर्तुश्चैवं सपत्न्योश्चैव
त्यर्थसारे । अन्यसापिण्डानां तु सर्वत्र पर्णशरदाहे त्रिरात्रम् । तदाहाङ्गिराः
ग्मृतं श्रुत्वा नाशौचं चेत्कथंचन ॥' गृहीतमितिशेषः । कालात्ययेपि कुर्वीत
दिनत्रयम् ।' इति । **स्मृत्यर्थसारे** तु-'गृहीताशौचानां स्नानमा
**बह्वृचपरिशिष्टेपि-अथातीतसंस्कारः** । स चेदन्तर्दशाहं स्या
समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यादन्येषु पत्नीपुत्रयोः पूर्वमगृही
सर्वमाशौचम् । गृहीताशौचयोः कर्माङ्गमिति त्रिरात्रम् । **षडशीताव**
**विश्वादर्शे** तु-'प्रतिकृतिदहने त्वग्निदे स्यात्त्रिरात्रम्' इत्युक्तम् । द्वादशवर्षा[3]
दाहे तु पुत्रादीनां सर्वेषां त्रिरात्रमिति **कल्पतरुदिवोदासादयः** ॥

**अथ प्रेतसंस्कारे कालः** । **हेमाद्रौ गार्ग्यः**-'प्रत्यक्षशवसंस्कारे
विशोधयेत् । आशौचमध्ये संस्कारे दिनं शोध्यं तु संभवे ।
विनिवृत्तौ चेत्पुनः संस्क्रियते मृतः । संशोध्यैव दिनं ग्राह्य

प्रेतसंस्कारे कालः ।

१-द्वादशवर्षादिप्रतीक्षास्थले तत्पूर्वं मरणसंदेहादन्यत्र मरणाज्ञानाद्वाशौचस्याग्रहः ।
निश्चयेनेत्यादि । ३-...

त्सराद्यादि ॥ प्रेतकार्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम् । कृष्णपक्षश्च तत्रापि वर्जयेत्तु दिनक्षयम् ॥' वाराहे—'चतुर्थाष्टमगे चन्द्रे द्वादशे च विवर्जयेत् । प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा ॥ करणे विष्टिसंज्ञे च शनैश्चरदिने तथा । त्रयोदश्यां विशेषेण जन्मतारात्रये तथा ॥' जन्मदशमैकोनविंशानि जन्मताराः । भारते—'नक्षत्रे तु न कुर्वीत यस्मिञ्जातो भवेन्नरः । न प्रौष्ठपदयोः कार्यं तथाग्नेये च भारत ॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत् ॥' काश्यपः—'भरण्यार्द्रामघाश्लेषामूलद्विचरणानि च । प्रेतकृत्येतिदुष्टानि धनिष्ठाद्यं च पञ्चकम् ॥ फाल्गुनीद्वितयं रोहिण्यनूराधापुनर्वसू । आषाढे द्वे विशाखा च भानि द्विचरणानि च ॥' ज्योतिर्नारदः—'चतुर्दशीतिथिं नन्दां भद्रां शुक्रारवासरौ । सितेज्ययोरस्तमयं द्व्यङ्घ्रिभं विषमाऽङ्घ्रिभम् । शुक्लपक्षं च संत्यज्य पुनर्दहनमुत्तमम् । वसूत्तरार्धतः पञ्चनक्षत्रेषु त्रिजन्मसु ॥ पौष्णब्रह्मर्क्षयोश्चैव दहनात्कुलनाशनम् ॥' अस्यापवादमाह तत्रैव बैजवापः—'प्रेतस्य साक्षाद्दग्धस्य प्राप्ते त्वेकादशेहनि । नक्षत्रतिथिवारादि शोधनीयं न किंचन ॥ युगमन्वादिसंक्रातिदर्शे प्रेतक्रियां यदि । दैवादापतिता तत्र नक्षत्रादि न शोधयेत् ॥' विश्वप्रकाशेपि—'गुरुभार्गवयोर्मौढ्ये पौषमासे मलिम्लुचे । नातीतः पितृमेधः स्याद्गयां गोदावरीं विना ।' दानमपि तत्रैवोक्तम्—'भद्रायां भूमिदानं स्यात्त्रिपादर्क्षे हिरण्यदः । वारेषु तत्तद्वर्णं तु वासोदानं विधीयते ॥ धनिष्ठापञ्चकमृते पञ्चरत्नानि दापयेत् । एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् ॥ नवषट्त्रिपलं वापि दद्याद्विप्राय शक्तितः ॥' इत्यलं प्रसङ्गेन ॥

हेमाद्रौ वृद्धमनुः—'अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदैहिकम् । प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥ जीवन्यदि समागच्छेद् घृतकुम्भे निमज्य तम् । उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥ द्वादशाहं व्रतं चर्या त्रिरात्रमथवास्य तु स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥ अग्नीनाधाय विधिवद् व्रात्यस्तोमेन वा यजेत् । अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु । इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ॥' अनाहिताग्नेस्तु चरुः । मृतवार्ताश्रवणे त्वाश्वलायनः—'सुरभय एव यस्मिन् जीवे मृतशब्दः' इति । यस्य तु जीवत एव मृतिवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तदा तद्वैधमेव । भर्तुर्मरणज्ञानस्यैव निमित्तत्वात् । प्रमादस्य गौरवेणायुक्तत्वाच्चेति केचित् । तन्न । मरणज्ञानस्य निमित्तत्वेतीतानागतयोरपि तत्रापत्तेः । भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च । तस्मादाशौचवज्ज्ञातमरण

तथा सर्पसंस्कारे कृते त्रिरात्रमाशौचम् । तद्विधिं चाह **शौनकः**—'अथ वक्ष्यामि संस्कारविधिमुत्तमम् । सिनीवाल्यां पौर्णमास्यां पञ्चम्यां वापि का कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि । वधं प्रख्यापयेत्पापी चरेत श्चतुर्दश ॥ विप्राय लोहदण्डं च तन्मूल्यं वापि दापयेत् ॥ **मूल्यमाह**—'निष्कत्रयं वानिष्कमेकं कनीयसम् । अनुमत्यादिकर्तॄणां निष्कमर्धं तदर्धकम् ॥' इदं स्वर्ण शक्त्या ज्ञेयम् । **संस्कारमाह**—'प्रियंगुव्रीहिगोधूमतिलपिष्टेन वा पुनः । कृत्वा स शूर्पे निधाय प्रार्थयेदहिम् । एहि पूर्वमृतः सर्प अस्मिन्पिष्टे समाविश । संस्कारार्थमहं प्रार्थयामि समाहितः ॥ वस्त्रोपवीतगन्धाद्यैः संपूज्य च हरेद्वहिः । कुर्यात्संस्कार प्राणायामपुरःसरम् ॥ यज्ञोपवीतिना कार्यं सर्पसंस्कारकर्म तु । लौकिकाग्निं प्र समिदाधानमाचरेत् ॥ ततोग्नेरग्निदिग्भागे भूमिं संप्रोक्ष्य वारिभिः । चितिं संस्तीर्य कुशैराग्नेयकाग्रकैः ॥ पर्युक्ष्याग्निं परिस्तीर्य परिषिच्य समर्चयेत् । कृ धानमाघारौ चक्षुषी च यथाविधि ॥ सर्पं गृहीत्वा यत्नेन चितिमारोपयेत्सुधीः । जुहुयादाज्यमग्नौ व्याहृतिभिस्त्रिभिः ॥ सर्पास्ये जुहुयादाज्यं व्याहृत्या च सम आज्यशेषं स्रुवेणैव सर्पदेहे निषेचयेत् ॥ चमसस्थैर्जलैः सर्पं व्याहृत्याभ्युक्ष्य पा अग्ने रक्षाण इत्यनया सर्पायाग्निं प्रदापयेत् ॥ उपतिष्ठेद्दह्यमानं नमोस्तु सर्पमन्त ज्ञानतोज्ञानतो वापि कृतः सर्पवधो मया । पूर्वजन्मनि वा सर्प तत्सर्वं क्षन्तुमर्हसि ॥ ज्येन ततश्चाग्निं प्रोक्ष्य व्याहृतिभिर्जलैः । नास्थिसंचयनं कुर्यात् स्नात्वाचम्य गृहं ब्रह्मचर्यादिकं कार्यं त्रिरात्राशौचमिष्यते । सचैलं तु चतुर्थेह्नि स्नात्वा विप्रान् सम सर्पोनन्तस्तथा शेषः कपिलो नाग एव च । कालिकः शंखपालश्च भूधरश्चेति नाम गन्धपुष्पाक्षतैर्धूपदीपाद्यैरर्चयेद् द्विजान् । घृतपायसभक्ष्यैश्च द्विजानष्टौ तु भोज एवं कृते विधानेन सर्पसंस्कारकर्मणि ॥ सर्पहिंसाकृतात्पापान्मुच्यते नात्र संशय इति **सर्पसंस्कारः** ॥

सर्पसंस्कारविधिः ।

क्वचित्तु जीवतोप्यन्त्यकर्माशौचं च कार्यम् । **यथा**—प्रायश्चित्तानिच्छोः प घटस्फोटः—'पतितस्योदकं कार्यं सपिण्डैर्बान्धवैः सह । निन्दितेहनि सायाह्ने ज्ञा ग्गुरुसंनिधौ ॥ दासी घटमपां पूर्णं पर्यस्येत्प्रेतवत्तदा । अहोरात्रमुपासीरन्न बान्धवैः सह ॥ " इति **मनूक्तेः** । निन्दिते रिक्तादौ अप **वसिष्ठोपि**—'वेदविप्लावकशूद्रयाजकोत्तमवर्णवर्गपतितास्तेषां प नयनमपात्रसंस्कारादकृतस्नं पात्रमादाय दासोऽसवर्णपुत्रो वा बन्धुरसदृशो वा गुण सव्येन पादेन प्रवृत्ताग्रान् दर्भान् लोहितान् वोपस्तीर्याप: पूर्णपात्रमस्मै निनयेद्

धर्मयेयुस्तद्धर्माणस्तं धर्मयन्तः ' इति। उत्तमवर्णा ब्राह्मणादयः तेषां वर्गः समूहस्त
स्मात्पातिता ब्रह्महादयः। अपात्रसंस्कारः कुत्सितपात्रसमूहः । प्रवृत्ताग्राः छिन्नाग्राः
स्वैरं यथेच्छं धर्मादिकार्यं कुर्युः। अस्माद्वचनसामर्थ्यात्पात्रनिनयनात्प्राक् पतितज्ञातीन
धर्मकार्येष्वधिकारो नास्तीत्यपरार्कः । 'तस्य विद्यागुरुयोनिसम्बन्धांश्च सन्निपा
सर्वाण्युदकादिप्रेतकार्याणि कुर्युः । पात्रं चास्य विपर्यस्येयुः दासः कर्मकरोवाऽ
करादमेध्यं पात्रमानीय दासीघटात् पूरयित्वा दक्षिणामुखः पदा विपर्यस्येदमुद
करोमीति नामग्राहं सर्वेन्वालभेरन् प्राचीनावीतिनो मुक्तशिखा अप उपस्पृश्य ग्रा
प्रविशेयुः'। इति गौतमोक्तेश्च । उदकादीत्युक्तेर्दाहनिवृत्तिः । प्रेतकार्याण्येकादश
श्राद्धान्तानि। दास्याहृतोऽम्बुघटो दासीघटः । तेनोदकेनामेध्यपात्रं पूरयित्वा दासी
न्युब्जं वामपादेन कुर्यादिति हरदत्तः । अत्र नामग्राहवचनमुदकादिप्रेतकार्ये तद्वर्ज
त्वार्थम् । तेन तत्तूष्णीं भवति । एतच्च प्रायश्चित्तानिच्छोः । 'तस्य गुरोर्बान्धवा
राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनःपुनराचारं लभस्वेति सपद्येवमप्यन
स्थितमतिः स्यात्ततोऽस्य पात्रं विपर्यस्येत्' इति शंखोक्तेः जीवन्तमेवोद्दिश्य पिण्डोद
श्राद्धानि नाम्ना दद्यादित्यपरार्कः ॥

कृतप्रायश्चित्तस्य घटस्फोटे कृतेऽपि संग्रहविधिमाह गौतमः—'यस्तु प्राय
त्तेन शुद्धेच्चत्तस्मिञ्छुद्धे शातकुम्भमयं पात्रं पुण्यह्रदात्पूरयित्वा स्रवन्तीभ्यो वा तत एनस्
स्पर्शयेयुरथास्मै तत्पात्रं दद्युस्तत्स प्रतिगृह्य जपेच्छान्ताद्यौः शा
पृथिवी शान्तं विश्वमन्तरिक्षं यो रोचनस्तामिह गृह्णामीत्येतैर्यजुर्भिः प

पुनःसंग्रहविधिः।

मानीभिस्तरत्समन्दीभिः कूष्माण्डैश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां चाचार्याय । य
तु प्राणान्तिकं प्रायश्चित्तं स मृतः शुद्ध्येत्सर्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कु
रेतदेव शान्त्युदकं सर्वेषूपपातकेषु' इति। घटस्फोटोत्तरं प्राणान्तिकप्रायश्चित्ते कृते
मृत एव शुद्ध्येन्न तत्र संग्रहविधिः । अतस्तेन विनापि प्रेतकर्म कुर्यादित्यर्थ
उपपातकेष्वपि घटस्फोटे कृत एवं कार्यमित्यर्थः। याज्ञवल्क्यः—'चरितव्रत आ
निनयेरन्नवं घटम्। जुगुप्सेरन्नचाप्येनं संवसेयुश्च सर्वशः॥' कृतघटस्फोटस्यैवायं
ग्रहविधिरिति मिताक्षरायामपरार्के च । अन्यथा प्रायश्चित्तमात्रे एतत्प्रसङ्ग
मनुरपि घटस्फोटमुक्त्वा—'निवर्त्तेरंस्ततस्तस्मात्संभाषणसहासनैः ।' इत्युक्त्वा—'प्र
श्चित्ते तु चरिते पूर्णकुम्भमपां नवम्। तेनैव सार्द्धं प्राश्नीयुः स्नात्वा पुण्ये जलाशये
इति तच्छब्दं प्रायुङ्क्त । अपरार्के वसिष्ठोपि—'पतितानां चरितव्रतानां प्रत्युद्धा

परिग्रहः । तत्रोद्धरतां हसन्निवाग्रेसरः स्यात् पातयतां घटस्फोटं कुर्वतां शो पश्चाद्गच्छेत् । मातापित्रादिहन्तॄणां परिग्रहो न कार्यः । तत्प्रसादे सति चीर्णव कार्यः । प्रवृत्तं निर्झरः । पुत्रजन्मनेत्यभिषेकोत्तरं जातकर्मादयः संस्काराः पुत्रज स्कार्या इत्यपरार्कौ व्याचख्यौ । अत एव **विज्ञानेश्वरः**–'घटेपवर्जिते ज्ञातिमध यवसं गवाम् । प्रदद्यात्प्रथमं गोभिः सत्कृतस्य हि सत्क्रिया' ॥ इत्यत्र गवां भ भावे पुनर्व्रतं चरेदित्येतत्प्रकृते । एवं चरितव्रतविधौ विशेषोयमिति वदन् घटस्फो परिग्रह एवैतन्न सर्वत्रेत्याह । तस्मात्कृतेपि घटस्फोटे प्रायश्चित्तं परिग्रहविधिः पुनः सं भवन्तीति सिद्धम् । तथा जीवच्छ्राद्धे कृते **हेमाद्रौ बौधायनः**—'तत्राशौचं स्यात्स्वस्य ज्ञातेर्न विद्यते ।' इत्यलं प्रसङ्गेन ॥

एवं सापवादे आशौचे उक्ते प्रतिशाखं भिन्नेप्यन्त्यकर्माणि साधारणं किञ्चिदु

अन्त्यकर्मसाधारणविधिः । तत्राधिकारिणः श्राद्धप्रकरणे प्रागुक्ताः । सर्वाभावे धर्मपुत्रो वा क 'अपुत्रेण सुतः कार्यो यादृक्तादृक्प्रयत्नतः । पिण्डोदकक्रियाहे मसंकीर्तनाय च ॥' इति **व्यासवचनात्** । **गृह्यपरिशिष्टे**–'असगोत्रः सगो यदि स्त्री यदि वा पुमान् । प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत् ॥' दद्य ण्डमिति शेषः । **भविष्ये**–'यत्राद्यो दीयते पिण्डस्तत्र सर्वं समापयेत् ॥' **ब्राह्म** 'प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः । अन्नं नवसु चान्येषु स एव प्रददात्या **विज्ञानेश्वरादयस्तु**–'केचित्तु अग्निं दद्यात्' इति व्याचक्षते । 'सगोत्रो वाऽस वा योग्निं दद्यात्सखे नरः । सोपि कुर्यान्नवश्राद्धं शुद्धचेत्तु दशमेऽहनि ॥' इति दासीये वचनाच्च ॥

**तत्रैव**–'दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनम् । भूमिष्ठं पितरं पुत्रो यदि प्रदापयेत् । तद्विशिष्टं गयाश्राद्धादश्वमेधशतादपि ॥' **तानि यथा**–'मोक्षं देहि केश मोक्षं देहि जनार्दन । मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥' इति मो मन्त्रः । 'ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं ऋणम् । तत्सर्वं शुद्धिमायातु ग ददतो मम ॥' इति ऋणधेनोः । 'आजन्मोपार्जितं पापं मनोवाक्कायकर्मभिः । नाशमायातु गोप्रदानेन केशव ॥' इति पापधेनोः । **भारते**–'शुक्लपक्षे दिवा गङ्गायां चोत्तरायणे । धन्यास्तात मरिष्यन्ति हृदयस्थे जनार्दने ॥' **हेमाद्रौ** बा 'व्यतीपातोथ संक्रान्तिस्तथैव ग्रहणं रवेः । पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थि **व्यासः**–'आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत् । तदभावे तु गौरेव नर रणाय वै ॥ तदा यदि न शक्नोति ...

**मदनरत्ने जातूकर्ण्यः**—'उत्क्रान्त्यादीनि दानानि दश दद्यान्मृतस्य तु । गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ॥ रौप्यं लवणमित्याहुर्दश दानान्यनुक्रमात् । एतानि दश दानानि नराणां मृत्युजन्मनोः ॥ कुर्यादभ्युदयार्थं तु प्रेतेपि हि परत्र वै ॥' **ब्राह्मे**—'ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु । सहिरण्यं च यो दद्याच्छ्रद्धावित्तानुसारतः ॥ सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम् । उत्क्रान्तिवैतरिण्यौ च दशदानानि चैव हि ॥ प्रेतेपि कृत्वा तं प्रेतं शवधर्मेण दाहयेत् ॥' तत्रैव **परिशिष्टे**—'म्रियमाणस्य कर्णे तु पुण्यमन्त्रान् जपेत्ततः ॥' **क्रियानिबन्धे गारुडे** त्वष्टौ दानान्युक्तानि । 'तुलसीसंनिधौ कृत्वा शालग्रामशिलां तथा । तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ।' इति । दशदानवैतरिणीधेनूत्क्रान्तधेनुदानादि **भट्टकृतान्त्येष्टिपद्धतौ** ज्ञेयम् । कर्ताऽन्त्यकर्माधिकारार्थं त्रीन् कृच्छ्रान् कुर्यादिति तत्रैवोक्तम् । अत्र **देवयाज्ञिकेन** मुमूर्षोर्मधुपर्कदानमुक्तम् । तदुक्तं **वाराहे**—'दृष्ट्वा सुविह्वलं ह्येनं यममार्गानुसारिणम् । प्रयाणकाले तु नरो मंत्रेण विधिपूर्वकम् ॥ मधुपर्कं त्वरन् गृह्य इमं मन्त्रमुदाहरेत् ॥' ॐगृहाण चेमं मधुपर्कमाद्यं संसारनाशनकरं ह्यमृतेन तुल्यम् । नारायणेन रचितं भगवत्प्रियाणां दाहे च शान्तिकरणं सुरलोकपूज्यम् ॥ अनेनैव तु मन्त्रेण दद्याच्च मधुपर्ककम् । नरस्य मृत्युकाले तु परलोकसुखावहम् ॥'

दुर्मरणे ।

**अथ दुर्मरणे दिवोदासीये**—'चण्डालादिमृते विप्रे त्वन्तरिक्षमृतेपि वा । कृच्छ्रातिकृच्छ्रचान्द्रैस्तु शुद्धिस्तत्र प्रकीर्तिता ॥' **देवजानीये जाबालिः**—'शूद्रेण दग्धो यो विप्रो न लभेच्छाश्वतीं गतिम् । प्रायश्चित्तं प्रकुर्वीत ब्राह्मणः पापशुद्धये ॥ चान्द्रायणं पराकं च प्राजापत्यं विशोधनम् ।' **गृह्यकारिकायाम्**—'उदक्या सूतिका वापि यदि प्रेतं स्पृशन्ति हि । तस्यैष विधिरादिष्टो वात्स्येनैव महात्मना ॥' एष सूतिकोक्तः । **मदनरत्ने स्मृत्यन्तरे**—'ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टे तथैव च । अस्पृश्यस्पर्शने चैव खट्वादिमरणेपि च ॥ श्वानक्रव्यादसंस्पर्शे क्रिमिकीटोद्भवेति च । एतद्दोषानुसारेण प्रायश्चित्तं समाचरेत् । कृच्छ्रांस्त्रिपञ्चदशांश्चान्द्रत्रयमथापि वा ॥ शुद्ध्यै तदानीं सम्पाद्य शवधर्मेण दाहयेत् ॥ **गृह्यकारिकायाम्**—'खट्वायां मरणे चैव त्रींस्त्रीन्कृच्छ्रान् प्रकल्पयेत् । सप्तान्त्यजैस्तु संस्पृष्टो मृतो दैवात्कथंचन ॥ एकत्रिंशतकृच्छ्रैस्तु शुद्धिरुक्ता मनीषिभिः । कुणपे त्वर्धदग्धे

तत्रैव प्रदीपे-'रात्रौ वा रात्रिशेषे वा म्रियन्ते चेत् द्विजातयः । दाहं
यथान्यायं द्वौ पिण्डौ निर्वपेत्सुतः॥' रजस्वलागर्भिण्यादिमृतौ तु वक्ष्यामः । निर्णय
पारिजाते यमः-सन्ध्यायां वा तथा रात्रौ दाहः पाथेयकर्म च । नवश्राद्धं च नो
त्कृतं निष्फलतां व्रजेत् ॥' एतद्दिनमृतस्य रात्रिनिषेधार्थम् । यत्तु स्कान्दे-
रात्रौ दहेत्तस्य समाप्तिर्दहनस्य तु । परेऽहन्युदिते सूर्ये कार्या तस्योदकक्रिय
दग्धस्य तु न वै कार्या रात्रौ जातूदकक्रिया' इति तन्निर्मूलम् ॥ रात्रिमृतस्य तु
संग्रहे-'रात्रौ दग्ध्वा तु पिण्डान्तं कृत्वा वपनवर्जितम् । वपनं नेष्यते रात्रौ श्व
वपनक्रिया ॥' इति । वपनं तु प्रातः । तच्च सर्वैः पुत्रैः कार्यम् । गङ्गायां भा
क्षेत्रे मातापित्रोर्गुरोर्मृतौ । आधाने सोमयागे च वपनं सप्तसु स्मृतम् ॥'
मिताक्षरायां स्मृतेः । मरणस्याऽनङ्गित्वान्नैमित्तिकमिदम् । तदेव संग्रहव
परेद्युरुत्कृष्यते तीर्थवत् । तेन कस्यचिद्दाहाङ्गत्वोक्तिश्चिन्त्या । मदनरत्ने गाल
'प्रथमेऽहनि कर्त्तव्यं वपनं चानुभाविनाम् । प्रेतस्य केशश्मश्र्वादि वापयित्वाऽथ दाहये
आशौचान्ते तु पुनः कार्यं विधिबलात् । मदनपारिजातेऽप्येवम् । तेन सर्वस्य
निर्मूलत्वोक्तिरज्ञोक्तिरेव । स्मृतिरत्नावल्याम्-'शवं राज्युषितं चेत्त्रीन् कृच
कृत्वा दहेत्सुतः । मदनरत्नेऽङ्गिराः-'ऊर्ध्वोच्छिष्टाधरोच्छिष्टे ह्यन्तरिक्षमृतेपि
कृच्छ्रत्रयं प्रकुर्वीत आशौचे मरणेपि च ॥'

अथ साग्नेर्विशेषः । कारिकायाम्-'कृष्णपक्षे प्रमीयेत यद्याहि प्रातराहु
शेषास्तु जुहुयाद्दर्शपर्यन्ताः पक्षहोमवत् ॥' प्रतिपत्प्रातर्होमान्ता इत्यर्थः । 'यद्याहित
रपरपक्षे म्रियेताहुतिभिरेनं पूर्वपक्षे हरेयुः' इत्याश्वलायनोक्ते

साग्नेर्विशेषः ।

'तदानीमेव जुहुयात् सायंकालाहुतीरपि । सायं म्रियेत चेत्सायमा
जुहुयादथ ॥ तदानीमेव जुहुयात् प्रातःकालाहुतीरपि । सकृद्गृहीतमन्त्रेष्टं भिन्नतन्
होमयोः॥ दार्शं चापि प्रकुर्वीत स्थालीपाकं तदैव तु ।' छन्दोगपरिशिष्टे-'हुतायां
माहुत्यां दुर्बलश्चेद्गृही भवेत् । प्रातर्होमस्तदैव स्यात् जीवेच्च स पुनर्नवा ॥' इदं शुक्लपक्षप
दुर्बलो मुमूर्षुः । त्रिकाण्डमण्डनः-'दर्शेष्टिं च तदा कुर्यादिष्टिर्यदि न संभवेत् ।
तानां प्रधानानामेकैकस्य हुनेत्पृथक् ॥ पुरोनुवाक्यायाज्याभ्यां चतुरात्तघृताहुती
तथा-'अग्रावरण्योरारूढे प्रमीयेत पतिर्यदि । प्रेतं स्पृष्ट्वा मथित्वाग्निं जप्त्वा चोपाव

---

१-'क्रियां च कुरुते यस्तु तद्दिने तस्य मुण्डनम् । लघीयसां दशाहे तु पुत्राणां वपनं भवे

णम् ॥ घृतं च द्वादशोपात्तं तूष्णीं हुत्वा शवक्रिया ॥' विच्छिन्नश्रौताग्नेर्मृतौ तु प्रेताधाने तत्रैवोक्तम् । 'प्रेतं स्वाग्न्यालये क्षिप्त्वा मथित्वाग्न्यानलेरणी । सन्निधायारणीं मन्थेत् यस्येति यजुषा ततः ॥ यस्याग्नयो जुह्वतो मांसकामाः संकल्पयन्ते यजमानमांसम् । जायन्तु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्त्विति मन्त्रतः । 'प्रणीय पावकं तूष्णीं द्वादशोपात्तसर्पिषा । तूष्णीं हुत्वा ततः कुर्यात्प्रेते मालया इति क्रियाम् ॥ नष्टेष्व- ग्निष्वथारण्योर्नाशे स्वामी म्रियेत चेत् । आहरेदरणीद्वन्द्वं मनोज्योतिर्ऋचा ततः ॥'

यज्ञपार्श्वः—'यजमाने चितारूढे पात्रन्यासे कृते सति । वर्षाद्यभिहते वह्नौ कथं कुर्वन्ति याज्ञिकाः ॥ तदर्धदग्धकाष्ठेन मन्थनं तत्र कारयेत् । तच्छेषालाभतोन्येन दग्ध- शेषेण[1] वा पुनः ॥ हुत्वाज्यं लौकिके वह्नौ हुतशेषं दहेत्तु वा ॥' अत्राग्निषु सत्सु पर्णशरे शरीरोत्पत्तिः । शरीरे वासति प्रेताधानेनाग्न्युत्पत्तिः । उभयाभावे तु प्रेताधानेऽनधि- काराद्दाहादिसंस्कारलोपः । उदकदानाद्येव कार्यमिति केशवीकारशतद्वयीप्रमुखा- स्तन्न । 'निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ।' इति विरोधात् । 'क्रिया- लोपगता ये च' इति निषेधात्तदभावे पलाशानां वृन्तैः कार्यः । पुमानपीत्यभावे विधान- स्याग्न्यभावेपि साम्याच्च । तेन प्रेताहुत्यभावेपि स्विष्टकृद्द्रव्यान्तरोक्तेरदृष्टार्थत्वात्[2] । प्रेता- धानं दाहोपि भवत्येव । प्रतिकृतेरग्नीनां च प्रेताधानप्रयोजकत्वाक्षतेः ॥

पत्न्या[3] अप्येवम् । 'दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः । इति याज्ञवल्क्योक्तेः । यत्तु—'द्वितीयां चैव यो भार्यां दहेद्वैतानिकाग्निभिः । जीवन्त्यां प्रथमायां तु सुरापानसमं स्मृ- तम् ॥' इति तदाधाने सहानधिकृताविषयमिति विज्ञानेश्वरः । मदनरत्ने ब्राह्मेपि- 'आहिताग्न्योश्च दंपत्योर्यस्त्वादौ म्रियते भुवि । तस्य देहः सपिण्डैश्च दग्धव्यस्त्रिभिरग्निभिः । पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना । अनाहिताग्निदेहस्तु दाह्यो गृह्याग्निना द्विजैः ॥' त्रिकाण्डमण्डनस्तु विकल्पमाह—'ज्येष्ठायां विद्यमानायां द्वितीयायै स्व- योषिते । काम्यं नित्याग्निहोत्रं वा न कथंचित्प्रयच्छति ॥ स्त्रीमात्रमविशेषेण दग्ध्वाग्नि- वैदिकादिभिः । विवाह्यादधते यद्वाधानमेवास्ति चेद्वधूः ॥' इति ॥

अत्रेदं तत्त्वम् । साग्नेः पत्नीमृतौ द्वौ पक्षौ । पुनर्विवाहेच्छायां पूर्वाग्निभिर्दहेदित्ये- कः पक्षः । 'भार्यायै पूर्वमारिण्यै दत्त्वाग्नीनन्त्यकर्मणि । पुनर्दारक्रियां कुर्यात्पुनराधा-

---

१—भस्मशेषेणेति । 'अग्निनाशे मृतिश्चेत्स्यादाहिताग्नेस्तदोच्यते । नर्योल्मुकं मथित्वैनं संस्कु-

असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयेत् ॥ ' तथा-'एवमेवाहिताग्नेश्च पात्र दिकं भवेत् । कृष्णाजिनादिकं चात्र विशेषोध्वर्युचोदितः ॥ ' तत्रैव-'अनयै नारी दग्धव्या या व्यवस्थिता । अग्निप्रदानमन्त्रोस्या न प्रयोज्य इति स्थितिः छन्दोगानामेव ॥ पात्रन्यासोक्तेरुत्तानदेहत्वं साग्निपरम् । निरग्निस्तु पुमानधो स्त्री तूत्ताना दाह्या ।'सगोत्रजैर्गृहीत्वा तु चितामारोप्य तैः शवः। अधोमुखो दक्षिण चरणस्तु पुमानिति ॥ उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः ॥ ' इत्यादि राणादिति शुद्धितत्त्वहारलतादयः । उत्तरशिरस्त्वं सामगेतरपरम् । वा त्वग्निदानेऽन्यो मन्त्रः । 'कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता । मृत्युक प्राप्य नरं पञ्चत्वमागतम् ॥ धर्माधर्मसमायुक्तं लोभमोहसमावृतम् । दहेयं सर्वग दिव्याँल्लोकान्स गच्छतु ॥ ज्वलमानं महावह्निं शिरःस्थाने प्रदापयेत् । चतुर्वर्णेषु सं मेवं भवति पुत्रके' ॥

अत्र क्रियानिबन्धे गारुडे षट्पिण्डदानमुक्तम् ॥ 'मृतस्योत्क्रान्तिसम पिण्डान् क्रमशो ददेत् । मृतिस्थाने तथा द्वारि चत्वरे तार्क्ष्य कारणात् ॥ विश्रामे चयने तथा संचयने च षट् ॥ ' तथा-'आदौ देयास्तु षट् पिण्डा दश देया हिकाः । स्थाने चार्धपथेतीते चितायां शवहस्तके ॥ श्मशानवासिभूतेभ्यः षष्ठं तथा ॥' ततः-'त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ॥ उक्तः संहारकस्तर स्वर्गं मृतं नय ॥ 'इत्यग्निं दत्त्वा, अस्मात्त्वमितिमन्त्रेणार्धदग्धे आज्याहुतिर आहिताग्नौ पराशरः-'शम्यां शिश्ने विनिक्षिप्य अरणीं मुष्कयोरपि । दक्षिणे हस्ते वामे तूपभृतं न्यसेत् ॥ शिश्ने तूलूखलं दद्यात्पृष्ठे च मुसलं न्यसेत् । क्षिप्य दृषदं तण्डुलाज्यतिलान्मुखे ॥ श्रोत्रे च प्रोक्षणीं दद्यादाज्यस्थालीं च चक्षु कर्णे नेत्रमुखे घ्राणे हिरण्यशकलं न्यसेत् ॥ अग्निहोत्रोपकरणमशेषं तत्र निक्षिपे

प्रचेताः-'स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं ततः । नग्नदेहं दहेन्नैव किंचिद्देयं त्यजेत् ॥ ' यमः-'प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम् । ' आश्वलायन 'संस्थिते प्रेतालंकारान् कुर्वन्ति केशश्मश्रुलोमनखानि वापयन्ति नलदेनानुलि नलदमालां प्रतिमुञ्चन्ति । ' इति माधवीये ब्राह्मे-'दरिद्रोपि न दग्धव्यो कस्यां चिदापदि ॥ ' तथा-'निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेन्नरः ॥ ' कालेऽग्निनाशे तु मदनरत्ने यज्ञपार्श्वः-'यजमाने मृते क्वापि चितादौ वा प्रवे वर्षाद्यभिहतेग्नौ तु कथं प्रेतविकल्पना ॥ शेषं दग्ध्वा प्रदग्धेषु निर्मथ्यैव तु कारयेत

दंपत्योरेकदा मृतौ विशेषमाहापस्तम्बः—'तथैव प्रेते सहैव पितृमेधो द्वि
चनलिङ्गान्मन्त्रान् सन्धारयन्ति ।' पितृमेधो दाहान्तं कर्म
दम्पत्योरेकदामृतौ । 'दाहान्तमेकतन्त्रत्वम्' इति **बौधायनोक्तेः**—अस्थिसंचयनमप्
कम् । उदकपिण्डदानादि पृथगेव । सहगमनेप्येवम् । तदाह **मदनरत्ने**
**भाष्यार्थसंग्रहकारः**—'एककालमृतौ भार्या भर्ता च यदि चेद् द्वयोः । तन्त्रे
दहनं कुर्यात्पिण्डश्राद्धं पृथक्पृथक् । एककाले मृतौ जायापती यदि तदा पितुः
विभज्याग्निं क्रियां कुर्यादिति यत्तदसांप्रतम् ॥ दाहान्तमेकतन्त्रत्वमिति याज्ञि
संमतम् ॥ मृतं पतिमनुव्रज्य या नारी ज्वलनं गता । अस्थिसंचयनान्तेऽस्या भ
संस्कार एव हि ॥ कीकसानां तु संस्कारो न्यायसिद्धोपि यो मतः । एककाले मृतेप्ये
कीकसानां विधिः स्मृतः ॥ नवश्राद्धं सपिण्डान्तं भिन्नकालमृतौ यथा ॥' **कपर्दि**
**कारिकापि**—'मृते भर्त्तरि तद्दाहात्प्राक् पत्नी म्रियते यदि । पत्न्यां वा प्राक् प्र
तायां दाहादर्वाक्पतिर्मृतः ॥ तत्र तन्त्रेण दाहः स्यान्मन्त्रेषु द्वित्वमूह्यते । कीकसानां
संस्कारः पृथगेव तयोर्भवेत् ॥ एकाहमृत्यौ युगपन्नवश्राद्धादिकं तयोः । मृतं पतिम
व्रज्य पत्नी चेदनलं गता ॥ तत्रापि दाहस्तन्त्रेण पृथगस्थिक्रिया भवेत् ॥' अस्थि
चयनपृथक्त्वे विकल्पः । सहगमने सर्वत्र पाकैक्यमाह **प्रचेताः**—'एकचित्यां समारु
म्रियेते दंपती यदि । तन्त्रेण श्रपणं कुर्यात्पृथक्पिण्डं समाचरेत्' ॥

**अथोदकदानं वसिष्ठः**—'शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्यवयन्ति सव्ये
राभ्यां पाणिभ्यामुदकक्रियां कुर्वन्त्ययुग्मम् ॥' **आपस्तम्बः**—'मातुश्च योनिसम्ब
न्धेभ्यः पितुश्चासप्तमात् पुरुषाद्यावतां वा सम्बधो ज्ञायते तेषां प्रेतेषू
उदकदानम् । कक्रिया' इति । **याज्ञवल्क्यः**—'सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युप
त्यपः । अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ सकृत्प्रसिञ्चन्त्युदकं नामगोत्रे
वाग्यताः ।' सप्तमाद्दशमाद्वा दिवसादर्वागिति **विज्ञानेश्वरः**। **कातीयास्तु** सप्तम
शमाद्वा पुरुषादित्याहुः । सप्तमाद्दशमाद्वा पुरुषात्समानग्रामवासे यावत्सम्बन्धमनुस्
रेयुः' इति **पारस्करोक्तेः** । मन्त्रस्नानाङ्गमेवेति **हेमाद्रिः** । **प्रचेताः**—'प्रेत
बान्धवा यथावृद्धमुदकमवतार्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवास
दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययोः' । स एव 'नदी
ततो गत्वा' इत्युक्त्वा 'सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः । पाषाणं तत आ
विप्रे दद्याद्दशाञ्जलीन् ॥ द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः । त्रिंशच्छूद्राय दात
[illegible] ॥ ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत् ॥'

प्रेतस्नानम् । पुनः परिधाय स्नायादित्यर्थः । अपन इति मन्त्रेण वामहस्ता
कया जलालोडनम् । अवतरणे वृद्धपुरःसरत्वोक्तेः 'यथाबालं पुर
इति **बौधायनीयं** जलादुत्थानपरमिति **हारलतादयः** । **आश्वलायनः**–
वृतो व्रजन्त्यनीक्षमाणा यत्रोदकमवहद्भवति ।' तत्प्राप्य सकृदुन्मज्ज्यैकाञ्जलिमु
अञ्जलिदानम् । तस्य गोत्रं नाम गृहीत्वा' इति । **प्रचेतसा**ऽन्वहमञ्जलित्रयम
तत्र 'त्रिःप्रसेकं कुर्युः प्रेतस्तृप्यतु' इति । **तथा**–'दिनेदिनेऽ
पूर्णान् प्रदद्यात्प्रेतकारणात् । तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डः समाप्यते ॥'
वृद्धिस्त्रिकवृद्धिर्वेत्यर्थः । **मदनरत्ने भरद्वाजगृह्ये** तु द्विकवृद्धिरप्युक्ता 'आशौ
प्रदद्यात्तु प्रेतपुत्रस्तिलाञ्जलीन् । प्रथमेऽह्नि सकृद्दद्यात्पिण्डयज्ञावृता दिवा ॥ त्रींश्च
द्वितीयेऽह्नि तृतीये पञ्च एव च । चतुर्थे सप्तसंख्यास्तु पञ्चमे नव चोत्सृजेत् ॥
चैकादशकाः सप्तमे तु त्रयोदश । अष्टमे पञ्चदशका नवमे दश सप्त च ॥ एकोनां
चाग्रे शताञ्जलिमतं स्मृतम् । केचिद्दशाञ्जलीन् प्रोचुः केचिदाहुः शताञ्जलीन् ॥
श्चाशतं चान्ये स्वशाखोक्तव्यवस्थया' ॥

**छन्दोगपरिशिष्टे**–'अथानवेक्षयन्त्यापः सर्वे चैव शवस्पृशः । गोत्रनाम
तु तर्पयामीत्यनन्तरम् ॥ दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक् पृथक् ॥'
**पुराणे**–'सपिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणै
वद्भवेत् ॥' **रामायणे**–'इदं पुरुषशार्दूल विमलं दिव्यमक्षयम् । पितृलोकेषु
मद्दत्तमुपतिष्ठताम् ॥' दानवाक्ये विकल्पः । **याज्ञवल्क्यः**–'कामोदकं सखिप्र
स्रीयश्वशुरर्त्विजाम् ॥' काम इच्छा । प्रेततृप्तीच्छायां देयमन्यथा नेत्यर्थः । श
**रस्करौ**–'आचार्ये चैवम् ।' 'मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरंस्ताश्च ते
इति । द्विवचनान्मातामह्या अपि । **शङ्खलिखितौ**–'उदकक्रिया कामं श्वशुर
लयोः शिष्ये सहाध्यायिनि राजनि च' इति । **वृद्धमनुः**–'क्लीबाद्या नोदकं कुर्युः
व्रात्या विधर्मिणः । गर्भभर्त्तृद्रुहश्चैव सुराप्यश्चैव योषितः' ॥ **याज्ञवल्क्य**
ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा ।' **षडशीतौ**–'स्वीयाचारादपि भ्रष्टाः
ये च दूषिताः । न कुर्युरुदकं ते वै तेभ्योप्यन्ये न चैव हि ॥' **मदनरत्ने हारी**
'पतितानामवृद्धानां चरन्तीनां च कामतः । प्रत्तानां चैव कन्यानां निर्वर्त्या स
क्रिया ॥' **अपरार्के शंखलिखितौ**–'अपपात्रितस्य रिक्थपिण्डोदकानि
र्तन्ते ॥' अपपात्रितः कृतघटस्फोटः । तस्यापि संग्रहविधौ कृते आशौचोदकादि
देवेत्याशौचप्रकाशः ॥

शनैः ॥ प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि । क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् क्षितौ ॥' इदं चाद्येह्नि । वसिष्ठः—'अद्य प्रस्तरे गृहमनश्नन्त आसीरन् क्रीतोत्पन्नेन वा वर्तेरन् ॥' शुद्धितत्त्वे बैजवापः—'शमीमालभन्ते शमी पापं शमयतु इति अश्मानमश्मेव स्थिरो भूयासमिति । अग्निमग्निर्नः शर्मयच्छात्विति, ज्योतिषअन्तरा गाम जमुपस्पृशन्तः क्रीत्वा लब्ध्वा वान्यगेहोदकान्नमलवणमेकरात्रं दिवा भुञ्जीरंस्त्रिरात्रं कर्मोपरमणम्, क्रीताद्यशनमुपवासाशक्तस्य ।' आश्वलायनस्तु—'नतस्यां रात्र्याम पचेरन्, त्रिरात्रमक्षारालवणाशिनः स्युः द्वादशरात्रं वा' इत्याह । अशक्तौ रत्नाक आपस्तम्बः—'नार्याः परमगुरुसंस्थायां चाकालभोजनानि कुर्वीरन् ॥' यदा मृत परदिने तावत्कालमित्यर्थः । बृहस्पतिः—'अधः शय्यासना दीना मलिना भोगवर्जिता अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा ॥' भोगोऽभ्यङ्गताम्बूलादिः । क्षारः पा भाषायामुक्ताः । यत्तु मार्कण्डेयपुराणे—'तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः ॥ प्रथमेह्नि तृतीये च सप्तमे नवमे तथ वस्त्रत्यागं बहिः स्नानं कृत्वा दद्यात्तिलोदकम् ॥' इति । तदन्त्यदिनपरम् । 'आ चान्ते तिलकल्कैः स्नाता गृहं प्रविशेयुः' इति विष्णूक्तेः । विष्णुपुराणे त्वस्थि चयोर्ध्वं भोगोप्युक्तः । 'शय्यासनोपभोगस्तु सपिण्डानामपीष्यते । अस्थिसंचयनाद् संयोगस्तु न योषिताम् ॥'

भारते—'तिलान् ददतु पानीयं दीपं ददतु जाग्रतु । ज्ञातिभिः सह भोक्तव्यमे त्प्रेतेषु दुर्लभम् ॥' मनुः—'मांसाशनं च नाश्नीयुः शयीरंश्च पृथक् क्षितौ ॥' दे जानीये कारिकायाम्—'लवणक्षीरमाषान्नापूपमांसानि पायसम् । वर्जयेदाहृता बालवृद्धातुरैर्विना ॥ उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत् ॥' मरीचिः—'प्र मह्नि तृतीये च सप्तमे दशमे तथा । ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभम् ॥' भो च दिवैव । 'दिवा चैव तु भोक्तव्यममांसं मनुजर्षभ ।' इति विष्णुपुराणात् । 'क्री लब्ध्वा वा दिवान्नमश्नीयुः इति पारस्करोक्तेश्च ॥ मदनरत्ने हारीतः—'पा मृन्मयेषु पर्णपुटकेषु वाश्नीरन् ।' देवजानीये ब्राह्मे शुद्धितत्त्वे आदित्यपुरा 'आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान् ।' अन्त्यदिने तु मदनरत्ने ब्राह्मे— यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः । स तत्र गृहशुद्धिं च वस्त्रशुद्धिं करोत्यपि अन्त्यकर्मकालीनवस्त्रयोस्तु तत्रैवोक्तम् । 'ग्रामाद्बहिस्ततो गत्वा प्रेतपृष्ठे तु वाससी । अन [illegible] च त्यक्त्वा स्नानं करोत्यथ ।' इति । शंखः—'दानं प्रतिग्रहो होमः

प्रदीपं कांस्यभाजनम् । नग्नप्रच्छादने श्राद्धे ब्राह्मणाय निवेदयेत् ॥' भृगुः-'ति
तथा पिण्डान् नग्नप्रच्छादनादिकम् । रात्रौ न कुर्यात्संध्यायां यदि कुर्यान्निरर्थकम्
**अथ प्रेतपिण्डः** । यद्यपि **हेमाद्रौ पारस्करेण**-'ब्राह्मणे दशपिण्डास्तु
द्वादश स्मृताः । वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्तिताः ॥' इत्युक्तं
'प्रेतेभ्यः सर्ववर्णेभ्यः पिण्डान्दद्याद्दशैव तु ।' इति तेनैवोक्तेः
दशैव ज्ञेयाः । **मदनरत्नेप्येवम्** । तथा च **हेमाद्रौ ब्रा**

प्रेतपिण्डनिर्णयः ।

**ह्मयोः**-'जात्युक्ताशौचतुल्यांस्तु वर्णानां क्वचिदेव हि । देशधर्मान्पुरस्कृत्य प्रेतां
न्वपन्त्यपि ॥' इत्युक्त्वा-विप्रान्येषु दशमपिण्डोत्कर्ष उक्तः । 'देयस्तु दशमः
राज्ञां वै द्वादशेहनि । वैश्यानां वै पञ्चदशे देयस्तु दशमस्तथा ॥ शूद्रस्य दशमः
मासे पूर्णेह्नि दीयते ।' इति । युद्धमृतादेः सद्यःशौचे त्र्यहादौ च **तेनैवोक्तम्**-'
शौचे प्रदातव्यः सर्वेपि युगपत्तथा । त्र्यहाशौचे प्रदातव्यः प्रथमेह्न्येक एव हि ।
येहनि चत्वारस्तृतीये पञ्च चैव हि ।' त्र्यहे प्रकारान्तरं प्रागुक्तम् । **शातात**
'आशौचस्य च ह्रासेपि पिण्डान्दद्याद्दशैव तु ।' तत्रैकपात्रे सकृत्पक्त्वा
पिण्डान् दद्यात् । 'उत्तरीयशिलापात्रकर्तृद्रव्याविपर्यये । पूर्वदत्ताञ्जलीन् दद्या
पिण्डांस्तथैव च' ॥ इति **गृह्यकारिकायां** पात्रविपर्यये दोषोक्तेः । शिलावि
घटस्फोटादेर्नावृत्तिः । अक्षाभ्यञ्जनादिपदकर्मणः एकहायनीनयनवदप्रयोजकत्वात्
तद्वच्चात्रालौकिकग्रहणम् । **केचित्तु**-'नवान्यादाय भाण्डानि आरुकं चरुकं तथ
इति **प्रचेतसोक्तेः** । पात्रानेकत्वमाहुः । क्रियाकर्तुर्नाशेऽन्येन शेषः समापनीय
'एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते । तद्वन्धुना क्रिया कार्या सर्वैर्वा सह
रिभिः ॥' इति **शुद्धितत्त्वे बृहस्पतिस्मृतेः** । पत्न्याः कर्तृत्वे रजोदर्शने च त
कुर्यात् । 'शावाद्द्विगुणमार्तवम्' इत्युक्तेः । आशौचान्ते आर्तवे कर्तुरस्वास्थ्ये वा
क्रिया सर्वावर्तनीया कर्तुर्विपर्ययात्कालातिक्रमयोगाच्च ॥

**वाराहे**-'स्थण्डिले प्रेतभागं तु दद्यात्पूर्वाह्न एव तु । कृत्वा तु पिण्डसंकल्पना
गोत्रेण सुन्दरि ॥' **मरीचिः**-'प्रेतपिण्डं बहिर्दद्याद्दर्भमन्त्रविवर्जितम् । प्रागुदीच
चरुं कृत्वा स्नातः प्रयतमानसः ॥' दर्भवर्जनमनुपनीतपरम् 'असंस्कृतानां भूमौ पि
दद्यात्संस्कृतानां कुशेषु' इति **प्रचेतसोक्तेः** । **मिताक्षरायां स्मृत्यन्तरे**-'भू
माल्यं पिण्डं पानीयमुपले वा दद्युः' ॥ **हारीतः**-'अकृतचूडा ये बाला ये च गभ

१-'आचार्यविपर्ययेष्वेवम्' इति वदतामयमभिप्रायः-आचार्यस्यापि ...

द्विनिःसृताः । मृता अनुपनीता ये अनूढा अपि कन्यकाः ॥ ये मृताश्चाप्यसंस्कारास्तेभ्यो भूमौ प्रदीयते' । **पैठीनसिः**—'शालिनां सक्तुभिर्वापि पिण्याकैर्वापि निर्वपेत्' ॥ **शुनःपुच्छः**—'फलमूलैश्च पयसा शाकेन च गुडेन च । तिलमिश्रं तु दर्भेषु पिण्डं दक्षिणतो हरेत् ॥ तूष्णीं प्रसेकं पुष्पं च धूपं दीपं तथैव च । शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्वपेत् ॥ प्रथमेहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ।' **मदनरत्ने मात्स्ये**—'तैजसं न्मृन्मयं वाथ पात्रं संशोध्य यत्नतः । लौकिकाग्नावधिश्रित्य पचेदन्नं घृतप्लुतम् ॥ स्नात्वाथ तिलसंमिश्रं प्रदद्याद्दर्भसंस्तरे ॥'

**शुद्धितत्त्वे देवजानीये च ब्राह्मे**—'प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः । अन्नं नवसु चान्येषु स एव प्रददात्यपि । मृन्मयं भाण्डमादाय नवं स्नातः सुसंयतः । तण्डुलप्रसृतिं तत्र त्रिः प्रक्षाल्य पचेत्स्वयम् ॥ सपवित्रैस्तिलैर्मिश्रं कृमिकेशविवर्जितम् । द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम् ॥ भूपृष्ठे संस्तरे दर्भान् याम्याग्रान् देशसंभवान् । ततोऽवनेजनं दद्यात् संस्मरन् गोत्रनामनी ॥ तिलसर्पिर्मधुक्षीरैः संसिक्तं तत्तमेव हि । दद्यात्प्रेताय पिण्डं तु दक्षिणाभिमुखः स्थितः ॥ अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शीतलैः । ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ॥ दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु । सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा ॥ त्र्यहाशौचेपि दातव्यास्त्रयः पिण्डाः समाहितैः । द्वितीये चतुरो दद्यादस्थिसंचयनं तथा ॥ त्रींस्तु दद्यात्तृतीयेह्नि वस्त्रादि क्षालयेत्ततः । दशाहेपि च दातव्यः प्रथमे त्वेक एव हि ॥ एकस्तोयाञ्जलिस्त्वेवं पात्रमेकं च दीयते । द्वितीये द्वौ तृतीये त्रीन्' इत्याद्युक्त्वा—'एवं स्युः पञ्चपञ्चाशत्तोयस्याञ्जलयः क्रमात् । तोयपात्राणि तावन्ति संयुक्तानि तिलादिभिः' ॥ इति । पात्रं कुम्भः । अत्राहःपदमहोरात्रपरम् । तेन रात्रावपि देयमिति **गौडाः** । दिवसपदाद्रात्रौ **नेति मैथिलाः** । स एवेत्युक्तेः । सपिण्डेन दशपिण्डे प्रक्रान्ते पुत्रागमेपि स न दद्यात् । 'असगोत्रः सगोत्रो वा' इति प्रागुक्तेः । दाहकर्तैव दशाहं कुर्यादिति **मिताक्षरायाम्** । **शुद्धितत्त्वे वायवीयेपि**—'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् । यश्चाग्निदाता प्रेतस्य पिण्डं दद्यात्स एव हि ॥' इति । **तत्रैव** 'पूरकेण तु पिण्डेन देहो निष्पद्यते यतः । कृतस्य करणायोगात् पुनर्नावर्तते क्रिया ॥' **शुद्धिप्रकाशे वायवीयेपि**—'निर्वर्तयाति यो मोहात् क्रियामन्यानिर्वर्तिताम् । विधिघ्नस्तेन भवति पितृहा चोपजायते ॥ तस्मात् प्रेतक्रिया येन

मूलफलादिषु । प्रथमेहनि यद्दद्यात्तद्दद्यादुत्तरेहनि ॥ गृहद्वारि श्मशाने वा
वा । यत्राद्यं दीयते पिण्डस्तत्र सर्वं समापयेत् ॥'

ब्राह्मे-'शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा । द्वितीयेन तु कर्णा
समाप्नतः ॥ गलांसभुजवक्षांसि तृतीयेन यथाक्रमम् । चतुर्थेन तु पिण्डेन
गुह्यानि च ॥ जानुजंघे तथा पादौ पञ्चमेन तु सर्वदा । सर्वमर्माणि षष्ठे
नाड्यः । दन्तलोमान्यष्टमेन वीर्यं तु नवमेन च । दशमेन तु पूर्णत्वं तृप्तता
इति । याज्ञवल्क्येन तु-'पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम् ।' इत्यु
फलनान्तर्म्यं ज्ञेयमिति **विज्ञानेश्वरः** । तेन त्र्यहाशौचपरत्वं देव
न्तित्यन्न । 'आशौचस्य च ह्रासेपि पिण्डान्दद्याद्दशैव तु ।' इति वचनाच्च । वि
कत्वार्थमिति **हारलतादयः** ॥

**शातातपः**-'जलमेकाहमाकाशे स्थाप्यं क्षीरं च मृन्मये ॥' **पारस्क**
तां रात्रिं क्षीरोदके विहायसि निदध्युः । प्रेतात्र स्नाहीत्युदकं, पिब चेदमिति
इदं गत्रावेवेति **गौडाः** । **गारुडे तु**-'अपक्वे मृन्मये पात्रे दुग्धं दद्या
इत्युक्तम् । **हेमाद्रौ पाद्मे** तु दशाहमुक्तम् । 'तस्मान्निधेयमाकाशे द
जलम् । सर्वतापोपशान्त्यर्थमध्वश्रमविनाशनम् ॥' **देवजानीये कारि**
'तत्र प्रेतापक्तनये दशरात्रमखण्डितम् । कुर्यात्प्रदीपं तैलेन वारिपात्रं च
भोज्याद्भोजनकाले तु भक्तमुष्टिं च निर्वपेत् ॥ नामगोत्रेण संबुद्ध्या धारिण्यां
वत् ॥' **शातातपः**-'भूलोकात्प्रेतलोकं तु गन्तुं श्राद्धं समाचरेत् । तत्पाथे
मृतस्य मनुजस्य तु ॥'

**अथ दशाहमध्ये दर्शपाते निर्णयः** । **भविष्ये**-'प्रवृत्ताशौचतन्त्र
दर्शे प्रपद्यते । समाप्य चोदकं पिण्डान् स्नानमात्रं सम

दशाहमध्येदर्शपाते निर्णयः ।

**ऋष्यशृङ्गः**-'आशौचमन्तरा दर्शो यदि स्यात्सर्ववर्णिनाम्
प्रततन्त्रस्य कुर्यादित्याह गौतमः ॥' **पैठीनसिः**-'आद्येन्दावेव कर्तव्या
दकक्रिया । द्विरिन्द्वे तु कुर्वाणः पुनः शावं समश्नुते ॥' मातापित्रोस्तु **श्लोक**
'अन्तर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत् । पित्रोस्तु यावदाशौचं दद्यात्पिण्डान्
लीन् ॥' इदमपि त्र्यहमध्ये दर्शपाते । तदूर्ध्वं दर्शे तु पित्रोरपि तन्त्रं समाप्यमेव
राशौचमध्ये तु यदि दर्शः समापतेत् । तावदेवोत्तरं तन्त्रं पर्यवस्येत् त्र्यहात्परम्
**गालवोक्तेः** । अन्येषां तु त्र्यहमध्येपि समाप्तिरिति **पराशरमाधवीये**
**मते चोक्तम्** ।

अस्थिसंचयः ।

**अथास्थिसंचयः । तत्राश्वलायनेन** च कृष्णपक्षे एकादशीत्रयोदशीदर्शेषु आषाढीफाल्गुनीप्रौष्ठपदीभिन्नर्क्षे उक्तम् । तदाशौचमध्येऽसंभवे तदूर्ध्वं च प्रागब्दात्करणे ज्ञेयम् । आशौचमध्ये तु **मदनरत्ने संवर्तः**–'प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा । अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह ॥' **छन्दोगपरिशिष्टे तु**–'अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेत् ।' इति द्वितीयेऽप्युक्तम् । **विष्णुकात्यायनौ**–'संचयनं चतुर्थ्याम्' इति । **माधवीये यमः**–'भौमार्कमन्दवारेषु तिथियुग्मे विवर्जयेत् । वर्जयेदेकपादर्क्षे द्विपादर्क्षेऽस्थिसंचयम् ॥ मदातृजन्मनक्षत्रे त्रिपादर्क्षे विशेषतः ।' **ब्राह्मे**'चतुर्थे ब्राह्मणानां तु पञ्चमेहनि भूभृताम् । नवमे वैश्यजातीनां शूद्राणां दशमात्परम् ॥' दशमेहनीति वा पाठः । **शौनकः**–'पालाशेष्वस्थिदाहे च सद्यःसंचयनं भवेत् ।' काम्यमरणे तु तस्य त्रिरात्रमाशौचम् । द्वितीये त्वस्थिसंचय इत्युक्तम् । **अङ्गिराः**–'प्रेतीभूतं तथोद्दिश्य यः शुचिर्न करोति चेत् । देवतानां तु यजनं तं शपन्त्यथ देवताः ॥' तद्विधिः स्वस्वसूत्रे **भट्टकृतौ** च ज्ञेयः ॥

**हेमाद्रौ नागरखण्डे**–'त्रीणि संचयनस्यार्थे तानि वै शृणु सांप्रतम् । यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धं प्रकल्पयेत् । एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः । ततः संचयनस्यार्थे तृतीयं श्राद्धमिष्यते ॥' **अपरार्के मदनरत्ने च ब्राह्मे**–'सद्यःशौचे तथैकाहे सद्यः संचयनं भवेत् । त्र्यहाशौचे तृतीयेऽह्नि कर्तव्यस्त्वस्थिसंचयः ॥' **तत्रैव**–'श्मशानदेवतायागं चतुर्थे दिवसे चरेत् । मृन्मयेषु च भाण्डेषु कुम्भेषु रुचकेषु वा ॥ सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा । फलैर्मूलैर्वनोत्थैश्च पूज्याः क्रव्याददेवताः ॥ धूपो दीपस्तथामाल्यमर्घ्यं देयं त्वरान्वितैः । तत्र पात्राणि पूर्णानि श्मशानाग्नेः समन्ततः ॥ निवेदयद्भिर्वक्तव्यं तैः सर्वैरनहंकृतैः । नमः क्रव्यादमुख्येभ्यो देवेभ्य इति सर्वदा ॥ येऽत्र श्मशाने देवाः स्युर्भगवन्तः सनातनाः । तेऽस्मत्सकाशाद्गृह्णन्तु बलिमष्टाङ्गमक्षयम् ॥ प्रेतस्यास्य शुभाँल्लोकान् प्रयच्छन्तु च शाश्वतान् । अस्माकमायुरारोग्यं सुखं च ददतां चिरम् ॥ एवं कृत्वा बलीन्सर्वान्क्षीरेणाभ्युक्ष्य वाग्यतः । एवं दत्त्वा बलिं चैव दद्यात्पिण्डत्रयं बुधः ॥ एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमम् । तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात् ॥ ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः । प्रेतस्यास्थीनि गृह्णाति प्रधानाङ्गोद्भवानि च ॥ शिरसो वक्षसः पाण्योः पार्श्वाभ्यां चैव

तीर्थेस्थिक्षेपनिर्णयः ।

अथ तीर्थेस्थिक्षेपविधिः तत्रैव-'तत्स्थानाच्छनकैर्नीत्वा कदाचिज्जाह्नवी कश्चित्क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः ॥ मातुः कुलं पि वर्जयित्वा नराधमः । अस्थीन्यन्यकुलस्थस्य नीत्वा चान्द्र चरेत् ॥' तत्रैव ब्रह्माण्डपुराणे-'अस्थीनि मातापितृपूर्वजानां नयन्ति गंग ये कथंचित् । सद्बान्धवस्यापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥ स्नात्वा पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैश्च योज्य ततस्तु मृत्पिण्डपुटे निधाय प दिशं प्रेतगणोपरूढाम् ॥ नमोस्तु धर्माय वदेत्प्रविश्य जलं स मे प्रीत इति क्षिपे उत्थाय भास्वन्तमवेक्ष्य सूर्यं सदक्षिणां विप्रमुखाय दद्यात् ॥ एवं कृते प्रेतपुरःस्थि स्य स्वर्गे गतिः स्यात्तु महेन्द्रतुल्या ॥' यमः-'गङ्गातोयेषु यस्यास्थि क्षिप्यते शु र्मणः । न तस्य पुनरावृत्तिर्ब्रह्मलोकात्सनातनात् ॥' तथा-'अस्तंगते गुरौ शुक्रे मासे मलिम्लुचे । गङ्गायामस्थिनिक्षेपं न कुर्यादिति गौतमः ॥' दशाहान्तर्न दो 'दशाहस्यान्तरे यस्य गङ्गातोयेस्थि मज्जति । गङ्गायां मरणं यादृक् तादृक् फ वाप्नुयात् ।' इति मदनरत्ने वृद्धमनूक्तेः ॥

शौनकः-'शौनकोहं प्रवक्ष्यामि अस्थिक्षेपविधिं क्रमात् । आदौ ग्रामाद्बहिर्गत्वा कुर्यात्सचैलकम् ॥ प्रोक्षयेत्पञ्चगव्येन भुवं मन्त्रैर्विचक्षणः ॥' गायत्र्याद्यैः पञ्चगव्यमन्त्रै खातास्थिभूमिं प्रोक्षेदित्यर्थः । उपसर्पादिभिर्मन्त्रैः प्रार्थनं खननं तथा । मृत्तिको चास्थ्नां ग्रहणं च यथाक्रमम् ॥' उपसर्पेति चतुर्भिर्मन्त्रैः क्रमेण प्रार्थनादि ज्ञेय 'स्नात्वास्थिशुद्धिं कुर्वीत एतोन्विन्द्रेति सूक्ततः । स्पृष्ट्वास्पृष्ट्वा ततः स्नानं पञ्चग शुद्ध्यति ॥ दश स्नानानि कुर्वीत तत्तन्मन्त्रैर्विचक्षणः । गोमूत्रं गोमयं क्षीरं दधि स कुशोदकम् । भस्म मृन्मधु वारीणि मन्त्रतस्तानि वै दश ॥ कुशैः संमार्जयेदस्थीन देवेति मन्त्रतः । एतोन्विन्द्रं शुचिर्वेति नतमंह इतीति च ॥ पावमानीर्ममाग्नेश्च रुद्र यथाक्रमम् ॥' एतैः कुशैर्मार्जनम् । 'हेमश्राद्धं ततः कुर्यात्पितॄनुद्दिश्य यत्नत पिण्डदानं प्रकुर्वीत ततश्च तिलतर्पणम् ॥' अस्थिक्षेपाङ्गं चेदम् । 'अजिनं कम्ब दर्भा गोकेशाः शाणमेव च । भूर्जपत्रं ताडपत्रं सप्तधा वेष्टनं स्मृतम् ॥ हैमं च मौक्ति रौप्यं प्रवालं नीलकं तथा । निक्षिपेदस्थिमध्ये तु शुद्धिर्भवति नान्यथा ॥ ततो प्रकुर्वीत तिलाज्येन विचक्षणः। उदीरतेति सूक्तेन हुनेदष्टोत्तरं शतम् ॥ ततो गत्वा तीर्थं स्पर्शदोषो न विद्यते । मूत्रं पुरीषाचमनं कुर्वन्नास्थीनि धारयेत् ॥' अत्र दश वैतरणीऋणमोक्षपापधेनुदानमुक्तम् । दिवोदासीये काशीखण्डे-'धनंजय धर्मात्मा मातृभक्तिपरायणः । आदायास्थीन्यथो मातुः ...

'पट्टवस्त्रं च कौशेयं माञ्जिष्ठं श्वेतवस्त्रकम् । कम्बलं शाणपट्टं च अजिनं च तथोत्तरम् ॥' एषां विकल्पः । अन्यश्चात्र विशेषस्त्रिस्थलीसेतौ दिवोदासीये च ज्ञेयः । संचयनोत्तरं श्राद्धमाहाश्वलायनः—'श्राद्धमस्मै दद्युः' इति । स्मृत्यर्थसारे—'संचयने कृते मनुष्यलोकात्प्रेतलोकं गच्छतः पाथेयश्राद्धमामेन कार्यमिति ॥ अनुपनीतस्य न संचयनम् ॥'

**अथ नवश्राद्धम् ।** पृथ्वीचन्द्रोदयेऽङ्गिराः—'प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥' **शिवस्वामी**—'नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः । आपस्तम्बाः षडित्याहुर्विभाषा त्वितरेषु हि ॥' पञ्च एकादशाहिकं विना । 'मरणाद्विषमेषु दिनेष्वेकैकं नवश्राद्धं कुर्यादानवमाद् । यदि नवमं विच्छिद्येतैकादशे तत्कुर्यात् । इति **मदनरत्ने बौधायनोक्तेः** ।

नवश्राद्धनिर्णयः ।

**भविष्ये**—'नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात् । आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्महर्षयः ॥' **हेमाद्रौ वृद्धवसिष्ठः**—'अलब्ध्वा तु नवश्राद्धं प्रेतत्वान्न विमुच्यते । अर्वाक् तु द्वादशाहस्य लब्ध्वा तरति दुष्कृतम् ॥' अतः षडेव । एतान्येव विषमश्राद्धानीत्युच्यन्ते । **नागरखण्डे** तु—'पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा । दशमैकादशे चैव नवश्राद्धानि तानि च ॥' इत्युक्तम् । **कात्यायनस्तु**—'चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥' प्रथमे सप्तमे चैवेत्याद्यपादे **व्यासपाठः**। **बह्वृचानां** तु—'नवश्राद्धं दशाहानि नवमिश्रं तु षडृतून् ।' इत्युक्तं **नारायणवृत्तौ** । **दीपिकायाम्**—'अथ तनुयादाद्ये चतुर्थेदिने श्राद्धम् । पञ्चमसप्तमाष्टनवदिग्रुद्रेषु युग्मद्विजैः ॥' 'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चसप्तनवस्वपि । द्वौद्वौ पिण्डौ प्रदातव्यौ शेषेष्वेकं तु विन्यसेत् ॥' एको विषमश्राद्धेवयवपिण्डश्चैक इति द्वावित्यर्थः । अत्र शाखाभेदाद्व्यवस्था ॥

चतुर्थदिनकृत्यम् ।

**अपरार्के भविष्ये**—'नवश्राद्धं त्रिपक्षं च षण्मासं मासिकानि च । न करोति सुतो यस्तु तस्याधः पितरो गताः ॥' **वाराहे**—'गतोसि दिव्यलोकं त्वं कृतान्तविहितात्पथः। मनसा वायुभूतेन विप्रे त्वाहं नियोजयेत् ॥ पूजयिष्यामि भोगैस्त्वामेवं विप्रं निमन्त्रयेत्। आवाहनेपि तत्रैव—'इह लोकं परित्यज्य गतोसि परमां गतिम् । मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥' इति । तत्रैव । **बह्वृचपरिशिष्टे**—'अनूदकमधूपं च गन्धमाल्यविवर्जितम् । नवश्राद्धममन्त्रं च पिण्डोदकविवर्जितम् ॥ ' उदकमर्घ्यः । पिण्डोदकं

प्रेतश्राद्धे दशाहिके ॥' इति ऋष्यशृङ्गोक्तौ दशाहिकोक्तेरेकादशाहे स्वधाप्रयोग
हारलता परास्ता ॥

**रत्नावल्याम्**-'आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम् । पितृशब्दः
वद्धः शर्मशब्दस्तथैव च ॥ पात्रालम्भोऽवगाहश्च उल्मुकोल्लेखनादिकम् । तृप्तिप्र
विकिरः शेषप्रश्नस्तथैव च ॥ प्रदक्षिणाविसर्गश्च सीमान्तगमनं तथा । अष्टादश
र्थांश्च प्रेतश्राद्धे विवर्जयेत् ॥' अथ **स्वधापितृनमःशब्दानां** तिलोसीतिमन्त्रे प्रे
ब्दोहेन तूष्णीं वा तिलावपनम् । तूष्णीमर्घ्यदानम् । असुष्मै स्वाहेति प्रेतनाम्ना प
होमः । नाम्ना एकः पिण्डः । निनयनमन्त्रे ऊहः । अनुमन्त्रणादि त्वमन्त्रकम् । अ
रम्यतामिति विसर्जनम् । एवं नवश्राद्धवर्जैकोद्दिष्टेषु । 'नवश्राद्धे त्वमन्त्रकं सर्वम्'
**नारायणवृत्तिः** । **क्रियानिबन्धे**-'उत्तानं स्थापयेत्पात्रमेकोद्दिष्टे सदा बुध
न्युब्जं तु पार्वणे कुर्यात्तस्योपरि कुशान्न्यसेत् ॥ नवश्राद्धं गृहे कुर्याद्भार्या यत्राग्नि
वा । सापिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै । तानि स्युर्लौकिके वह्नावि
त्वाश्वलायनः ॥' इदं संभवेन्नेन कार्यम् । 'नवश्राद्धेषु यच्छिष्टं गृहपर्युषितं च य
दंपत्योर्भुक्तशेषं च न तद्भुञ्जीत कर्हिचित् ॥' इत्यङ्गिरोवचनलिङ्गात् । 'द्वाभ्यां
तु कृच्छ्राभ्यां शुद्धिः स्यात्तु विवेकिनाम् ।' इति ब्राह्मे उक्तम् । विद्धे तु **निर्ण**
मृते कण्वः-'नवश्राद्धं मासिकं च यद्यदन्तरितं भवेत् । तत्तदुत्तरसातन्त्र्याद
प्रचक्षते ॥' **हेमाद्रौ गालवः**-'शावे तु सूतकं चेत्स्यान्निशायां च मृतौ त
नवश्राद्धानि देयानि यथाकालं यथाक्रमम् ॥' निशायामाशौचान्ते द्व्यहवृद्धौ । अ
**रोहणे तु**-'नवश्राद्धानि सर्वाणि सपिण्डीकरणं पृथक् । एक एव वृषोत्सर्गो गौ
तत्र दीयते ॥'

**आशौचान्तदिने कार्यमुक्तं ब्राह्मे**-'यस्ययस्य तु वर्णस्य यद्यत्स्यात्प
त्वहः । स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि ॥ समाप्य दशमं पिण्डं प्रेतस्पृ
वाससी । अन्त्यानामाश्रितानां च त्यक्त्वा स्नानं करोति च ॥ श्मश्रुलोमनखानि
यत्त्याज्यं तज्जहात्यपि । गौरसर्षपकल्केन तिलकल्केन संयुतम् ॥ शिरःस्नानं
कृत्वा तोयेनाचम्य वाग्यतः । वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः ॥' **क्रि**
**निबन्धे गृह्यकारिकायाम्**-'अत्र पिण्डत्रयं दद्युस्तत्सखिभ्यस्तथादिमम् । प्रेत
मध्यमं तद्वत्तृतीयं च यमाय वै ॥' **तथा**-'कर्त्रात्र प्रार्थिताः सन्तो ज्ञातिसंबन्धि

देवलः—'दशमेहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत् । तत्र त्याज्यानि वासांसि केश श्मश्रुनखानि च ॥' अपरार्के बृहस्पतिः—'नवमे वाससां त्यागो नखरोम्णां तथा न्तिमे' ॥ तत्रैव व्यासः—आशौचान्त्यदिने क्षौरं जनन्यां च गुरौ मृते ।' एतत्कनि ल्पवयसामित्याहापस्तम्बः—'अनुभाविनां च परिवापनम्' इति । अनुभाविनः कनिष्ठ इति विज्ञानेश्वररत्नाकरादयः । 'आशौचमनुभवतां पुंसां सर्वाशौचे तु मुण्डनम् आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतकेषु च । बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्ट खिलेषु चोडुषु ॥' इति रत्नमालोक्तेर्जननाशौचेपीति शुद्धितत्त्वादयः । अत्र देश चारतो व्यवस्था । परं शिखावर्ज्यम् । 'केशश्मश्रुनखलोमानि वापयीत शिखावर्ज्यं इति गोभिलोक्तेः । यत्त्वापस्तम्बः—'न समावृत्ता वपेयुरन्यत्र विहारादित्येके विहारो दर्शादियागः । तेन विना समावृत्ता गृहस्था न वपेयुरित्यर्थः । यच्च—'वृ छिनत्ति यः केशांस्तमाहुर्ब्रह्मघातिनम्' इति, तत्—'केशश्मश्रु धारयतामग्र्या भव संततिः ।' इति दानधर्मोक्तं काम्यपरम् । अनुभाविनः पुत्रादय इत्येके । 'पु पत्नी च वपनं कुर्यादन्ते यथाविधि । पिण्डदानोचितोन्योपि कुर्यादित्थं समाहितः इत्यपरार्के व्यासोक्तेः । यत्तु मिताक्षरायाम्—'द्वितीयेहनि कर्तव्यं क्षुर प्रयत्नतः । तृतीये पञ्चमे वापि दशमे वाऽऽप्रदानतः ॥' इति । 'आप्रदानतः' चतुर्थादीनि । तत्प्रथमदिने संभवे ज्ञेयम् । 'अलुप्तकेशो यः पूर्वं सोत्र केशान्प्रवापये द्वितीयेह्नि तृतीयेह्नि पञ्चमे सप्तमेपि वा ॥ यावच्छ्राद्धं प्रदीयेत तावदित्यपरं मतम् इति माधवीये मदनरत्ने च बौधायनोक्तेः । मदनपारिजाते तु दशमे प्र च समुच्चय उक्तः । यत्तु—'दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत्' इति—तदेकादश श्राद्धाङ्गविप्रनिमन्त्रणार्थं ज्ञेयम् ॥

एकादशाहनिर्णयः ।

अथैकादशाहः । मनुः—'विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधैः । वैश्यः प्रत रश्मीन् वा यष्टिं शूद्रः कृतक्रियः ॥' शुद्धितत्त्वे देवलः—'आवा निवृत्तेषु सुस्नाताः कृतमङ्गलाः । आशौचाद्विप्रमुच्यन्ते ब्राह्मणान्स्व वाच्य च ॥' याज्ञवल्क्यः—'मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रति संवत्सरं आद्यमेकादशेहनि' क्षत्रियाद्यैराशौचेप्येकादशेह्नि श्राद्धं कार्यम् । 'आद्यं श्राद्धमशुद्ध कुर्यादेकादशेहनि । कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः ॥' इति हेमाद्रौ श खोक्तेः । पैठीनसिः—'एकादशेह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम् । चतुर्णामपि वर्ण सूतकं च ... ॥' यत्तु मरीचिः—'आशौचान्ते ततः सम्यक् पिण्डदानं समाप

विष्णुः-'अथाशौचापगमे।' इति। यच्च गौडग्रन्थे हारीतः-'श्वोभूते एकोद्दिष्टं कुर्यात् ॥' यच्च बैजवापः-'ऊर्ध्वं दशम्या अपरेद्युः' इति तद्विप्रविषयम्। एतेन द्वादशाहे सपिण्डापकर्षपक्षे अवयवपिण्डासमाप्तौ कथमेकादशाहे श्राद्धमिति मूर्खोक्तिः परास्ता वचनादाशौचमध्ये इव तत्राप्यविरोधात् ॥

भविष्ये-'एकादशभ्यो विप्रेभ्यो दद्यादेकादशेऽहनि। भोजनं तत्र वैकस्मै ब्राह्मणाय महात्मने ॥' यत्तु मात्स्ये-'एकादशेऽहनि तथा विप्रानेकादशैव तु। क्षत्रादिः सूतकान्ते तु भोजयेदयुजो द्विजान् ॥' इति तद्रुद्रगणश्राद्धपरमिति मदनपारिजाते। गौडास्त्वस्माद्वचनात्क्षत्रियादीनामाशौचान्त एवेत्याहुः। रामायणेपि-'समतीते दशाहे तु कृतशौचो यथाविधि। चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च ॥' द्वादशिकं द्वादशाहेन निर्वर्त्य त्रयोदशाहश्राद्धम्। त्रयोदशिकं चतुर्दशाहविधेयं सपिण्डनपार्थेयादि। क्षत्रियाणां द्वादशाहाशौचे त्रयोदशे महैकोद्दिष्टं चतुर्दशे सपिण्डनम्। द्विविधवाक्यादेकादशाहाशौचान्तयोर्विकल्प इत्येके। सद्यःशौचादौ युद्धहतादेरेकादशाहे। अन्येषामाशौचान्ते इति वयम्। कौर्मे-'एकादशेह्नि कुर्वीत प्रेतमुद्दिश्यभावतः। द्वादशे वाह्नि कर्तव्यमनिन्द्येप्यथ वाहनि ॥' निन्द्यं प्रेतक्रियाकालयुक्तम् ॥ एकादशे तु न निषेध इत्युक्तं प्राक्। बृहस्पतिः-'वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम्। गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥ श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश। ज्ञातयो बान्धवा निःस्वास्तथा चातिथयोपरे ॥' देवयाज्ञिकनिबन्धे-'एकादशसु विप्रेषु प्रेतमावाह्य भोजयेत्। तत्राघ्राय च शय्यादि दद्यादाद्यमिति स्मृतम् ॥' विष्णुः-'एकवन्मन्त्रानूहेनैकोद्दिष्टे' बहुवचनान्तानेकवचनान्तान्वदेदित्यर्थः। एतत् दृष्टार्थत्वे ॥

---

१-'सर्वेभ्यः प्रेतवर्णेभ्यः पिण्डान्दद्याद्दशैव तु'। इति पारस्करोक्तपक्षे-'राज्ञस्तु दशमः पिण्डो द्वादशेहनि दीयते। वैश्यस्य पञ्चदशमे ज्ञेयस्तु दशमस्तथा ॥ शूद्रस्य दशमः पिण्डो मासे दीयते।' इत्यादिपुराणोक्त इत्यर्थः। इति टीका। २-अयं भावः-प्रायश एकसंवत्सर वायवीयः प्रेतदेहः, तदारम्भश्च शरीरारम्भकाधर्मविशेषः। पितृत्वप्राप्तिप्रतिबन्धकस्तद्देहभो खभोगनाश्यस्तदधर्मनाशार्थं दुःखभोगः। तदर्थं च प्रेतदेह आवश्यकः। तदुत्पत्त्यर्थं च पिण्ड मिति प्रेतदेहोत्पत्तिर्भवत्येव। एकादशादिश्राद्धानां पूर्णप्रेतशरीरनिवृत्तिः फलम्। 'यस्यैता दत्तानि प्रेतश्राद्धानि षोडश। पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि, इति यमोक्तेः। 'एकादशा

अस्य विघ्ने गौणकालमाह हेमाद्रौ बौधायनः:–'एकोद्दिष्टं श्व एव स्याद्वा-दशेहनि वा पुनः। अत ऊर्ध्वमयुग्मेषु कुर्वीताहःसु शक्तितः ॥ अर्धमासेथ वा मासि ऋतौ संवत्सरेपि वा।' इति । तत्रैव लघुहारीतः–'एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदहः समुपोषणम्' ॥ गोभिलः–'ब्राह्मणं भोजयेदाद्ये होतव्य-मनलेथवा । पुनश्च भोजयेदेकं द्विरावृत्तिर्भवेदिति ॥' एतदाद्यमासि काद्याब्दिकयोः सि-द्ध्यर्थमिति भट्टाः । तेन महैकोद्दिष्टं षोडशश्राद्धाद्भिन्नमेव । अत एवाद्यं सर्वैकोद्दिष्ट-प्रकृतिभूतमेकादश इति विज्ञानेश्वरः । अन्येत्वाद्यमासिकाब्दिकयोः 'आद्यमेकादशे-हनि' इति नियमादभेदमाहुः । द्वयोस्तन्त्रत्वबाधार्थं गालवीयमित्यन्ये । युद्धह-तादौ तु हेमाद्रौ पृथ्वीचन्द्रोदये पैठीनसिः–'सद्यःशौचेपि दातव्यं प्रेतस्यैका-दशेहनि । स एव दिवसस्तस्य श्राद्धशय्यासनादिषु ॥' एवमेकादशाहादौ । अतोऽत्र द्वितीयेह्न्येकादशाहं वदन् ढौण्ढुः शूलपाणिः स्मार्तगौडश्च परास्तः । एतेन 'आद्य-मेकादशेहनि' इत्याशौचानन्तरदिनपरमिति विष्णूक्तेः । प्रागुक्तशंखादिवचनानां चानाकरत्वादिति वदन्तः कल्पतरुवाचस्पतिप्रमुखाः सर्वमहानिबन्धविरोधादुपे-पेक्ष्याः । उशनाः–'त्र्यहाशौचेपि कर्तव्यमाद्यमेकादशेहनि । अतीतविषये सद्यस्त्र्य-होर्ध्वं वा तदिष्यते ॥'

याज्ञवल्क्यः–'एकोद्दिष्टं दैवहीनमेकार्घ्यैकपवित्रकम् । आवाहनाग्नौकरणरहितं त्वप-सव्यवत् ॥ उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने । अभिरम्यतामिति वदेयुस्तेभिरता स्महे ॥' इति । अग्नौकरणनिषेधोन्यपरः । बह्वृचानां सर्वैकोद्दिष्टेषु तद्भवत्येवेत्युक्त प्राक् । स्वदितमिति तृप्तिप्रश्न इति कात्यायनः । प्रथमे पात्रे संस्रवानित्यस्य तृतीये नापिधानस्य च बाधान्न पात्रन्युब्जतेति शूलपाणिः । प्रचेताः–'नात्र पात्रालम्भे नाशिषः प्रार्थयेत् ॥' अत्र विशेषो हेमाद्रौ वाराहे–'श्मश्रुकर्म तु कर्तव्यं नखच्छेद स्तथैव च । स्नपनाभ्यञ्जने दद्याद्विप्राय विधिपूर्वकम् ॥' तथा–'उपवेश्यासने भो छत्रं तत्र प्रकल्पयेत् । पश्चादुपानहौ दद्यात्सर्वाण्याभरणानि च ॥' विष्णुः–'दक्षिणान् श्राद्धमुक्त्वा दत्ताक्षय्योदकेषु चतुरङ्गुलपृथ्वीस्तावदन्तरालास्तावदधःखाता वितस्त्यायता स्तिस्रः कर्षूः कुर्यात् । कर्षूणां समीपेऽग्निमाधाय परिस्तीर्यैकैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय यमायाङ्गिरस्वते इति ॥' स्थानत्रये प्राग्व त्पिण्डनिर्वपणं दधिमधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्त इति जपेत् । शेषं नवश्राद्धवत् । अ साग्नेरप्यन्ते वैश्वदेव इत्युक्तं प्राक् । इदं दशाहकर्त्रा पुत्रेण वा कार्यमित्युक्तम् क्रिया नि

तद्भाण्डान्यपि भाजनम् ॥' विप्राभावेग्नावेकोद्दिष्टम् ॥ 'अग्नौ पायसं श्रपयि ज्यभागान्ते तदग्रे श्राद्धप्रयोगं कृत्वाग्नौ प्रेतमावाह्य गन्धाद्यैः संपूज्य पृ पात्रमित्यादिनान्नं संकल्प्योदीरतामवर इत्यष्टाभिश्चतुरावृत्ताभिर्द्वात्रिंशदाहुत पिण्डदानादिश्राद्धं समापयेत्' इति । **याज्ञवल्क्यः**–'एतत्सपिण्डीकरणमेक स्त्रियामपि ॥'

अथ **वृषोत्सर्गः** । स च नित्यः काम्यः । 'न करोति वृषोत्सर्गं सुतीर्थे वा ज अलिम् । न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥' उच्चारः पुरीषम् ॥ 'ए बहवः पुत्रा यद्येकोपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृ त्सृजेत् ॥' इति **मात्स्यकौर्मोक्तेः** । 'एकादशाहे प्रेतस्य नोत्सृज्यते वृषः । प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥' इति **षट्त्रिंश** निन्दाश्रुतेः । 'एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम् । यमुद्दिश्योत्सृजेन्नी लभेत परां गतिम् ॥ वृषोत्सृष्टः पुनात्येव दशातीतान्दशापरान् ।' इति **देवीपु भविष्यादौ** फलश्रुतेश्च । अयं द्वादशाहे उक्तो **भविष्ये**–'चैत्र्यां वापि तृतीय वैशाख्यां द्वादशोह्नि वा ।' इति । **विष्णुधर्मे**–तु मृताहेप्युक्तः–'विषुवद्वितये मृताहे बान्धवस्य च ।' इति । अयं गृहे न कार्यः । 'न गृहे मोचयेन्नीलं का न्पुष्कलं फलम् ।' इति **कालिकापुराणात्** । **कामधेनौ**–'वत्सराभ्यन्तरे पि वृषस्योत्सर्गकर्मणि । वृद्धिश्राद्धं न कुर्वीत तदन्यत्र समारभेत् ॥' तल्लक्षणं तु **ब्राह्** 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः । श्वेतः खुरविषाणाभ्यां स नीलो उच्यते' ॥ श्वेतवर्णस्य मुखादीनि श्यामानि श्यामस्य वा श्वेतानि यस्य सोपि **नील** उक्तो **मात्स्यादौ** । **देवीपुराणे**–'चतस्रो वत्सिका भद्रा द्वे वा संभवतोपि वा यत्तु पठन्ति 'वृषोत्सर्जनवेलायां वृषाभावः कथंचन । मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृ विमोचयेत् ॥ न शक्यते वृषोत्सर्गो होमं वा तत्र कारयेत् ।' इति तन्निर्मूलम् । ता **धिर्हेमाद्रौ भट्टकृतौ** च ज्ञेयः । अत्र **देवयाज्ञिकेन** वृषोत्सर्गात्पूर्वं **पुरुषसूक्तेन** विष्णु रूपिप्रेतोद्देशेनविष्णुतर्पणमुक्तम् । तत्र मूलं चिन्त्यम् ॥

वृषोत्सर्गनिर्णयः ।

**पारस्करः**–'सव्येन पाणिना पुच्छं समालम्ब्य वृषस्य तु । दक्षिणेनाप आदा सतिलाः सकुशास्ततः ॥ प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन् । वृष एष मया त्तस्तं तारयतु सर्वदा ॥ सहेम सतिलं भूमावित्युच्चार्य विनिक्षिपेत् ॥' **तथा**–'विध रयेन्न तं कश्चिन्न च कश्चन वाहयेत् । न दोहयेच्च वा धेनुं न ...

पयस्विनीम् ॥' पतिपुत्रयोः साहित्यं विवक्षितम् । अन्वारोहणेपि गोदानमेवन्त्युक्त प्राक् । आशौचान्तरेपि वृषोत्सर्गाद्यमासिकशय्यादि दद्यादेवेत्युक्तम् । क्रियानि बन्धे स्मृत्यन्तरे-'सूतके मृतके चैव द्वितीयं मृतकं यदि । पिण्डदानं प्रकुर्वीत वृषो त्सर्गं तथैव च ॥ न हन्यात्सूतके कर्म द्वादशैकादशाहिकम् ॥ शुद्धो वा यदि वाऽशुद्ध कुर्यादेवाविचारयन् ॥' इति ॥

अत्र पददानमुक्तं देवजानीये गारुडे एकादशाहं प्रक्रम्य-'तदह्नि दीयते मे द्वादशाहे विशेषतः । पदानि सर्ववस्तूनि वरिष्ठानि त्रयोदश ॥ यो दद्या मृतस्येह जीवतोप्यात्महेतवे । सुखी भूत्वा महामार्गं वैनतेय

पददाननिर्णयः ।

गच्छति ॥' तथा-'आसनोपानहौ छत्रं मुद्रिका च कमण्डलुः । भोजनं भोजनाधार वस्त्राण्यष्टविधं पदम् ॥' तथा-'भाजनासनदानेन मुद्रिकाभोजनेन च । आज्ययज्ञोपव तेन पदं संपूर्णतां व्रजेत् ॥ महिषीरथगोदानात्सुखी भवति निश्चितम् । सर्वोपस्कार क्तानि पदान्यत्र त्रयोदश ॥ यो ददाति मृतस्येह जीवन्नप्यात्महेतवे । स गच्छति स्थानं महाकष्टविवर्जितः ॥ त्रयोदशपदानीत्थं प्रेतायैकादशेहनि । दानव्यानि य शक्ति तेनासौ प्रीणितो भवेत् ॥ अन्नं चैवोदकं चैवोपानहौ च कमण्डलुः । छत्रं तथा यष्टिं लोहदण्डं दथाष्टमम् ॥ अग्नीष्टिकां च दीपं च तिलांस्ताम्बूलमेव च चन्दनं पुष्पदानं चोपदानानि चतुर्दश ॥ योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादये स्वमहिम्नोनुसारेण तत्तत्सुखमवाप्नुयात् ॥' इति । अत्र मूलं चिन्त्यम् ।

अथ शय्यादानम् । हेमाद्रौ भविष्ये-'तस्माच्छय्यां समासाद्य सारदारु दृढाम् । दन्तपत्राचितां रम्यां हेमपट्टैरलंकृताम् ॥ हंसतूलीप्रतिच्छ शुभदण्डोपधानिकाम् ॥ प्रच्छादनपटीयुक्तां गन्धधूपादिवासिता

शय्यादाननिर्णयः ।

तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम् ॥' अत्र हरिस्थाने प्रेतम् । 'उच्छी घृतभृतं कलशं परिकल्पयेत् । ताम्बूलं कुंकुमक्षोदकर्पूरागरुचन्दनम् ॥ दीपिकोपा छत्रं चामरासनभाजनम् । पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि ॥ श स्थस्य भवति यदन्यदुपकारकम् । भृङ्गारकरकाद्यं तु पञ्चवर्णवितानकम् । मन्त्र 'यथा न कृष्ण शयनं शून्यं सागरजातया । शय्या ममाप्यशून्यास्तु तथा ज निजन्मनि ॥ यस्मादशून्यं शयनं केशवस्य शिवस्य च ॥ अर्धं तदेव । 'द तस्य सकलं प्रणिपत्य विसर्जयेत् । एकादशाहेपि तथा विधिरेषः प्रकीर्तितः विशेषं चात्र राजेन्द्र कथ्यमानं निशामय । तेनोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजन

यद्यादिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् । तमेव पुरुषं हैमं तस्यां संस्थापयेत्तद्दा
यित्वा प्रदातव्या मृतशय्या यथोदिता ॥' पाद्मे-'मृतकान्ते द्वितीयेहि
दद्यात्सलक्षणाम् । काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् ॥ संपूज्य द्विजदांपत
मणिविभूषितम्। उपवेश्य तु शय्यायां मधुपर्कं ततो वदेत् ॥ रजतस्य तु पात्रेण व
समन्वितम् । अस्थि लालाटिकं गृह्य सूक्ष्मं कृत्वा सपायसम् ॥ भोजयेद्वि
विधिरेष सनातनः ॥ एष एव विधिर्दृष्टः पार्वतीयैर्द्विजोत्तमैः ॥' एतत्प्रतिग्र
वोक्तम्-'गृहीतायां तु तस्यां वै पुनःसंस्कारमर्हति ॥' शय्यादानफलं भविष्ये
पुरंदरपुरे सूर्यपुत्रालये तथा । सुखं वसत्यसौ जन्तुः शय्यादानप्रभावतः ॥ आ
यावत्तिष्ठत्यातङ्कवर्जितम्' इति ॥

उदकुम्भदाननिर्णयः ।

**अथोदकुम्भः** । **हेमाद्रौ स्मृतिसमुच्चये**-'एकादशाहात्प्रभृतिघटस्तै
युतः । दिनेदिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥' **लौग**
'यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् । मासिकं चोद
देयं तस्यापि वत्सरम् ॥' **उत्तरार्धे**-'तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं
इति **याज्ञवल्क्यपाठः** । सपिण्डनापकर्षेऽस्यापकर्षप्राप्ते बाधकमिदमिति **शूल**
स्तन्न । प्रकृतिविकाराभावेन तदन्तन्यायाविषयत्वात् । **मात्स्ये**-'यावदब्दं च य
दुदकुम्भं विमत्सरः । प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत् ॥' केचित्त्रयं
मारभ्याहुस्तन्निर्मूलम् । **दैवयाज्ञिकः**-'सपिण्डनापकर्षे संवत्सरं यावदुदकुम्भं
गेव दद्यात् नोर्ध्वम् । प्रेतलोकगतस्यान्नं सोदकुम्भं प्रयच्छत ।' इति **गो**
**राजधृतविष्णूक्तेः** । 'अन्नं चैव स्वशक्त्या तु संख्यां कृत्वाब्दिकावधि ।
ब्राह्मणे स्कान्दे घटादौ निष्क्रयं तु वा ॥ अपि श्राद्धशतैर्दत्तैरुदकुम्भं विना
दरिद्रा दुःखिनस्तात भ्रमन्ति च भवार्णवे ॥ तेनापकृष्य दातव्यं प्रेतस्याप्यु
कम्' । इति **गोभिलभाष्ये स्कान्दाच्च** सपिण्डनात्प्रागेव तस्य विधानादूर्ध्वं
धादित्याह तन्न । उदकुम्भे पार्वणविधिनानुपपत्तेरेवं व्याख्यायां **मानाभावा**
**क्षरादिविरोधाच्च** । वचनं च यदि समूलं तदा वृद्धावपकर्षं विधत्ते । 'प्रेतश्राद्ध
र्वाणि सपिण्डीकरणं तथा ।' इति । **हेमाद्रौ शाठ्यायनोक्तेः** । 'तस्याप्यन्न
कुम्भम्' इति **याज्ञवल्क्यविरोधाच्च** ॥

**मदनरत्ने गौतमः**-'अदैवं पार्वणं श्राद्धं सोदकुम्भमधर्मकम् । कुर्यात्प्र
काच्छ्राद्धात्संकल्पविधिनान्वहम् ॥' अधर्मकं ब्रह्मचर्यादिनियमहीनम् । एतन्

पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिण्डना ॥' इति । लघुहारीतोक्तावपि–'तस्या-
प्यन्नं सोदकुम्भं देयं संवत्सरं द्विजे' । इति याज्ञवल्कीये । तस्येत्येकत्वोक्तेः । सपि-
ण्डनोत्तरमप्येकोद्दिष्टमेवेत्याह । अत्र पिण्डदानं कृताकृतम् । 'अहरहरन्नमस्मै ब्राह्मणा-
योदकुम्भं च दद्यात्पिण्डमप्येके निपृणन्ति' इति **हेमाद्रौ पारस्करोक्तेः** । श्राद्धा-
शक्तौ पिण्डमात्रमिति **गौडास्तन्न** । अपिशब्दबाधापत्तेः । **हारीतः**–'मृते पितरि वै
पुत्रः पिण्डमब्दं समाचरेत् । अन्नं कुम्भं च विप्राय प्रेतनिर्देशधर्मतः ॥' प्रेतशब्दोच्चार-
णेनेति **हलायुधः** । यद्वा प्रेतस्य निर्देशो यत्र तदेकोद्दिष्टं तद्धर्मकमित्यर्थः । अत्राशौ-
चान्तदिनाद्यब्दान्तं यावद्वत्सरापूर्तेः शौचं नाधिकारिविशेषणम् । तेन मृतिदिनमारभ्य
तत्कार्यमिति **केचित्तन्न** । **हेमाद्रिधृतवचोविरोधात्** । मध्ये आशौचादिना बाधे
तु लोप एव दार्शवत् । तथा प्रथमाब्दे दीपदानमुक्तम् । **देवजानीये गारुडे**-
'प्रत्यहं दीपको देयो मार्गे तु विषमे नरैः । यावत्संवत्सरं वापि प्रेतस्य सुखलि-
प्सया ॥ प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये । कुर्याद्याम्यमुखं पित्र्ये अग्नि
संकल्प्य सुस्थितम् ॥'

**अथ मासिकानि** । तानि च कृत्वैव सपिण्डनं कार्यम् । तथा च **गोभिलले-
गाक्षी**–श्राद्धानि षोडशादत्त्वा नैव कुर्यात्सपिण्डनम् । श्राद्धानि षो-
शापाद्य विदधीत सपिण्डनम् ॥' तानि त्वाह **जातूकर्ण्यः**–'द्वाद

मासिकनिर्णयः ।

प्रतिमास्यानि आद्यं षाण्मासिकं तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येता
षोडश ॥' आद्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः ॥ **हेमा**
तु–'सपिण्डीकरणं चैव इत्येतच्छ्राद्धषोडशम् ।' इत्युत्तरार्द्धे पाठः । त
आद्यमूनमासिकं द्वादशाहे, षाण्मासिकम् ऊनषष्ठोनाब्दिके इत्यर्थः । **कात्-
यनस्त्वन्यथाह**–'द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा । सपिण्डीकरणं
इत्येतच्छ्राद्धषोडशम् ॥ एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः । न्य
संवत्सरश्चैव स्यातां षण्मासिके तदा ॥' द्विवचनादूनषष्ठोनाब्दिके । इत्यर्थः
**पृथ्वीचन्द्रः** । **व्यासस्त्वन्यथाह**–'द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके
श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः ।' द्वादशाहपदमूनमासिकपरं तस्य द्व
शाहेप्युक्तेरिति **कालादर्शः** । **मदनरत्ने ब्राह्मे** त्वन्यथोक्तम् । 'नृणां तु त्यक्तदेह
श्राद्धाः षोडश सर्वदा । चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥ ततो द्वादशभिर्मा

'नवश्राद्धानि श्राद्धानि न कृतानि

श्राद्धा द्वादश संख्यया ।' इति चतुर्थादीनि दिनानि । भविष्ये त्वन्यथ
'अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु । रिक्तयोश्च तथा तिथ्योः प्रेतश्
षोडश ॥' इति । रिक्तयोस्तिथ्योरित्यूनषष्ठोनाब्दिकपरमिति हेमाद्रिः । अ
कुलशाखाभेदाद्व्यवस्थेति सर्वनिबन्धाः ॥ गालवः-'ऊनषाण्मासिकं षष्ठे
प्यूनमासिकम् । त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा ॥' ऊनमासिके तु गो
'मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकम् ॥' मदनरत्ने कालादर्शे च
गौतमः-'एकद्वित्रिदिनैरूने त्रिभागेनोन एव वा । श्राद्धान्यूनाब्दिकादीनि कुर्या
गौतमः ॥' क्रियानिबन्धेऽक्तुस्तु-'सार्ध एकादशे मासे सार्द्धे वै पञ्चमे
ऊनाब्दमूनषण्मासं भवेतां श्राद्धकर्मणि ॥' इत्युक्तम् ॥' तत्र मूलं चिन्त्यम् ॥

ऊनेषु वर्ज्यान्याह मरीचिः-'द्विपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने
दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे ॥' ज्योतिषे-'त्रिपादर्क्षतिथिर्भद्रा भ
रविभिः सह । तदा त्रिपुष्करो योगो द्वयोर्योगे द्विपुष्करः ॥' गालवः-'
दिवसैरूने त्वेकेन द्वितयेन वा । आद्यादिषु च मासेषु कुर्यादूनाब्दिकादिकम् ।
न्यूनपक्षे पञ्चम्यां मृतस्य तृतीयायां त्रिभिर्न्यूने प्रतिपदि द्व्यूने द्वितीयायामिति
माधवस्तु-'षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते । मासिकानि स्व
दिवसे द्वादशेपि च ॥' इति पैठीनसिवाक्ये ऊनषाण्मासिकं सप्तममासगतमृत
वेद्युः कार्यम् । ऊनाब्दिकं तु द्वितीयाब्दे मृताहदिनात्पूर्वेद्युः कार्यमित्यर्थमाह । पू
ताहादित्यर्थः । 'मासिकानि स्वकीये तु दिवसे' इत्युक्तेः । इदमेव युक्तम् । मद
प्येवम् याज्ञवल्क्यः-'मृतेहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् । प्रतिसंवत्स
माद्यमेकादशेहनि ॥' अत्राद्यमासिकमाब्दिकं चैकादशेह्नीति निर्णयामृता
'ब्राह्मणं भोजयेदाद्ये होतव्यमनलेथ वा । पुनश्च भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति ॥
गोभिलीयं च तद्विषयमाहुः । अन्ये तु-'मासपक्षतिथिस्पृष्टे' इत्यादिविरोधाद
वर्षान्ते एव । मासिकं तु मासादौ । द्विरावृत्तिस्तु एकादशाहिकाद्यमासिकपरा ।
याज्ञिकोप्येवमाह । लौगाक्षिरपि-'मासादौ मासिकं कार्यमाब्दिकं वत्सरे
आद्यमेकादशे कार्यमधिके त्वधिकं भवेत् ॥' दीपिकायां तु-'आद्यं रुद्रमिते
मितदिने वा स्यात्' इत्युक्तम् । गौडास्तु मृततिथ्यवधिके एकदिनाधिके मास
रपदं गौणम् । पूर्णेब्दे इति ईषदसमाप्तपरत्वमिति शूलपाणिः । तेन द्वितीयादि
दावाद्यमासिकादीनि तन्मौर्ख्यकृतम् ॥

अशक्तौ तु **हारीतः**—'मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति । द्वादशाहेन भोज्या एकाहे द्वादशापि वा ॥' ऋतुं प्रति द्वेद्वे इत्यर्थः । यदा पितुर्मरणात्त्रयोविंशति दिने दर्शो वृद्धिर्वा स्यात्तदा द्वादशदिनेषु द्वादशमासिकानि कार्याणीत्यर्थः । त्रैपक्षि त्रिपक्षेतीते मृताहे कार्यम् । 'त्रैपक्षिकं भवेद्वृत्ते त्रिपक्षे तदनन्तरम् ।' इति **भविष्यो** इति **मदनरत्ने** उक्तम् । **पृथ्वीचन्द्रकालादर्शनिर्णयामृतादयस्तु**—'ऊनान्

मासेषु विषमाहे समेपि वा । त्रैपाक्षिकं त्रिपक्षे स्यान्मृताहे त्वितराणि तु' इति **काष्र्णाजिनिस्मृतेः** । पूर्वत्र वृत्ते प्रवृत्ते इत्यर्थमाहुः । ते तदनन्तरशब्द रोधात् त्रैपाक्षिकद्वितीयमासिकयोः संकरापत्तेरेवं व्याख्यायां मानाभावाच्चोपेक्ष्य त्रिपक्षसपिण्डने त्वेवंशब्दाभावादधिकरणत्वमेव ज्ञेयम् । यत्तु **क्रियानिबन्धे** ग डे—'त्रैपाक्षिकं त्रिपक्षे तु प्रवृत्ते विषमे दिने । मासिकान्यपि चोनानि अष्टाविंश दिने ॥' इति ॥ तन्निर्मूलम् ॥

**स्मृतिरत्नावल्याम्**—'द्वादशाहे यदा कुर्यात्पितुः पुत्रः सपिण्डनम् । एका कुर्वीत प्रेतश्राद्धानि षोडश ॥' **पैठीनसिः**—'सपिण्डीकरणादर्वाक् कुर्वन् श्रा षोडश । एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥ सपिण्डीकरणादूर्ध्वं कुर्यात्तदा पुनः । प्रत्यब्दं यो यथा कुर्य्यात्तथा कुर्यात्स तान्यपि ॥' **मदन** **कात्यायनः**—'श्राद्धमग्निमतः कार्यं दाहादेकादशेहनि । ध्रुवाणि तु प्रकुर्वीत प्रमीत सर्वदा ॥' ध्रुवाणि त्रैपक्षिकादूर्ध्वानि ॥ **क्रियानिबन्धे गारुडे**—'त्रिपक्षात साग्नेर्भवेत्संस्कारवासरे । ऊर्ध्वं मृतदिनेऽनग्नेः सर्वाण्येव मृताहतः ॥' एतानि च सपिण्डनात्पूर्वं युगपत्कुर्यात्तदा देशकालकर्त्रैक्ये तन्त्रत्वादेकः पाक इति केचि पाकभेद इति **भट्टचरणाः** । अत्र **केचिदाहुः**—देशकालकर्तृदैवतैक्यै तन् श्राद्धकालातिक्रमापत्तेः—'द्वादशाहेऽथ सर्वाणि संक्षेपेण समापयेत् ॥ तान्येव त कुर्यात्प्रेतशब्दं न कारयेत् ॥' इति **कात्यायनोक्तेः**। 'नैकः श्राद्धद्वयं कुर्यात् स ऽहनि कुत्रचित् ।' इत्यस्य दैवतैक्यपरत्वेप्यत्र तत्सत्त्वात् । 'श्राद्धं कृत्वा तु तस्यैव पुनः न कारयेत् ।' इति **जाबाल्युक्तेः** । षोडशसंख्यायाश्च वाजपेये प्राजापत्ययाग शत्ववत्सान्नाय्ययागद्वित्ववच्च दर्शपातसंक्रान्तिश्राद्धवद्युगपदनुष्ठानेप्युपपत्तेः । 'आद्य काद्यूनाब्दिकान्तेषु षोडशश्राद्धेषु च क्षणः क्रियताम्' इत्येवं प्रयोगेणैको विप्रः द्वयंश्चेति । **विरुद्धविधिविध्वंसेप्येवम्** तन्मन्दम् । 'द्वादशाहेन वा भोज्या द्वादशापि वा ।' इति **हेमाद्रौ हारीतवचोविरोधात्** । तेन विप्रभेदात् पिण्ड

एतानि द्वादशाहादौ सापिण्डनात्पूर्वं कृतान्यपि वृद्धिं विनापकर्षे पुनः स्वकाले क
णि । 'यस्य संवत्सरादर्वाक् सपिण्डीकरणं कृतम् । मासिकं चोदकुम्भं च देयं तस
वत्सरम् ॥' इति **मदनरत्नेऽङ्गिरसोक्तेः** । न चेदं मासिकानामपकर्षे विध
किंतु सापिण्डनोर्ध्वं स्वकालेनुष्ठानमेवेति वाच्यम् । 'श्राद्धानि षोडशादत्त्वा नतु कुय
पिण्डताम् ।' इति विरोधात् । 'यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता । विधिव
कुर्वीत पुनः श्राद्धानि षोडश ॥' इति **माधवीये गोभिलोक्तेश्च** । 'अर्वाक् सं
राद्यस्य सपिण्डीकरणं कृतम् । षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतमः ॥'
तत्रैव **गालवोक्तेः** । षोडशत्वं चैकादशाहासपिण्डनपक्षे तत्राद्यमासिकस्य का
त्वादन्यपक्षेषु यथासंभवं ज्ञेयम् ॥ यत्तु **दीपिकायाम्**—'अनुमासिकानि तु चे
न्येव सापिण्ड्यतः पश्चात् । द्वादश' इत्युक्तरूनानां न पुनः कृतिरित्युक्तं तदे
रोधाच्चिन्त्यम् । यत्तु **गौडाः**—'सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः ।'
**शातातपोक्तेर्मासिकानां** प्रेतत्वविमोक्षार्थत्वात्सपिण्डनापकर्षे तदन्तन्यायेन तेषाम
र्षान्मासिकानां न पुनः कृतिः । यत्तु 'मासिकं चोदकुम्भं च' इति **लौगाक्ष्या**
चनं तन्निर्मूलम् । समूलत्वेपि दार्शपरं चेत्याहुः । ते उक्तवक्ष्यमाणवचोनिबन्धवि
न्मूर्खा इत्युपेक्ष्याः । यत्तु **मिताक्षरायां** सापिण्डनोर्ध्वं स्वकाले एव कार्याणि
कर्षस्त्वनुकल्प इत्युक्तम् । तदपि पूर्वविरोधाच्चिन्त्यम् । तेन वृद्धिं विनापकर्षे
कृतिः । 'अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् । प्रेतत्वमिह तस्यापि ज्ञेयं सं
नृप' ॥ इत्य**ग्निपुराणात्** । वृद्धिनिमित्तापकर्षे त्वस्त्येव तन्निवृत्तिः । अन्यथा वृ
संभवादिति **शूलपाणिः** ॥

**कार्ष्णाजिनिः**—'सपिण्डीकरणादर्वागपकृष्य कृतान्यपि । पुनरप्यपकृ
वृद्ध्युत्तरनिषेधनात् ॥' निषेधं चाह **कात्यायनः**—'निर्वर्त्य वृद्धितन्त्रं तु मासिका
तन्त्रयेत् । अयातयामं मरणं न भवेत्पुनरस्य तु ।' इति । द्विरनुष्ठानं चोत्तरेषामे
पूर्वेषां स्वस्वकालकृतानाम् । तदाह **माधवीये कार्ष्णाजिनिः**—'अर्वागब्दाद्यत्र
सपिण्डीकरणं कृतम् । तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः ॥' **हेमाद्रौ**
**ठ्यायनिः**—'प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्तुं
न्दीमुखं द्विजः ॥' वृद्धिं विनापकर्षे दोषमाहो**शनाः**—'वृद्धिश्राद्धविहीनस्तु प्रे
द्धानि यश्चरेत् । स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥' इति । आधानेऽप
माह **हेमाद्रावुशनाः**—'पितुः सपिण्डीकरणं वार्षिके मृतिवासरे । आधानाद्युपसं

वेतरप्रागपि वत्सरात् ॥' विशेषस्तूक्तो विवाहनिर्णये । कण्वः—'नवश्राद्धं मासि च यद्यदन्तरितं भवेत् । तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥' गारुडेपि—'आपद्‌कृतं यत्तु कुर्यादूर्ध्वं मृताहनि ॥'

**अथ सपिण्डीकरणम्** । **माधवीये हारीतः**—'या तु पूर्वममावास्या मृतदशमी भवेत् । सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्॥' मृताहादूर्ध्वं दशमी एकादशीत्यर्थः । सपिण्डीकरणं कुर्यात्पूर्ववच्चाग्निमान्सुतः । परतो दशरात्राच्चेत्कुहूरब्दो परीतरः ॥' इति **कार्ष्णाजिनिस्मृतेः**। अहिताग्नेस्तेन विना श्रौतपिण्डपितृयज्ञासिद्धेः । तदाह **गालवः**—'सपिण्डीकरणात्प्रेते पितृपदमास्थिते । आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते' ॥ **मदनरत्ने प्रजापतिः**—'नासपिड्याग्निमान्न पुत्रः पितृयज्ञं समाचरेत्' । **अपरार्के कात्यायनः**—'एकादशं निर्वर्त्य पूर्वं दर्शाद्यथाविधि । प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डताम् । आशौचान्तप्रथमदर्शयोर्मध्ये कस्मिंश्चिदहनीत्यर्थः ॥ पित्रादीनां सपत्नीकानां देवतात्वेन मा... प्राग्दर्शात्सपिण्डनं युक्तमित्यपरार्कः । एवं पितामहादेरपि सपिण्डनं प्राग्दर्शात्का... तेन विना पार्वणायोगाद्द्वादशाहे वा कार्यम् ।'साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान्भवेत् । द्वादशाहे भवेत्कार्यं सपिण्डीकरणं सुतैः ॥' इति **गोभिलोक्तेः** । साग्नेः प्रेतस्य तु पक्षे 'प्रेतश्चेदाहिताग्निः स्यात् कर्तानग्निर्यदा भवेत् । सपिण्डीकरणं तस्य कुर्या... तृतीयके' इति **सुमन्तूक्तेः** । **मदनरत्ने लघुहारीतोपि**—'अनग्निस्तु यदा वीर... त्कुर्यात्तदा गृही । प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिण्डनम् ॥' द्वयोः साग्नित्वे द्वा... एव । 'साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान्भवेत् । द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः ॥' इति तेनैवोक्तेः ॥

द्वयोरनग्नित्वे तु **भविष्ये**—'सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् । अना... प्रेतस्य पूर्णेब्दे भरतर्षभ ॥ द्वादशाहानि षण्मासे त्रिपक्षे वा त्रिमासि वा । एकादशे मासि मङ्गलस्याप्युपस्थितौ ॥' **कात्यायनगोभिलौ**—'यदहर्वा वृद्धिरापद्यते । तत्र वृद्धिदिन एवेति **वाचस्पतिस्तत्र** । 'प्रातर्वृद्धिनिमित्तकम्' इति नियमात्स... नस्य चापराह्णकालीनत्वेन पूर्वत्वबाधापत्तेः । वृद्धिदिने तत्पूर्वदिने वेति **श्रीद... स्मार्तगौडस्तु**—'वृद्धिपूर्वो वर्षान्त्यश्च क्षणः सपिण्डनस्य प्रेतत्वनाशे सहकारी । परेद्युर्विघ्नाद्वृद्ध्यभावेऽपि तत्कर्तव्यतानिश्चयसहितमेव कालान्तरक्रियमाणवृद्धिपूर्व... सहकृतं प्रेतत्वनाशकम् इत्याह तन्न । अकाले कृतस्य फलाजनकत्वात् । एतेन

**पुलस्त्यः**—'निरग्निकः सपिण्डत्वं पितुर्मातुश्च धर्मतः । पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदह भवेत् ॥' **चतुर्विंशतिमते**—'सपिण्डीकरणं चाब्दे संपूर्णे ऽभ्युदयेपि वा । द्वादशाहे केषांचिन्मतं चैकादशे तथा ॥'

**पृथ्वीचन्द्रोदये बौधायनः**—'अथ सपिण्डीकरणं, त्रिपक्षे वा तृतीये वा मासि षष्ठे चैकादशे वा द्वादशे वा द्वादशाहे च' इति । एतत्प्रक्रमे **विष्णुः**—मासिकार्थं द्वादशाहं श्राद्धं कृत्वा त्रयोदशेऽह्नि वा कुर्यात् मन्त्रवर्ज्यं हि शूद्राणाम् । द्वादशेह्नि संवत्सराभ्यन्तरे यद्यधिमासो भवेत्तदा मासिकार्थं दिनमेकं वर्धयेत् ' इति आशौचोत्त द्वादशस्वहस्सु मासिकानि । तेष्वेवाद्यषष्ठद्वादशदिनेषूनमासिकादीनि कृत्वा त्रयोदशेह्नि सपिण्डनं कुर्यात् । अधिमासे तु चतुर्दशेह्नि कुर्यात् ॥ शूद्रस्त्रयोदशे द्वादशेऽह्नीत्यस्य मासिकान्त्यदिनपरत्वादिति पृथ्वीचन्द्रः **पैठीनसिः**—'संवत्सरान्ते संसर्जनं नवमे मासीत्येके ॥ ' अत्र साग्नेरनग्नेर्वोक्तकालाभावे त्रिपक्षादिसंवत्सरान्ता अनुकल्पा ज्ञेयाः । **कल्पतरुस्त्वग्रे** वृद्धिनिश्चय एव सर्वेऽपकर्षप्रकारा इत्याह । तन्न 'यदहर्वा' इति स्वातन्त्र्यश्रुतेः । यद्यपि वृद्धिनिमित्तोपकर्षो निरग्नेरेवोक्तः तथापि साग्नावपि ज्ञेयः । उक्तकालासंभवे वर्षान्तादिगौणकालवद्वृद्धेरपि प्राप्तेः । वक्ष्यमाण**गोभिल**वचनात् । 'अयातयामं मरणं न भवेत्पुनरस्य तु । ' इति दोषश्रुत्यविशेषाच्च । **अपरार्कपृथ्वीचन्द्रादिस्वर**-सोप्येवम् । अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरम् । सीमन्तादौ तु वृद्धिश्राद्धलोप एवेत्या**चार्यचूडामणिः** । पुंसवनाद्यन्नप्राशनान्तेष्वावश्यकेष्वपकर्ष इति **श्राद्धविवेकः** । **श्रुतसागरेपि बृहस्पतिः**—'प्रत्यवायो भवेद्यस्मिन्न कृते वृद्धिकर्मणि । तन्निमित्तं समाकृष्य पित्रोः कुर्यात्सापिण्डनम् ॥ ' गर्भाधानस्य त्वन्तरेपि संभवात् । 'अन्यश्राद्धं परान्नं च गन्धमाल्यं च मैथुनम् । ' इति **देवलेन** प्रथमाब्दे मैथुननिषेधाच्च न तत्रापकर्ष इति **श्राद्धकौमुद्यादयस्तन्न** ॥ 'ऋतुस्नातां तु यो भार्याम् । इति निषेधात् । 'ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ।' इति मैथुने दोषाभावाच्च । पितामहमरणे पौत्रस्य वृद्धौ नापकर्षः । तस्य महागुरुत्वाभावात् । तत्र तदूर्ध्वेभ्यो वृद्धिश्राद्धमिति **श्राद्धचन्द्रिका** । तन्न 'भ्राता च ' इत्यादौ तदभावेप्यपकर्षोक्तेः । तेन निर्देशोप्युपलक्षणम् ॥

**व्याघ्रः**—'आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते ॥ ' एतदाशौचान्तोपलक्षणम् ॥ 'सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम् ।' इति **निर्णयामृते कात्यायनोक्तेः** । ...

**निर्णयामृते गोभिलः**—'द्वादशाहादिकालेषु प्रमादादननुष्ठितम् । सपिण्डीकरण कुर्यात् कालेषूत्तरभाविषु ॥' इदं साग्नेरुक्तकालासंभवे गौणकालविधानार्थमिति **मदन पारिजातः । मदनरत्नेप्येवम्** । **ऋष्यशृङ्गः**—'सपिण्डीकरणं श्राद्धमुक्तकाले चेत्कृतम् । रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥' **कालादर्शेपि**—'एकाद द्वादशेह्नि त्रिपक्षे वा त्रिमासि वा । षष्ठे चैकादशे वाब्दे संपूर्णे वा शुभागमे ॥ सपिण्डी करणस्येत्थमष्टौ कालाः प्रकीर्तिताः । साग्नौ कर्तर्युभावाद्यौ प्रेते साग्नौ तृतीयकः । अनग्नेस्तु द्वितीयाद्याः सप्त काला मुनीरिताः । रोहिणीरौद्रहस्तेषु मैत्रभे वापि तच्चरेत् । **नारदसंहितायां** तु—'सपिण्डीकरणं कार्यं वत्सरे वार्धवत्सरे । त्रिमासे वा त्रिपक्षे व मासि वा द्वादशेऽह्नि वा ।' इत्युक्तम् तच्च । वत्सरेतीतेपि ज्ञेयम् । 'ततः सपिण्डीकरण वत्सरात्परतः स्थितम्' इति **भविष्योक्तेः** । 'पितुः सपिण्डीकरणं वत्सरादूर्ध्वत स्थितम्' इति **नागरखण्डोक्तेः** । 'पितुः सपिण्डीकरणं वार्षिके मृतवासरे ।' इत्यु **शनसोक्तेश्च** । 'पूर्णे संवत्सरे पिण्डः षोडशः परिकीर्तितः । तेनैव च सपिण्डत्वं तेनै वाब्दिकमिष्यते ।' इति **हेमाद्रौ** वचनाच्च । अस्यानाकरत्वोक्तिर्मूर्खोक्तिरेव । यत्तु 'पूर्णे संवत्सरे कुर्यात् सपिण्डीकरणं सुतः । एकोद्दिष्टं च तत्रैव मृताहनि समापयेत् ॥ इति **धवलनिबन्धे जाबाल्युक्तेः** । 'पुत्रः सापिण्डनं कृत्वा कुर्यात्स्नानं सचैलकम् एकोद्दिष्टं ततः कुर्यात् कुतपं न विचारयेत् ॥' इति **स्वल्पमात्स्योक्ते**श्चाब्दिकं तद्दि पुनः कार्यमिति केचित् । ते निर्मूलत्वा**द्धेमाद्रि**विरोधाच्चोपेक्ष्याः । षोडशत्वं सपिण्डनस्य षोडशश्राद्धान्तर्भावपक्षे । **स्मृत्यर्थसारे** तु वर्षान्त्यदिने संवत्सरविमोक्ष श्राद्धं सापिण्डनं च कृत्वा परेद्युर्मृताहे वार्षिकं कार्यमित्युक्तम् । **गौडा** अप्येवमाहुः तत्पूर्वविरोधाच्चिन्त्यम् ॥

तच्च पुत्रे सति नान्यः कुर्यात् । 'श्राद्धानि षोडशादत्त्वा नतु कुर्यात्सपिण्डताम् प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥' इति **वायवीयोक्तेः** । षोडशश्राद्धान वर्षादूर्ध्वं कालाभावेपि तान्यदत्त्वा न कुर्यात् । किंतु दत्त्वैव । तानि यदि कनिष्ठभ्रात्र दिना कृतानि तदा सपिण्डनमेव कुर्यादित्य**परार्कः** ॥ सपिण्डने तु कनिष्ठान नैवाधिकार इत्यर्थः । **तत्रैव**—'अज्ञानादथ वा मोहान्न कृता चेत्सपिण्डता । तत्रा विधिवत्कार्या कालादपि चिरादपि ॥' तेष्वपि ज्येष्ठस्यैवाधिकारः । 'ज्येष्ठेन जातम त्रेण पुत्री भवति मानवः ।' इति **मनूक्तेः** । **अपरार्के प्रचेता** अपि—'एशादकाद्य कृत्यो ज्येष्ठस्तु विधिवत्क्रियाः । कुर्यात्त्वेकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक् ।

भवेत् ॥' यत्तु वाचस्पतिशूलपाणिभ्यामुक्तं द्रव्यदानानुमत्यभावे कनिष्ठैः पृ र्यमिति तन्न । एवकारस्य तदभावेपि पृथक्करणाभावार्थत्वात् । अन्धादेरिव ज्येष्ठे कनिष्ठानामनधिकाराच्च । अतस्तेषां प्रत्यवायमात्रम् । आहिताग्निः कनिष्ठस्तु कुर्या अन्यथा पितृयज्ञासिद्धेः । एवमावश्यकवृद्धावपि । कनिष्ठोन्यः सपिण्डो वा कुर 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च । सहपिण्डक्रियां कृत्वा कुर्याद ततः ॥ तथैव काम्यं यत्कर्म वत्सरात्प्रथमाहृते ।' इति मदनरत्ने लघुहारीत चनात् । वृद्ध्यनन्तरं प्रथमाब्दमध्येऽपि काम्यं कुर्यात् वृद्ध्यभावे तु प्रथमाब्दादू त्यर्थः । काम्योक्तेरनावश्यकेष्टापूर्तादौ नापकर्षः । एतद्भ्रातृपुत्रादिसंस्कारे प्राप्ता ग्स्य नान्दीश्राद्धाधिकारार्थम् अभ्युदयपदं च नान्दीश्राद्धनिमित्तकर्ममात्रप हेमाद्रिः । तेन ज्येष्ठे देशान्तरस्थे कनिष्ठः सपिण्डनं विनैव वृद्धिं कृत्वा पुत्रसं कुर्यादिति श्रीदत्तोक्तिः परास्ता । भ्रातृशिष्याद्युक्तेर्नान्दीश्राद्धेज्यदेवतामात्र पकर्ष इत्यपास्तम् । अस्य क्रममात्रपरत्वाद् वृद्धिकर्तैव सपिण्डनं कुर्यादिति न इति गौडाः । अत एव कन्याया मातृमरणे भ्रात्रा सपिण्डने कृते पितुर्दानाधिका

शूलपाणिस्तु–'महागुरौ प्रेतभूते वृद्धिकर्म न युज्यते ।' इति निषेधात् । भ्रात्रादिः सपिण्डनं कृत्वा तत्पुत्रकन्यादेरभ्युदयं कुर्यान्न तु स्वपुत्रसंस्कारे संस्व पितुः सपिण्डनं विना वृद्धौ देवतात्वाभावादित्याह तन्न देवताप्रयुक्तापकर्षस्य स्तत्वात् वृद्धिंविना कनिष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यम् । 'यवीयसा कर्म प्रेतशब्दं विहाय तु । तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः ॥' इति स्मृ 'ज्येष्ठेन वा कनिष्ठेन सपिण्डीकरणे कृते ।' आद्यपादे 'मातापित्रोः कनिष्ठेन' इति पाठः । 'देशान्तरगतानां च पुत्राणां तु कथं भवेत् । श्रुत्वा तु वपनं कार्यं दशा तिलोदकम् ॥ ततः सपिण्डीकरणं कुर्यादेकादशेऽहनि । द्वादशाहे न कर्तव्यमिति श तपोब्रवीत् ॥' इति वचनाच्चेति भट्टाः । सिंगाभट्टीयेप्येवम् । पूर्ववचनेऽ मूलं चिन्त्यम् । स्मृत्यर्थसारे तु–'विभक्ता ऋद्धिकामाश्चेत्पुत्राः पृथक्सपिण्डीक कुर्युः' इत्युक्तम् । अत्र दत्तकस्य तत्पुत्रादीनां विशेषः प्रागुक्तः । केचित्तु वृद्धिं विन कनिष्ठस्य सपिण्डनमाहुः । 'मातापित्रोर्मृतेः काले ज्येष्ठे देशान्तरस्थिते । कनिष्ठेन क र्तव्यं सपिण्डीकरणं तथा ॥' इति कार्ष्णाजिनिस्मृतेः । 'गते वा रोधिते ज्येष्ठे वा प्रेषिते सति । षण्मासान्न निवर्तेत तदा कार्यं कनीयसा ॥' संवर्तः–पुनः सपि

करणं श्राद्धं पार्वणवच्चरेत् । अर्घ्यसंयोजनं नैव पिण्डसंयोजनं न च ॥' इति तेषां वचस्
निर्मूलत्वात् । प्रोषितावसिते पुत्रे' इत्यादिविरोधाच्चोपेक्ष्याः ॥

व्युत्क्रममृतौ ।

**व्युत्क्रममृतौ तु हेमाद्रौ ब्राह्मे**–'मृते पितरि यस्याथ विद्यते च पितामहः । ते
देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः । तेभ्यश्च पैतृकः पिण्डो नियोक्त
व्यस्तु पूर्ववत् । मातर्यथ मतायां च विद्यते च पितामही ॥ प्रपि
तामही पूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥' एवं प्रपितामहजीवने । तत्पित्रादिभिर्ज्ञेयम्
तदाह **सुमन्तुः**–'त्रयाणामपि पिण्डानामेकेनापि सपिण्डने । पितृत्वमश्नुते प्रेत इ
धर्मो व्यवस्थितः ॥' यत्तु–व्युत्क्रमात्तु प्रमीतानां नैव कार्या सापिण्डता ।' इति तन्माल
पितृभर्तृभिन्नविषयम् । 'व्युत्क्रमेण मृतानां न सपिण्डीकृतिरिष्यते । यदि माता य
पिता भर्ता नैष विधिः स्मृतः ॥' इति **माधवीये स्कान्दोक्तेः मदनरत्नादे**
चैवम् । अत्र 'प्रपितामहादिभिः पितुः सपिण्डने कृते पितामहे मृते तत्सपिण्डने स
पुनस्तेन सह पितुः सपिण्डनं कार्यम् ।' इति **हेमाद्रिमतमाह** । अन्ये नैतन्मन्यन्ते
तत्त्वं तु पितुः सापिण्डनाभावे पितामहेन सह पुनः कार्यं, न तत्सत्त्वे । 'त्रयाणाम
पिण्डानामेकेनापि सपिण्डने । पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थितः ॥' इ
**विष्णुधर्मोक्तेः** । पितामहे प्रपितामहे वा पुत्रान्तरैरसंस्कृतेप्यसंस्कृताभ्यामेव पि
सपिण्डनं कुर्यात् । 'असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकैः । पितरं तत्र संस्कुर्य
इति कात्यायनोब्रवीत् ।' इति **छन्दोगपरिशिष्टात्** । असंस्कृतौ दाहाद्यौरीति के
चित् । असपिण्डीकृताविति तु तत्त्वम् ॥ अत एवोक्तं तत्रैव 'पापिष्ठमपि शुद्धेन शु
पापकृतापि वा । पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥' पापिष्ठमकृतसपिण्डनं न
पतितादि । 'अभिशस्तपतितभ्रूणघ्नाः स्त्रियश्चातिचारिणीर्न संसृजेत' इति **बैजवापोक्ते**
'पापकर्मिणो न संसृजेरन्' इति **गौतमोक्तेश्चेत्युक्तं निर्णयामृते** ॥

पूर्वयोः पुत्राभावे तु पौत्रः कुर्यादेव । 'पितामहः पितुः पश्चात्पञ्चत्वं यदि गच्छति
पौत्रेणैकादशाहादि कर्तव्यं श्राद्धषोडशम् । नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः
पितुः सपिण्डतां कृत्वा कुर्यान्मासानुमासिकम् ॥' इति **कात्यायनोक्तेः** । **अ**
**रार्के शूलपाणौ** चैवम् । तेन सपिण्डनस्यानित्यत्वादकृतसपिण्डनयोरेव पार्वणा
प्रवेश इति मूर्खोक्तिः परास्ता । 'कृते सपिण्डीकरणे प्रेतः पार्वणभाग्भवेत् ।' इ
हारीतविरोधाच्च । केचित्पुत्रान्तराभावे पितामहवार्षिकमप्याहुस्तन्न । श्राद्धषोडशमि

पितृमृतौ तदाशौचं वहन्नेव पौत्रः पितामहकर्म कुर्यात्प्रक्रान्तत्वादिति म
जातपृथ्वीचन्द्रौ । यत्तु-'उत्तरात्रितयरौद्ररोहिणीयाम्यसर्पपितृभेषु चाग्निभे
कर्म सकलं च वर्जयेत्प्रेतकार्यमपि बुद्धिमान्नरः ॥' इति सपिण्डनप्रकरणे पा
काले निषिद्धर्क्षे सपिण्डनापकर्षः । सर्वकालेषु तद्वत्त्वे तद्वर्ज्यान्येव । पूर्वोक्तत्र
नि षोडशश्राद्धानि कार्याणीति वाचस्पतिमिश्रास्तन्न । अस्य प
वाक्यात्सावकाशकर्मपरत्वात् । अस्य प्रेतमात्रदैवत्यभावाच्च ॥

अथ स्त्रीषूच्यते । हेमाद्रौ बृहस्पतिः-'भर्तृगोत्रेण नाम्ना च मातुः
पिण्डनम् ॥' यत्तु भविष्ये-'पितृगोत्रं समुत्सृज्य न कुर्याद्भर्तृगोत्रतः ।'

स्त्रीणां सापिण्डननिर्णयः । सुरादिविवाहोढापरम् । 'आसुरादिविवाहेषु पितृगोत्रेण धर्मवि
वृद्धशातातपोक्तेः । तच्चानेकवचनेषु पितामह्याः पत्या
वा सहोक्तम् । तत्र व्यवस्थोक्ता भविष्ये-'जीवत्पिता पितामह्या मातुः कुय
नम् । प्रमीतपितृकः पित्रा तत्पित्रा पुत्रिकासुतः ॥' तत्पित्रा मातुः पित्रा ।
क्षिः-'पितामह्यादिभिः सार्धं मातरं तु सपिण्डयेत् । पितरि ध्रियमाणे तु
सति ॥' शंखः-'मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः । पितामह्यादि
सपिण्डीकरणं स्मृतम् ॥' येन केनापि मातुः सापिण्ड्ये यत्रान्वष्टकादौ म
पृथगुक्तं तत्र पितामह्या सह कार्यम् । 'नान्दीमुखेऽष्टकाश्राद्धे गयायां च
पितामह्यादिभिः सार्धं मातुः श्राद्धं समाचरेत् ॥' इति शातातपोक्तेः ।
तु पैठीनसिः-'अपुत्रायां मृतायां तु पतिः कुर्यात्सापिण्डनम् । श्व
सहैवास्याः सपिण्डीकरणं भवेत् ॥' यत्तु लघुहारीतः-'पुत्रेणैव तु कर्तव्यं
करणं स्त्रियाः । पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोपि ये' ॥ इति । यच्च
यपुराणे-'सपिण्डीकरणं स्त्रीणां पुत्राभावे न विद्यते ।' इति । तत्पुत्रपत्यभावे
अत्र सपत्नीपुत्रोपि ज्ञेयः । 'बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्व
पुत्रेण प्राह पुत्रवतीर्मनुः ।' इति मनूक्तेरेतत्परत्वात् । यत्तु शातातपः-'मृते पित
न कार्या सहपिण्डता । पितुरेव सपिण्डत्वे तस्या अपि कृतं भवेत् ॥' इति ।
रम् । केषांचिद्वा मतमिति हेमाद्रिः ॥

अन्वारोहणे तु भर्त्रैव सापिण्ड्यम् । 'मृता यानुगता नाथं सा तेन सह
अर्हति स्वर्गवासं च यावदाभूतसंप्लवम्' ॥ इति शातातपोक्तेः । 'पत्या चैके
सपिण्डीकरणं स्त्रियाः । सा मृतापि हि तेनैक्यं गता मन्त्राहुतिव्रतैः' ॥ इति य

यदा माधवपृथ्वीचन्द्रादिमते पृथक्पिण्डस्तदैकेन पत्यैकवचनाच्चैकेनापि । अ
मातृपिण्डमसपिण्डीकृतेनैव पतिपिण्डेन संयोज्यैकीकृतं पिण्डद्वयं तत्पित्रादिभिः संय
जयेत् । अन्त्यपक्ष एव युक्तः । **स्मृत्यर्थसारे** तु –'अन्वारोहणेनैकदिनमरणे स्त्रिय
पृथक्सपिण्डनं नास्ति । भर्तुः कृते स्त्रिया अपि कृतं भवति' । इत्युक्तम् । तन्मतान्त
मस्तु । इदं ब्राह्मादिविवाहेषु ज्ञेयम् ॥

आसुरादिषु तु **शातातपः**–'तन्मात्रा तत्पितामह्या तच्छ्वश्र्वा वा सपिण्डनम् । आ
रादिविवाहेषु विन्नानां योषितां भवेत् ॥' मातामह्या मातुः पितामह्या तत्प्रपितामह
चेत्यर्थः । **सुमन्तुः**–'पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः । माता माताम
तद्वदित्याह भगवाञ्छिवः ॥' इदमासुरादिपरं पुत्रिकापुत्रपरं चोक्तं प्राक् । **हेमाद्रि**
ब्राह्मादिष्वपि सर्वत्र देशभेदाद्विकल्पमाह । अतः गुर्जरेषु **कोकिलमतानुसारि**
मातृमातामहप्रमातामहा इति श्राद्धप्रयोगः सपिण्डनं च दृश्यते । **हेमाद्रावापस्त**
**म्बोऽपि**–'कोकिलस्य यथा पुत्रा अन्यसंचयजीविनः । पुष्टास्ते स्वकुलं यान्ति एवं ना
मृता सती ॥' यदपि **विज्ञानेश्वरो** मातामहेन मातुः सापिण्ड्येन पितृश्राद्धवन्म
तृश्राद्धं नित्यमित्याह । यच्च वृद्धिश्राद्धे **छन्दोगपरिशिष्टम्**–'षड्भ्यः पितृभ्यस
दनु श्राद्धदानमुपक्रमेत् ।' इति तदेतद्विषयमेव । मातुः पृथक् श्राद्धाभावात् । अत
**हेमाद्रौ भविष्ये** । मातुः सपिंडनं प्रक्रम्य–'उदितेनुदिते चैव होमभेदो यथा भवेत्
तथा कुलक्रमायातमाचारं च चरेद् बुधः ॥' इत्युक्तम् । अस्य वृद्धावपवादमाह त
**व्याघ्रपात्**–'कुर्यान्मातामहश्राद्धं सर्वदा मातृपूर्वकम् । विधिज्ञो विधिमास्थाय वृ
मातामहादिवत् ॥' केचिदेतत्पुत्रिकापुत्रपरमाहुः ॥

**पत्युः सापिण्ड्यमाह लौगाक्षिः**–'सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम्
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च ॥' इति । **यत्तु वचनम्**–'अपुत्रस्य परेत
नैव कुर्यात्सपिण्डताम् ।' इति । **यच्चापस्तम्बः**–'अपुत्रा ये मृताः केचित्पुरुषा
स्त्रियोऽपि वा । तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम् ॥' इति तत्पुत्रोत्पादनवि
प्रशंसार्थमिति **माधवः** । 'सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते । अपुत्राणां
सर्वेषामपत्नीनां तथैव च ॥' इति **हेमाद्रौ प्रचेतसोक्तिश्च** । अन्ये तु द्विविधवाक्यद
नाद्विकल्पमाहुः । **स्मृत्यर्थसारेऽपि**–'ब्रह्मचारिणामनपत्यानां च सपिण्डनं नास्ति, ते
सदैकोद्दिष्टमेव, व्युत्क्रममृतानां सापिण्ड्यं कार्यं न वा । केचित्सर्वत्र सपिण्डनमा

रिति । अपुत्रे व्युत्क्रममृते विशेषो रेणुकारिकायाम्-'भ्राता वा भ्रातृपुत्रे
शिष्य एव वा । सापिण्डीकरणं कुर्यात् पुत्रहीने मृते सति ॥ सर्वबन्धुवि
कुर्यात्सापिण्डताम् । ऋत्विजं कारयेद्वापि पुरोहितमथापि वा ॥ वसुरुद्रादिति
तेषां सापिण्डता । व्युत्क्रमाच्च प्रमीता ये तद्विना प्रेतता ध्रुवम्॥ पुनः सपिण्ड
त्प्रेते पितामहे।इति । अत्र मूलं मृग्यम् । यतीनां सपिण्डनं नास्ति किंत्वेका
कार्यम् । तदपि त्रिदण्डिनः । एकदण्ड्यादीनां तदपि नेत्युक्तं प्राक् । द
मृते तु दाहादिसपिण्डनान्तं सर्वं कार्यमिति भट्टचरणाः ॥

**सपिण्डनविधिमाह बैजवापः**-'समाप्ते संवत्सरे चत्वार्युदपात्राणि

सपिण्डनविधिः ।

एकं प्रेताय, त्रीणि पितृभ्यः। प्रेतपात्रं पितृपात्रेष्वासिंचाति
इति । द्वाभ्यामेवं पिण्डोथाभिमृशति । 'एष वोनुगतः प्रे
ददामि वः । शिवं भवतु शेषाणां जायन्तां चिरजीविनः ॥' समानीव
संवदध्वम् ।' इति । यद्यपि-'तच्चापि देवरहितमेकार्घ्यैकपवित्रकम् । नैव
तच्चावाहनवर्जितम्' ॥ इति **मार्कण्डेयेनोक्तं** तथापि-'सपिण्डीकरणं
पूर्वं नियोजयेत् ।' इत्यादिविरोधाद्विकल्पः, प्रेतांशे वा ज्ञेयम् । अत्र कामका
वपीत्युक्तं प्राक् । **मैत्रायणीयपरिशिष्टे**'पित्र्यविप्रकरे होमः साग्नेर
यत्तु **गोभिलः**-'अनुक्तकालेष्वापि तु व्युत्क्रमेण मृतावपि । आमेन वा
हेम्ना वापि प्रकल्पयेत् ॥' इति तदापदि मातापितृभिन्नपरम् । 'आपन्नोऽ
श्राद्धमामेन कर्हिचित् ।' इति तेनैवोक्तेः । **शुद्धितत्त्वे कामधेनौ** च ल
'सपिण्डीकरणं यावत्प्रेतश्राद्धं तु षोडशम् । पक्वान्नेनैव कर्तव्यं सामिषेण द्वि
**विश्वप्रकाशे**-'प्रेतः सपिण्डनादूर्ध्वं पितृलोकेनुगच्छति । कुर्यात्तस्य तु पा
ह्नि सपिण्डनात् ॥' **स्मृत्यर्थसारेप्येवम्** । ततो वृद्धिश्राद्धं कुर्यात् । ए
कार्यम् । 'अधिमासे न कर्तव्यं श्राद्धमाभ्युदयं तथा । तथैव काम्यं यत्कर्म
माहते' ॥ इति **हेमाद्रौ हारीतोक्तेः** ।

**इति भट्टकमलाकरकृते निर्णयसिन्धौ सपिण्डीकरणम्**

---

-दिति व्याख्यापक्षे कार्यम् । अन्यथाव्याख्यायां तु न कार्यम् । साचेत्थम्-व्युत्क्रममृ

**अथ प्रथमाब्दे निषिद्धानि । हेमाद्रौ**—'स्नानं चैव महादानं स्वाध्यायं चाग्नितर्पणम् । प्रथमेऽब्दे न कुर्वीत महागुरुनिपातने ॥' अग्नितर्पणं लक्षहोमादि । नत्वाधानम् । तत्तु प्रथमाब्दे भवत्येव । तदाह **हेमाद्रावुशनाः**—'पितुः सपिण्डीकरणं वार्षिके मृतवासरे । आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात् ॥' अन्यतर्पणमिति **शुद्धितत्त्वे पाठः** । आदिपदं वृद्धिनिमित्तनित्यकर्मपरम् । **दिवोदासीये**—'महातीर्थस्य गमनमुपवासव्रतानि च । संवत्सरं न कुर्वीत महागुरुनिपातने ॥' इदं **श्राद्धकौमुद्यां देवीपुराणस्थमुक्तम् । गौडनिबन्धे मात्स्ये**—'सपिण्डीकरणादूर्ध्वं प्रेतः पार्वणभुग्भवेत् । वृद्धीष्टापूर्तयोग्यश्च गृहस्थश्च सदा भवेत् ॥' वर्षान्तसपिण्डनाभावे नाधिकारीत्यर्थः । गृहस्थः सपिण्डोपरीत्यर्थः । अत एव—'प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् । आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥' इति **ज्योतिषे** उक्तम् । **माधवीये देवलः**—'प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत् । न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः ॥' इदं वर्षान्तसपिण्डनपरम् । 'तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते ।' इति **लघुहारीता**द्येकवाक्यत्वात् । वृद्धिनिमित्तापकर्षे तु काम्यादि भवत्येवेति **गौडाः** । पित्र्यं सपिण्डनम् । अत एव **लौगाक्षिः**—'अन्येषां प्रेतकार्याणि महागुरुनिपातने । कुर्यात्संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत् ॥' दाहाद्येकादशाहान्तं कार्यम् । तत्राशौचान्तरस्याप्रतिबन्धकत्वात् । 'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि ।' इत्युक्तेश्च । एकं सपिण्डनम् ॥

प्रथमाब्दनिषिद्धनिर्णयः।

पत्न्यादौ त्वपवादमाह **माधवीये ऋष्यशृङ्गः**—'पत्न्याः पुत्रस्य तत्पुत्रभ्रात्रोस्तत्तनयेषु च । स्नुषास्वस्रोश्च पित्रोश्च संघातमरणं यदि ॥ अर्वागब्दान्मातृपितृपूर्वं सापिण्ड्यमाचरेत् ॥' **लौगाक्षिः**—'पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रका अपि । पितरौ च यदैकस्मिन् म्रियेरन्वासरे तदा ॥ आद्यमेकादशे कुर्यात्त्रिपक्षे तु सपिण्डनम् ॥' **धवलनिबन्धे**—'महागुरुनिपाते तु प्रेतकार्यं यथाविधि । कुर्यात्संवत्सरादर्वागेकोद्दिष्टं न पार्वणम् ॥' **भृगुः**—'माता चैव तथा भ्राता भार्या पुत्रस्तथा स्नुषा । एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः ॥' एतदपि सपिण्डनपरम् । पितुर्मृतावन्यस्य श्राद्धं न चरेदित्यर्थः । **शुद्धितत्त्वे देवलः**—'अन्यश्राद्धं परान्नं च गन्धमाल्यं च मैथुनम् । वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः ॥' **पारस्करभाष्ये बृहस्पतिः**—'पितर्युपरते पुत्रो मातुः श्राद्धान्निवर्तते । मातर्यपि च वृत्तायां पितृश्राद्धादृते समम् ॥' समं पितरं पितृवत्श्राद्धं नेत्यर्थः । शुद्धितत्त्वे देवलः—'महागुरुनिपाते तु काम्यं किंचिन्न चाच-

रेत् । आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं देवक्रियां तथा ॥' एतत्सपिण्डनात्प्रागिति
तदुत्तरमपीत्यन्ये । **श्राद्धकौमुद्यां कालिकापुराणे** पूर्वार्द्धे–'विशेषतः
प्रमीतपितृको नरः । यावद्वत्सरपर्यन्तं मनसापि न चाचरेत् ॥' केचित्तु–'
शौचं स्यात्षण्मासं मातुरेव च । त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृ
इति स्मृतेः सापत्नमातुरब्दार्धमाहुः । **श्राद्धकौमुदीकारस्तु**–'द्वयोरेव
रब्दमेकमशौचकम् । नान्येषामधिकाशौचं स्वजातिविहितात्किल ॥' इ
**जातूकर्ण्यविरोधान्निर्मूलमाह । हेमाद्रौ भविष्ये**–'गयाश्राद्धं मृतान
त्वब्दे प्रशस्यते ॥' **त्रिस्थलीसेतौ गारुडे**–'तीर्थश्राद्धं गयाश्राद्धं श्
पैतृकम् । अब्दमध्ये न कुर्वीत महागुरुविपत्तिषु ॥' इदं वृद्ध्यर्थसपिण्डनाभ
सपिण्डनापकर्षेऽब्दमध्येपि दर्शादि कार्यमेव । 'पितुः सपिण्डनां कृत्वा कुर्
मासिकम् । ' इति **छन्दोगपरिशिष्टात्** । 'सपिण्डीकरणादूर्ध्वं प्रेतः पार्वण
इति **मात्स्यात्** । 'ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते । विन्दते पि
ततः श्राद्धं प्रवर्तते ॥ ' इति **हारीताच्चेति शूलपाणिः** । यत्तु **कातीय**
ण्डीकरणादूर्ध्वं न दद्यात्प्रतिमासिकम् । एकोद्दिष्टविधानेन दद्यादित्याह शौ
इति । तत्रैकोद्दिष्टविधिना न दद्यादित्यन्वयः । तुर्यपादेन पार्वणे विकल्प
**ब्रह्मवैवर्ते**–'उद्वाहश्चोपनयनं प्रथमेऽब्दे महीपते । कृते सपिण्डनेप्यूर्ध्वमस्थ
रणं त्यजेत् । तथापि कर्तुमिच्छन्ति त्रीणि चैतानि वै सुताः । मासिकान्
चापकृष्य चरेत्पुनः ॥ '

**अत्रेदं तत्त्वम्** ॥ वृद्धिं विनार्वागपि सपिण्डनापकर्षे पितृत्वप्राप्तिर्वर्षा
'कृते सपिण्डीकरणे नरः संवत्सरात्परम् । प्रेतदेहं परित्यज्य भोगदेहं प्रपद्य
**विष्णुधर्मोक्तेः** । 'अर्वाक्संवत्सराद्यस्य सपिण्डीकरणं भवेत् । प्रेतत्वम
विज्ञेयं वत्सरं नृप ॥ ' **इत्यग्निपुराणाच्च** । तेन तत्सत्त्वेऽपि वृद्धिर्दैवपित्र्येष्
वृद्धिनिमित्ते त्वनन्तरमेव । 'अर्वाक्संवत्सराद्वृद्धौ पूर्णे संवत्सरेपि वा । ये स
प्रेता न तेषां तु पृथक् क्रिया ॥ ' इति **शातातपोक्तेः** । तथैव काम्यमिति
**धृतहारीतादिवशाच्चैवमिति** । तथा–'अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरप
प्रथमेऽब्दे न कुर्वीत कृते पितुः सपिण्डने ॥' **अस्यापवादः**–'अस्थिक्षेपं
श्राद्धं चापरपक्षिकम् । प्रथमेऽब्देपि कुर्वीत यदि स्याद्भक्तिमान्सुतः ॥ '

**अथ विधानानि** । तत्र पञ्चकमृते **मदनरत्ने गारुडे**—'आदौ कृत्वा धनिष्ठार्धमेतन्नक्षत्रपञ्चकम् । रेवत्यन्तं सदा दूष्यमशुभं दाहकर्मणि ॥ शवस्य च समीपे तु क्षेप्तव्याः पुत्तलास्तदा । दर्भमयास्तु चत्वार ऋक्षमन्त्राभिमन्त्रिताः ॥ ततो दाहः प्रकर्तव्यस्तैश्च पुत्तलकैः सह । सूतकान्ते ततः पुत्रैः कार्यं शान्तिकपौष्टिकम् ॥ पञ्चकेषु मृतो यो वै न गतिं लभते नरः । तिलांश्चैव हिरण्यं च तमुद्दिश्य घृतं ददेत् ॥' **क्रियानिबन्धे**—'भाजनोपानहौ छत्रं हैममुद्रां च वाससी । दक्षिणा दीयते विप्रे सर्वपातकमोचनी ॥' **मदनरत्ने गार्ग्यः**—'यदि भद्रातिथीनां स्याद्भानुभौमशनैश्चरैः । त्रिपादर्क्षैश्च संयोगो द्वयोर्योगे द्विपुष्करः ॥ द्वित्रिपुष्करयोगे तु मृतिर्मृत्यन्तरावहा । दहने मरणे चैव त्रिगुणं स्यात्त्रिपुष्करे ॥ खननेप्येवमेव स्यादेतद्दोषोपशान्तये । तिलपिष्टैर्यवैर्वापि शरीरं कारयेत्ततः ॥ शूर्पे निधायालंकृत्य दाहयेत्पैतृकोपरि ॥' तद्दाहे मन्त्रमाह **बौधायनः**—'अस्मात्त्वमिति मन्त्रेण तिलपिष्टं प्रदाहयेत् । द्वित्रिपुष्करयोर्दोषस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥ वासवे मरणं चेत्स्याद्गृहे वापि पुनर्मृतिः । सुवर्णं दक्षिणां दद्यात्कृष्णवस्त्रमथापि वा ॥' वासवं धनिष्ठा । **ब्राह्मे**—'कुम्भमीनस्थिते चन्द्रे मरणं यस्य जायते । न तस्योर्ध्वगतिर्दृष्टा संततौ न शुभं भवेत् ॥ न तस्य दाहः कर्तव्यो विना शास्त्रेषु जन्तुषु । अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् ॥ धनिष्ठापञ्चके जीवो मृतो यदि कथंचन । त्रिपुष्करे याम्यभे वा कुलजान्मारयेद्ध्रुवम् ॥ तत्रानिष्टविनाशार्थं विधानं समुदीर्यते दर्भाणां प्रतिमाः कार्याः पञ्चोर्णासूत्रवेष्टिताः ॥ यवपिष्टेनानुलिप्तास्ताभिः सह शवं दहेत् । प्रेतवाहः प्रेतसखः प्रेतपः प्रेतभूमिपः ॥ प्रेतहर्ता पञ्चमस्तु नामान्येतानि च क्रमात् ॥' अत्र प्रतिमा गन्धपुष्पैः पूजयित्वा प्रथमां शिरसि । द्वितीयां नेत्रयोः । तृतीयां वामकुक्षौ । चतुर्थीं नाभौ । पञ्चमीं पादयोर्न्यस्य तदुपरि नामभिर्घृतं हुत्वा—यमाय सोमं त्र्यम्बकमिति मन्त्राभ्यां प्रत्येकं तास्वाज्यं हुनेदिति **भट्टाः** । सूतकान्ते ततः पुत्रः कुर्याच्छान्तिकपौष्टिकम् । कांस्यपात्रस्थितं तैलं वीक्ष्य दद्याद्द्विजन्मने ॥ ब्रह्मविष्णुमहेशेन्द्रवरुणप्रीतये ततः । माषमुद्गयवव्रीहिप्रियंग्वादि प्रयच्छति ॥ स्वर्णदानं रुद्रजाप्यं लक्षहोमो द्विजार्चनम् । गोभूदानं षडंशेन कुर्याद्दोषोपशान्तये ॥

**अपरार्के**—'धनिष्ठापञ्चकमृते पञ्चरत्नानि तन्मुखे । प्रास्याहुतित्रयं तत्र हुनेद्धव्यपामिति ॥ ततो निर्हरणं कुर्यादेष साग्नेर्विधिः स्मृतः । इतरं निखनेदेव जले वा प्रतिपादयेत् त्रिपादर्क्षमृते तद्वद्धिरण्यशकलं मुखे । तस्य पिष्टमयं कुर्यात्पुरुषत्रितयं ततः ॥ होमं

तथा-'एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम् । नवषट्त्रिपलं वापि
शक्तितः ॥' तथान्यत्र-'स्वगृह्योक्तविधानेन कृत्वाग्नेः स्थापनं ततः
निर्वपणं देवतानां तथाहुतिः ॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च
कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने । वृकोद
चित्रगुप्ताय वै क्रमात् ॥ विधिना श्रपणं कृत्वा एकैकामाहुतिं हुनेत् । कृष्ण
वस्त्रं च हेमनिष्कसमन्वितम् ॥ दद्याद्विप्राय शान्ताय प्रीतो भवतु मे यमः ।
प्येतदेव । अपरार्के-'पुनर्वसूत्तराषाढा कृत्तिकोत्तरफाल्गुनी । पूर्वाभाद्रा
ज्ञेयमेतत्त्रिपाद्भम् ॥' मयूरचित्रे गर्गः-'मृतः श्मशानं यो नीत उपजीव
गृहे यस्य प्रविष्टोऽसौ तिष्ठेदथ कदाचन ॥ अचिरान्मृत्युमायाति हृतदारप
शान्तिं प्रवक्ष्यामि धर्मराजमतं यथा । सक्षीराणां घृताक्तानामग्नेर्हुत्वा मुखे बु
दुम्बरीणां विधिवत्ततः शान्तिः कृता भवेत् । सावित्र्यष्टसहस्रेण क्षीरशान्तिं च
कपिलां तिलकांस्यं च हुतांते भूरिदक्षिणा ।' इति ॥

**अथ ब्रह्मचारिमृतौ शौनकः**-'ब्रह्मचारिमृतौ रीतिं कथयामि समास
कीर्णदोषस्य प्रायश्चित्तं प्रशान्तये ॥ द्वादशाब्दं षडब्दं वा त्र्यब्दं शक्त्याथव
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि ॥ संयोज्य च
संयोज्यौ तौ ततः परम् ॥' देशकालौ स्मृत्वा

अथ ब्रह्मचारिमृतौ ।

त्राऽमुकनाम्नो मृतस्य ब्रह्मचारिणो व्रतविसर्गं करिष्ये' इत्युक्त्वा हेम्ना
श्राद्धं कृत्वाग्निं प्रतिष्ठाप्याघारान्ते चतसृभिर्व्याहृतिभिरग्नये व्रतपतये
ष्ठानसंपादनाय विश्वेभ्यो देवेभ्यश्चाज्यं हुत्वा स्विष्टकृदादि समाप्य पु
स्मृत्वार्कविवाहं करिष्ये इत्युक्त्वा हेम्ना नान्दीश्राद्धं कृत्वार्कशाखां
हरिद्रया लिप्त्वा पीतसूत्रेण वस्त्रयुग्मेन चावेष्ट्याग्निं प्रतिष्ठाप्याघारान्तेऽग्नये
विवाहविधियोजकाय च यस्मै त्वं काम कामायेति कामाय व्याहृतिभिश्च
स्विष्टकृदादि समाप्यार्कशाखां शवं च दहेत् । **विधानमालायाम्**-'
ब्रह्मचारी निधनं प्राप्नुयाद्यदि । तत्कुलं क्षयमाप्नोति सोऽपि दुर्गतिमाप्नुयात्
म्रियमाणस्य षडब्दं व्रतमादिशेत् । त्रिंशद्भ्यो ब्रह्मचारिभ्यो दद्यात्कौपीनक
हस्तमात्रान्कर्णमात्रान्दद्यात्कृष्णाजिनानि च । पादुकाछत्रमाल्यानि गोपी
च ॥ मणिप्रवालमालाश्च भूषणादि समर्पयेत् । एवं कृते विधाने च विघ्नः
जायते ॥' अत्र मूलं मृग्यम् ॥

गगायां प्रक्षिपेत्सुधीः । मासिमासि ततः कुर्यान्मासि श्राद्धानि पार्वणात् ॥ इत्येतत्कुष्ठिमरणे कथितं शास्त्रकोविदैः ॥' **शुद्धितत्त्वे भविष्ये**—'शृणु कुष्ठिगणं विप्र उत्तरोत्तरतो गुरुम् । विचर्चिका तु दुश्चर्मा चर्चरीयस्तृतीयकः । विकर्चूर्व्रणताम्रौ च कृष्णश्वेते तथाष्टकम् ।' इत्युक्त्वा—'मृते तु प्रापयेत्तीर्थमथवा तरुमूलकम् । न पिण्डं नोदकं कार्यं न च दानक्रियां चरेत् ॥ षण्मासीयत्रिमासीयमृतः कुष्ठी कदाचन । यदि स्नेहाच्चरेद्दाहं यतिश्चान्द्रायणं चरेत ॥' अकृतप्रायश्चित्तकुष्ठ्यादिदाहे इदं प्रायश्चित्तम् । अत एव कुनख्यादिवत्कुष्ठिनोपि द्वादशरात्रं **शूलपाणिनोक्तम्** । अत एवान्यदीयकुष्ठिनो मरणान्तमाशौचमुक्तम् । **कौर्मे**—'क्रियाहीनस्य मूर्खस्य महारोगिण एव च । यथेष्टाचरणस्याहुर्मरणान्तमशौचकम् ॥' **महारोगास्तु**—'वांतव्याध्यश्मरीकुष्ठमेहोदरभगंदराः । अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः ॥' इति ॥

रजस्वलामृतौ ।

**रजस्वलायास्तु वृद्धशातातपः**—'रजस्वलायाः प्रेतायाः संस्कारादीनि नाचरेत् ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्मेण दाहयेत् ॥' अतः प्रक्षाल्य काष्ठवद्ग्ध्वा त्र्यहोर्ध्वं दहेत् । संकटे तु **मदनरत्ने स्मृत्यन्तरे**—'उदक्या सूतिका वापि मृता स्याद्यदि तां तदा । आशौचे त्वनतिक्रान्ते दाहयेदन्तरा यदि ॥ उद्धृतेन तु तोयेन स्नापयित्वा तु मन्त्रतः । आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः ॥ पवमानानुवाकेन यदंतीति च सप्तभिः । ततो यज्ञपवित्रेण गोमूत्रेणाथ ते द्विजाः ॥ स्नापयित्वाऽन्यवसनेनाच्छाद्य शवधर्मतः । दाहादिकं ततः कुर्यात्प्रजापतिवचो यथा ॥' यज्ञपवित्रमापो अस्मानिति **मिताक्षरायाम्**—'पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् । वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥' **गृह्यकारिकायाम्**—'अन्तरिक्षमृता ये च वह्नावप्सु प्रमादतः । उदक्या सूतिका नारी चरेच्चान्द्रायणत्रयम् ॥ ततो यवपिष्टेनानुलिप्याष्टोत्तरशतं शूर्पोदकैः संस्नाप्य भस्मगोमयमृत्कुशोदकपञ्चगव्यशुद्धोदकैरापोहिष्ठापावमानीभिः संस्नाप्यान्यवस्त्रे धृते दहेदिति **भट्टाः** ॥

**अत्र प्रायश्चित्तमाह बौधायनः**—'उदक्यासूतिकामृत्यौ चरेच्चान्द्रायणत्रयम् ।' इति सूतिकायास्तु **मिताक्षरायाम्**—'सूतिकायां मृतायां तु कथं कुर्वन्ति याज्ञिकाः । कुम्भे सलिलमादाय पञ्चगव्यं क्षिपेत्ततः ॥ पुण्यद्भिरभिमन्त्र्याथो वाचा शुद्धिं लभेत्ततः । तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥ अब्लिङ्गाभिर्मन्त्रिताभिर्वामदेव्याभिरेव च । अन्यैश्च वारुणैर्मन्त्रैः संस्नाप्य विधिना दहेत् ॥' **गृह्यकारियाम्**—'सूतिका-

त्रिरात्रे न तु सा नारी द्विवर्षं कृच्छ्रमाचरेत् ॥' इदं द्वितीयत्र्यहे । 'सूतिका तु यदा स
विस्नाता मरणं गता । अब्दं कृच्छ्रेण शुद्ध्येत व्यासस्य वचनं यथा ॥' इदं तृतीयत्र्
अत्राशक्तौ पक्षान्तरमुक्तं तत्रैव । 'सूतिका तु यदा नारी विस्नाता मरणं गता । त्रिष
वर्दिनादर्वागेकाब्देन विशुद्ध्यति ॥' ऊर्ध्वं तु—'सूतिका तु यदा नारी प्राणांश्चैव
त्यजेत् । मासमेकावधि यावत्त्रिभिः कृच्छ्रैर्विशुद्ध्यति ॥

गर्भिणीमृतौ मदनरत्ने शौनकः—'गर्भिण्युदक्यासंस्कारं शिशुसंस्कारमेव
प्रवक्ष्यामि समासेन शौनकोऽहं द्विजन्मनाम् ॥ गर्भिणीमरणे प्राप्ते गोमूत्रेण जलैः स
आपोहिष्ठादिभिर्मन्त्रैः प्रोक्ष्य भर्ता समास्थितः ॥ प्रेतं श्मशाने नीत्वाऽथोल्लिख्य स
दरं ततः । पुत्रमादाय जीवंश्चेत्स्तनं दत्त्वा सुताय तु ॥ यस्ते स्तनः शशय इत्यृचा
निधाय च । उदरं चाव्रणं कुर्यात्पृषदाज्येन पूर्य च ॥ मृद्भस्मकुशगोमूत्रैरापोहिष्ठ
भिस्त्रिभिः । स्नाप्य चाच्छाद्य वासोभिः शवधर्मेण दाहयेत् ॥' तत्रैव **षडशीति**
**गद्यानि**—'गर्भिण्यां मृतायां दक्षिणाशिरसं निधाय तस्या नाभिरन्ध्रात्सव्यमुदरं चतु
हिरण्यगर्भः समवर्ततेति छित्त्वा गर्भश्चेदप्राणस्तं प्रक्षाल्य निखनेत्स यदि जीवन् ।
त्वं मम पुत्रक । इत्युक्त्वा क्षेत्रियेत्वेति पञ्चभिः स्नापयित्वा हिरण्यमन्तर्धाय भूमौ नि
व्याहृतिभिरभिमन्त्र्य यस्ते स्तनः शशय इति स्तनं पाययित्वा शिशुं ग्रामं प्रापयेत् ।
च्छेदस्थले शतायुधायेति पञ्चाहुतीर्हुत्वा प्राणाय स्वाहा पूष्णे स्वाहेत्यनुवाका
व्याहृत्या वाज्यं हुत्वा भिन्नमुदरं सूत्रेण संग्रथ्य घृतेनानुलिप्य ब्राह्मणाय तिलान्गां
सुवर्णं दद्यादथ यथोक्तेन कल्पेनेन दहेत् ॥' **बौधायनेन** तु शतायुधायेति पञ्चहो
नन्तरं प्रयासाय यासाय वियासाय संयासायोद्यासाय शुचे शोकाय तप्यते तपत्यै ब्र
इत्याद्यै सर्वस्मै इति स्वाहान्तैराहुतयोऽप्यधिका उक्ताः । **गृह्यकारिकायाम्**—'यदा गर्भ
नारी सशल्या संस्थिता भवेत् । कुक्षिं भित्त्वा ततः शल्यं निर्हरेद्यदि जीवति ॥ प्र
निखनेत्तं तु प्रायश्चित्तमतः परम् । सा त्रयस्त्रिंशता कृच्छ्रैः शुद्ध्यते शल्यदोषतः
सगर्भदहने तस्या वर्णजं वधपातकम् । प्रायश्चित्तं चारित्वा तु शुद्ध्यन्ति पापकारिणः
दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत् ॥

'अथान्वारोहणं स्त्रीणामात्मनो भर्तुरेव च' । सर्वपापक्षयकरं निरयोत्तारणाय च
अनेकस्वर्गफलदं मुक्तिदं च तथैव च । जन्मान्तरे च सौभाग्यध

स्त्रीणामन्वारोहणम् ।

पुत्रादिवृद्धिदम् ॥' देशकालौ स्मृत्वाऽरुन्धतीसमाचारत्वस्वर्गलो
महीयमानत्वमनुष्यलोमसमसंख्याब्दावच्छिन्नस्वर्गवासभर्तृसहित...

